श्रीआगमोदयसमितिग्रन्थोद्धारे ग्रथाक ५०

श्रीमन्मलधारगच्छीयहेमचन्द्रसूरिनिर्मितवृत्तियुत वलभीयपारम्पर्यविमुक्त

# श्री-जीवसमास-प्रकरणं

प्रकाशक:—झवेरी जीवनचद साकरचद अस्या एक कार्यवाहकः

मुद्रयिता—इन्दौर जैनवन्धु मुद्रणालय

प्रति १००० वीरसवत २४५४ विक्रमसवत् १९८४ क्राइस्ट सन १९२७ पण्य रु.

# जीवसमासेलघ्वीविषयानुक्रमणिका



—*—

## अथ जीवसमासे बृहद्विषयानुक्रम

इति जीवसमासः

—※—

# श्रीजीवसमासस्योपोद्घातः

सम्प्रुपादीयतामिद पूर्वधराचार्यवर्यविहित यथार्थ जीवसमासाभिधान प्रकरण, विवरीतारश्चास्य पूर्वमप्यभुवन् केऽप्याचार्यसिन्धुराः यतः अत एवैनान् पूर्वटीकाकारा इत्थमाहुरित्येव ४७ गाथावृत्तौ प्रकृतटीकाकाराः स्मरयन्ति, प्रकृता च व्याख्या श्रीमन्निर्हर्षपुरीयगच्छाम्बरनभोमणिभिः श्री हेमचन्द्रसूरिभि प्रणायि, श्रीमन्तो हेमचन्द्रसूरयश्च त एवेमे ये श्रीविशेषावश्यकभाष्य अनुयोगद्वाराणि च व्याख्ययाऽलचक्रु', चक्रुश्च स्वोपज्ञव्याख्यायुतां भवभावना पुष्पमाला चेति प्रतीतमेव प्रतिभावतां, किंच–श्रीमतां शिष्यवर्येण श्रीश्रीचन्द्राचार्येण विहिते श्रीमुनिसुव्रतचरित्रेऽपि श्रीमतां किंचिद् वृत्त प्रसाधित तत् तत एवावधार्यं, श्रीमन्तश्च द्वादशशताब्द्यां वैक्रमीयाया सत्तावन्त., यतःप्रकृतग्रन्थप्रशस्तौ वीरदेवाचार्यान् श्रीमन्मुनिचन्द्राचार्यांश्च स्मरन्ति एते, ते च द्वादशशताब्दीत' परतो न, किन्तु प्रागेव, यतः श्रीमुनिचन्द्रसूरयो हि सप्तत्यधिकवर्षसहस्रेषु दिव गताः, किंच श्रीमतां शिष्यवर्याः श्रीश्रीचन्द्राचार्याः श्रीमुनिसुव्रतस्वामिना चरित्र त्रिनवत्यधिकैकादशशताब्द्या चक्रुः, ततोऽपि निस्सशयमेतत् यतः श्रीमन्तो द्वादशशताब्दीभाविन , आस्तामन्यत्-स्वयमपि च श्रीविशेषावश्यकवृत्तौ 'शरदां च पचसप्तत्यधिकैकादशशतेष्वतीतेषु । कार्त्तिकसितपंचम्यां श्रीमज्जयसिंहनृपराज्ये ॥१॥' इति श्लोकेन ख्याति स्वीया सत्तां द्वादशशताब्द्या, किंच-श्रीमद्भिर्विवृतेषु कृतेषु च ग्रन्थेषु दशसु विवरणमिद षष्ठ, अत्र वृत्तौ नास्ति हायनानां सख्यैतद्विधानकालदर्शिका,अन्ये तु चतुष्पष्ट्यधिकान्येकादश शतान्याहुः,सुगमचिच तत्,यतो विशेषावश्यकवृत्तौ "स्वकृताना ग्रन्थव्रजानामेव क्रमनिर्देश व्यधु पूज्याः- मया परमपुरुषस्योपदेश श्रुत्वा निरचय्य झटिति निवेशितमावश्यक-

परमपि शतकविवरणनामकम्, अन्यदपि अनुयोगद्वारवृत्तिसंज्ञितं, ततोऽटिप्पनिकाभिधानं सद्भावनामंजूषायां नूतनफलकं, ततोऽपरमपि शतकविवरणनामकम्, अन्यदपि अनुयोगद्वारवृत्तिसंज्ञितं, ततोऽपरमप्युपदेशमालासूत्राभिधानम्, अपरं तु तद्वृत्तिनामकम्, अन्यच्च जीवसमासविवरणनामधयेम्, अन्यत्तु भवभावनासूत्रसंज्ञितम्, अपरं तु तद्विवरणनामकम् ,अन्यच्च झटिति विरचय्य तस्याः सद्भावनामञ्जूषाया अंगभूतं निवेशितं नन्दिटिप्पनकनामधेयं नूतनदृढफलकम् , एतैश्च नूतनफलकैर्निवेशितैर्वज्रमयीव संजाताऽसौ मंजूषा तेषां पापानामगम्या, ततस्तैरतीव छलघातितया संचूर्णयितुमारब्धं तद्द्वारकपाटसंपुटं, ततो मया ससंभ्रमेण निपुणं तत्प्रतिविधानोपायं चिन्तयित्वा विरचायितुमारब्धं तद्द्वारपिधानहेतोर्विशेषावश्यकविवरणाभिधानं वज्रमयमिव नूतनकपाटसंपुटं, ततश्चाभयकुमारगणि--धनदेवगणि--जिनभद्रगणि--लक्ष्मणगणि--विबुधचन्द्रादिमुनिवृन्दश्रीमहानन्दश्रीमहत्तरावीरमतीगणिन्यादिसाहाय्यात् समस्तमपि विलक्षीभूतं तत्सैन्यं निलीनं च सनायकमेव" स्पष्टं चातो जीवसमासविवरणरूपा षष्ठा कृतिः कृतिनां, किंच-श्रीमतामेतासु दशसु कृतिषु नन्दिवृत्तिटिप्पनकं तावदलभ्यमेव, यतो यल्लभ्यते नन्दिटिप्पनकं तत्तु धर्मघोपाचार्यपादकमलमकरन्दचंचरीकायमानश्रीश्रीचन्द्राचार्यनिर्मितमास्ति न तु श्रीमद्भिः सूत्रितमित्यन्वेष्यमेव मेधाविभिरेतत्, शेपास्तु नवापि कृतयोऽनवा अपि नवा इव जाग्रति जैनशासनामृतरसपीपासितानां, नचेमान्यसंभवीनि पूर्वोक्तानि वर्षाणि अस्यां विधाने यतः सप्तम्या भवभावनायाः कृतिस्तत्प्रस्तावनातः सप्तत्याधिकैकादशसु शतेषु अवसीयते, प्राक् चेदमदृम्भिषुर्विवरणं, ततो यथायथमेतत्, आस्तामनुमानं, स्वयमेव प्रथमादर्शे लिखिता पुस्तिकाऽस्या अस्ति स्तम्भतीर्थे तद्वर्षाङ्कवतीति न संदेहलेशोऽत्र, परं पुष्पमालायाः सविवरणाया एतत्प्राग्निष्पादिताया अपि पंचसप्तत्यधिकैकादशताब्दी उद्घुष्यते सा कथं श्रद्धीयतां ?, विशेपावश्यकक्रमस्य तदन्यथाभूतत्वात्, न चेत् स पाठः क्रमदर्शकस्तदा भवेदेवं, परमस्माकं स क्रमदर्श-

कतया प्रतिभातीति । अवधार्यं तावद्धीधनैर्यदुत जीवसमासाख्यं प्रकरणमिद पूर्वभृद्भिर्विहित यत आख्यान्ति प्रकरणकारा उपसहारगाथाया दृष्टिवादगतपदार्थदर्शकतामेतस्य, पर ते सूरिपुङ्गवा' कदा अभूवन् किमभिधानाश्च ते इति न ज्ञायते, पर प्रामाणिकप्रकाण्डास्ते इति तु निर्णीयते, यतः ३०-३६-३५ ६९ ७३ ७८ ८०-८२-११५-१५३-१५७ १५८ १७५-१८४-१९४-१९७-१९९ प्रभृतिगाथासु पृथ्वीभेदक्रमादीनां सिद्धान्ताभिहितक्रमादेरन्यथात्वेऽपि न टीकाकारेण दूषितान्येतद्ग्रन्थगतानि वाक्यानि, श्रीविजयसेनसूरिभि' सेनप्रश्नेऽपि द्वितीयोल्लाससत्कद्वापष्टितमे तुर्योल्लाससत्कद्वादशे च प्रश्ने एतत्प्रकरणगत वचनमनूदित मतान्तततरतया न तु दूषितं, श्रीविनयविजयोपाध्यायैस्तु लोकप्रकाशे शतशोऽनूदितमेतत् मूलप्रकरण, यत एव ततो विसवादो दृश्यतेऽत्र बहुषु स्थानेषु सिद्धान्तवाक्यै सह पर न तत्रानास्था श्रद्धावता, यत केवलादिगम्येषु पदार्थेषु अर्वाग्दर्शिभिरन्यतम' सत्यतया निर्णेतु शक्यो नेति पदार्थ द्वयमपि व्याख्येयमेवेति । किंच-प्रकरणस्यास्य विवरणादेतस्मात् प्रागप्यभूता द्वे वृत्ती, यतः श्रीमद्भिरेव ४७ तमगाथावृत्तौ 'मूलवृत्तिकृते'ति स्पष्टमेवाख्यात, स्वकृतविवरणमपेक्ष्य स्यात् तस्या वृत्तेर्मूलवृत्तित्व पर१५८गाथावृत्तौ "एतद्गाथायामर्वाचीनटीकाकार आह, तद्यथा-मूलटीकाया न व्याख्याता, अस्माक त्वयमर्थः प्रतिभासते,-व्याख्यानमर्वाचीनटीकाकारकृत दर्शित" मिति स्पष्टमुल्लेखस्य दर्शनात् अभूता द्वे वृत्ती अस्य इतः प्राक् इत्यत्र न कोऽपि संदेहः, पर न काप्युपलभ्येते न चोल्लिखिते अपि अन्यत्र दृश्येते, स्याता चेत्कस्यापि विदुष पार्श्वे ज्ञाप्या समितिरिय यतस्तयोरपि यथायथ प्रचार' स्यात् । प्रकरणमिद सवृत्तिकं प्राक् श्रीमद्धरगोविंददासोत्त्या कलिकत्ताया मुद्रयितुमारब्ध पर तस्य मुद्रणालयाधिपेन रूप्यका. प्रचुरा श्रीमद्धरगोविन्ददासैर्दापिता गृहीत्वा न कृत मुद्रण पूर्णमिति श्रीजैनबन्धुप्रेसमुद्रणालये पूर्णीकारितमेतदिति पत्रान्यथात्वेऽक्षरद्वैविध्ये चानुपाया वयमिति-

ज्ञापयन्ति आनन्दसागराः ॥ संवद्वेदाष्टनागेलामितेऽब्दे श्रावणे सिते । तृतीयायां शनौ चक्रुरेनमानन्दसागराः ॥ १ ॥ निरस्य केशरीयाख्ये तीर्थे तीर्थमलिम्लुचः । नग्नान् विघ्नकरान् राजादेशात् दण्डक्रियां व्यधुः ॥ २ ॥ ते निर्बन्धेन सङ्घस्य स्थिता उदयपत्तने । किञ्चिज्जीवसमासस्योपोद्घातं ह्यलिखन्नमुम् ॥ ३ ॥

## शुद्धि पत्रम्

पृष्ठ ९१ पंक्ति ८—अष्टभिः परमाणु भिरेक ऊर्ध्वरेणुः-भवतीत्यर्थ.

पृष्ठ ९८ पंक्ति १३—रत्निरत्वेक्तो.

पृष्ठ ९९ पंक्ति ८—० तत्वादेव तदिह.

पृष्ठ १०० पंक्ति ८—० विष्कम्भा सहस्राङ्गुलदीर्घा च प्रमाणाङ्गुलसूची जायते, इद मुक्तं भवति-अर्धतृतीयोत्सेधांगुलविष्कम्भे प्रमाणाङ्गुले तिस्रः-श्रेणयः कल्प्यन्ते एका उत्सेधाङ्गुलेनाङ्गुलविष्कम्भा, शतचतुष्टयदीर्घा च-द्विती.

पृष्ठ १०१ पंक्ति ६—ततः-श्रेण्यादयो भवन्ति तथाहि असंख्येयगुणेन प्रमाणाङ्गुलयोजनैरित्यर्थः- अनु०



'समासतः' सङ्क्षेपत 'अनुक्रमिष्यामि' भणिष्यामीतिसम्बन्ध, जीवसमासाश्चेह चतुर्दश गुणस्थानकान्यवसेयानि, मिथ्यादृष्टिसास्वादनादिभेदतस्तैरपि समस्तजन्तुसङ्ग्रहाद्, एतदेव सूचयतेद विशेषणमकारि, कथम्भूतान् जिनवरान् ?-चतुर्दशगुणान् मिथ्यादर्शनादीन् जानन्तीति चतुर्दशगुणज्ञायकास्तानिति, अन्यथा हि तीर्थकरा. समस्तमपि वस्तुनिवह जानन्त्येव, किमनेन निर्द्धार्य चतुर्दशगुणज्ञायकत्वविशेषणेन ?, तस्मादिह प्रकरणे चतुर्दशगुणस्थानरूपा ये जीवसमासा मयाऽभिधास्यन्ते तान् सम्यगशेषपनिशेषापेतास्तीर्थकरा एव जानन्ति, अह तु तदुक्तानुसारेण सङ्क्षेपत किञ्चित्तान् भणिष्यामीत्येतदेव सूचयतेऽ विशेषणमुपादायीति स्थित, केवल गुणस्थानकान्तर्गतानि तद्व्याख्यानपक्रमायातानि सूक्ष्मैकेन्द्रियबादरैकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासञ्ज्ञिपञ्चेन्द्रियसञ्ज्ञिपञ्चेन्द्रियरूपाण्यपि जीवसमासस्थानानि प्रत्येक पर्याप्तापर्याप्तभेदभिन्नानि चतुर्दशेहाभिधास्यन्त इत्यवसेयमिति । तदत्र पूर्वार्द्धेन विघ्नव्रातविघाताय तीर्थकरनमस्कारो वर्णित, 'चउदसजीवसमासे' इत्यभिधेयपदं, तदनुक्रमण तु प्रयोजनमित्यभिधेयप्रयोजने साक्षादुक्ते, सम्बन्धस्तु प्रकरणप्रयोजनयो साध्यसाधनलक्षण सामर्थ्यादेव गम्यत इति साक्षान्नोक्त, तदुक्तम्-"शास्त्र प्रयोजन चेति, सम्बन्धस्याश्रयावुभौ । तदुक्तयन्तर्गतस्तस्माद्, भिन्नो नोक्त प्रयोजनात् ॥ १ ॥" अनेन चाभिधेयादिदर्शनेन प्रेक्षावन्त प्रवर्तिता भवन्ति, यदाह—"उक्तार्थ ज्ञातसम्बन्ध, श्रोतु श्रोता प्रवर्तते । शास्त्रादौ तेन वक्तव्य, सम्बन्धः सप्रयोजन ॥१॥" इति गाथार्थ ॥ १ ॥ केन पुनरुपायेनैते जीवसमासा अनुक्रमणीया ? इत्याह—

**निक्खेवनिरुत्तीहिं अट्ठहि याणुओगदारेहिं । गइयाइमग्गणाहि य जीवसमासाऽणुगंतव्वा ॥ २ ॥**

व्याख्या—निक्षेपण निक्षेप -समयप्रसिद्धो नामस्थापनेत्यादिनाऽत्रैव चानन्तर वक्ष्यमाणस्वरूप, निश्चितोक्तिर्निरुक्ति, निश्चयेन वोच्यतेऽर्थोऽनयेति निरुक्ति, जीवति जीविष्यति जीवितवानिति जीव इत्यादि शब्दव्युत्पत्तिरित्यर्थ, एताभ्या निक्षेपनिरुक्तिभ्या 'जीवसमासा' उक्तस्वरूपा 'अनुगन्तव्या.' व्याख्येया इति सम्बन्ध, तथाऽनुरूप सूत्रस्यार्थेन योजनमनुयोगो-व्याख्यान तस्य द्वाराणि-उपायभूतानि मुखान्यनुयोगद्वाराणि तानि च "कि कस्स केण कत्थ वे" त्यादिना वक्ष्यमाणानि षट् "सतपयपरूवणये" त्यादिना वक्ष्यमाणान्यष्टौ, तै. षड्भिरष्टभिश्चानुयोगद्वारैर्जीवसमासा व्याख्येया, मार्गणा-जीवादिवस्तूना सदसत्त्वादिप्रकारेण नरकगत्यादिषु अन्वेषणा

गतीन्द्रियकायादिषु मार्गणा गत्यादिमार्गणास्तास्विप जीवसमासा अनुगन्तव्या इति गाथासमासार्थः ॥ २ ॥ विस्तरार्थं बिभणिषु स्वयमेव सूत्रकारो निक्षेपस्वरूप तावदाह—

**नामठवणा दव्वे भावे य चउव्विहो य निक्खेवो । कत्थइ य पुण बहुविहो तयासयं पप्प कायव्वो ॥ ३ ॥**

व्याख्या—नामस्थापनाद्रव्यभावभेदात्तावदयं चतुर्विधो निक्षेपो भवति, स च प्रस्तुते इत्थं योज्यते—जीव इति नाममात्रं नामजीव, नाम चासौ जीवश्चेति कृत्वा यस्य वाऽचेतनस्य (सचेतनस्य वा) वस्तुनो जीव इति नाम क्रियते स नामजीव, नाम्ना नाममात्रेण जीवो नामजीव इति हेतोः चित्रकर्मलिप्यकर्मादिषु स्थाप्यमानः स्थापनाजीवः, यस्य तु जीवस्यैव सतो पि ज्ञानादीन् सत्त्वादिव्यवच्छिन्नप्रभृतीन् पर्यायानननुभवन्केवलं तद्विमुक्तं जीवमात्रं विवक्ष्यते स द्रव्यजीवो, गुणपर्यायवियोगविवक्षया द्रव्यमात्रत्वात्। अथवाऽनुपयुक्तो जीवो द्रव्यजीवः अनुपयोगो द्रव्यमिति वचनात्, यद्वौदारिकादिशरीरद्रव्येण सह जीवस्यान्योऽन्यानुगतत्वाद् द्रव्यस्य च प्रधानतया विवक्षितत्वात् द्रव्यभूतो जीवो द्रव्यजीवः, यथा भोगी पुरुषोऽपि भोगपुरुष उच्यते एवमौदारिकशरीरादिद्रव्यत्वात् जीवोऽपि द्रव्यजीव इत्यर्थः, औदयिकादिभावयुक्तस्तु ज्ञानादिगुणसमन्वितो भावजीव, इह च 'जत्थ य जं जाणिज्जा निक्खेवं निक्खिवे निरवसेसं। जत्थवि य न जाणिज्जा चउक्कयं निक्खिवे तत्थ ॥ १ ॥' इति वचनाद्वस्तुनो निक्षेपा बहुविधाऽपि सम्भवन्ति, यथा "नाम ठवणादविए खित्ते काले भवे य भावे य। एसो खलु मोहस्स निक्खेवो होइ अट्ठविहो ॥ १ ॥" तथा 'नामं ठवणा दविए खित्ते काले भवे य भावे य। पज्जवलोगे य तहा अट्ठविहो लोगनिक्खेवो ॥ १ ॥ नाम ठवणा दविए खेत्ते अद्ध भव तब्भवे य भोगे य। संजम जस कित्ती जीविय य भगवाई दसहा ॥ २ ॥' इत्यादि। यत्र पुनः प्रज्ञावैकल्यादिकारणाद्बहुविधो निक्षेपो न ज्ञायते तत्रापि नामस्थापनाद्रव्यभावलक्षणं चतुष्टयं निक्षिपेत् तस्य सर्वव्यापकत्वात्सुप्रतीतत्वाच्च, तदेवमत्रापि चतुष्टयनिक्षेपः प्रदर्शितोऽथ बहुविधनिक्षेपप्रदर्शनार्थमुत्तरार्द्धमाह—'कत्थइ य पुणे'त्यादि, क्वापि पुनर्वस्तुनि बहुविधो यथासम्भवं पञ्चषट्सप्तादिविधोऽपि निक्षेपः कर्तव्यः, किं कृत्वा इत्याह—

तस्य-निक्षेपव्यद्रव्यस्याश्रयो-निक्षेप्यविषय आधारक्षेत्रकालादिरत प्राप्य—आश्रित्येति, तथाहि-प्रस्तुते देवपर्यायप्रधानो (जीव इत) जीव आयुष्कादि कालजीव चक्रवर्त्या-दिर्भोगजीव गणधरादि संयमजीव इत्यादि स्वमत्याऽभ्यूह्य वाच्यमिति गाथार्थः ॥ ३ ॥ तदेव निक्षेपद्वारेण व्याख्याता जीवसमासा, निरुक्तिस्तु जीवति जीविष्यतीत्यादिना दर्शितैव, साम्प्रत षडनुयोगद्वारदर्शनार्थमाह—

**किं कस्स केण कत्थ व केवचिरं कइविहो उ भावोत्ति। छहि अणुओगदारेहिं सव्वभावाऽणुगंतव्वा ॥ ४ ॥**

एते किमादिभिरनुयोगद्वारै सर्वेऽपि जीवाजीवादय पदार्था 'अनुगन्तव्या' व्याख्येया, तत्र जीवपदार्थस्य प्रस्तुतत्वात्स एवेह तावच्चिन्त्यते, यथा-कि वस्तु जीव इत्यभिधीयते ? इति प्रश्ने निर्वचनमिद द्रव्य-यथौदयिकादिभावयुक्त सचेतनद्रव्य जीव १ कस्यासौ जीव ? इति स्वस्वामिसम्बन्धप्रश्ने विवक्षामात्रतात्मन एव सत्को जीवो नापरस्य, अथवा कस्य प्रभुर्जीव ? इति प्रश्ने आत्मीयस्यैव वस्तुरूपस्य जीवस्वरूपस्य प्रभुर्न वाह्यस्य धनकनकादे, इत्यपि तस्य व्यभिचारित्वादिति २, केन कारणकलापेन निष्पन्नो जन्तु ?, न केनचिद्, द्रव्यार्थतया निश्चलेनाकृतकत्वाज्जीवस्य ३, क्वासौ जीव ? लोकपर्यन्तशरीरमाने लोके वा ४, कियच्चिर कालमसौ भवति ?, सर्वकाल, द्रव्यतोऽनाद्यपर्यवसितत्वाज्जीवस्य ५, 'कइविहो उ भावोत्ति' कतिविधोऽसौ भाव ? जीव इत्यर्थ, तत्रौदयिकादिभावाना षड्विधत्वात् तद्रूपस्यैव च भावजीवत्वात् धर्म्मभेदाच्च धर्मिणोऽपि कथञ्चिद्भेदात्षड्विधो भावजीव इति, यद्वा 'कइविहो उ भावो' त्ति 'कतिविध' कतिभेदो भाव- पुनः कस्य जीवस्य सम्भवति ? इति प्रश्ने निर्वचनमुच्यते—क्षायिकपारिणामिकभावद्वय सिद्धस्य लभ्यते, औदयिकक्षायोपशमिकपारिणामिकलक्षणा भावत्रयमेकद्वित्रिचतुरिन्द्रियाणा, तुल्यवर्जपञ्चेन्द्रियाणा तु नितयमिदमेव, चतुर्थन्तु केषाञ्चिदौपशमिक, क्षायिको वा भावो लभ्यते, मनुष्याणा तु केषाञ्चिदेते पञ्चापि भावा प्राप्यन्ते, षष्ठस्तु सान्निपातिक सिद्धादीना सर्वेषामप्यनुगतो लभ्यत एव, द्व्यादिभावसन्निपातस्य सर्वत्र प्रतिपादितत्वादिति गाथार्थ ॥ ४ ॥ अथाष्टानुयोगद्वारनिरूपणार्थमाह—

**संतपयपरूवणया दव्वपमाणं च खित्तफुसणा य। कालंतरं च भावो अप्पाबहुयं च दाराइं ॥५॥**

त्वादिदापूर्वं कुर्वन्ति, तथा स्थितिं च कर्म्मणामशुद्धत्वात्प्राग् दीर्घां बद्धवन्त, अत तु तामेव विशुद्धिप्रकर्षतो ह्रस्वतयाऽपूर्वां बध्नन्तीत्येवं स्थितिघातादीनामिहापूर्वकरणता द्रष्टव्या, एते चापूर्वकरणा द्विधा-मोहनीयकर्म्मणः क्षपणार्हत्वात्क्षपका, तस्यैवोपशमार्हत्वातुपशमका ८। 'अनियट्टि' त्ति इहाप्येकदेशेन समुदायस्य गम्यमानत्वादनिवृत्ति-बादरसम्पराया इत्यर्थ, तत युगपदेतद्गुणस्थानप्रविष्टाना बहूना जीवाना परस्परसम्बन्धिनोऽध्यवसायस्थानस्य व्यावृत्ति-वैलक्षण्य निवृत्तिरिहाभिप्रेता, नास्ति तथा-विधा निवृत्तिरेषामित्यनिवृत्तय., एककालमेवैतद्गुणस्थानकं प्रविष्टस्यैकस्य विवक्षिते प्रथमाद्यन्यतरसमये यदध्यवसायस्थान तदन्योऽपि विवक्षित कश्चित्तदा तद्वर्त्येवेत्यर्थः, सम्परैति-पर्यटति ससारमनेनेति सम्पराय-कषायादय, बादर सूक्ष्मसम्परायापेक्षया स्थूर सम्परायो येषा ते बादरसम्पराया, अनिवृत्तयश्च ते बादरसम्पराया-श्च अनिवृत्तिबादरसम्परायाः, एते द्विविधा-क्षपका उपशमकाश्च, तत्र क्षपका मोहस्य विंशतिप्रकृती स्त्यानर्द्धित्रिक त्रयोदश नामप्रकृतीश्च क्षपयन्ति, कथम्? इति चेदुच्यते प्रथम तावत्प्रत्याख्यानाप्रत्याख्यानावरणाख्यानष्टौ कषायान् क्षपयितुमारभन्ते, तेषु चार्द्धक्षपितेष्वेवातिशुद्धिवशादन्तराल एव स्त्यानर्द्धित्रिक नामकर्मणस्त्रयोदश प्रकृतीरुच्छेदयन्ति, तद्यथा—नरकद्विक तिर्यग्द्विकमेकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियजातयश्चातप उद्योत स्थावर साधारणं सूक्ष्ममिति, एतासु च षोडशसु प्रकृतिषु क्षपितासु पुन कषायाष्टकस्य क्षगितशेष क्षपयन्ति, ततो नपुसकवेद ततोऽपि स्त्रीवेद तदनन्तरमपि च हास्यादिषट्क ततोऽपि पुरुषवेद तत ऊर्ध्वं सज्वलनक्रोधं ततो मान ततोऽपि माया क्षपयन्तीत्येवं मोहस्य विंशतिप्रकृती क्षपयन्ति, लोभमपि बादर क्षपयन्ति, सूक्ष्मस्य सूक्ष्मसम्पराय एव क्षपणात, दर्शनसप्तकं तु प्रागेवाविरताद्यप्रमत्तान्तावस्थायां क्षपितमिति क्षपकव्यापारो दर्शित, ये तूपशमकास्ते एता एव विंशतिप्रकृतीर्वक्ष्यमाणन्यायेनोपशमयन्ति ९। 'सुहुमा य' त्ति, इहापि पूर्वोक्तनीत्या सूक्ष्मसम्पराया इत्यर्थ, तत सूक्ष्म सम्पराय-किट्टीकृतलोभकषायोदयरूपो येषा ते सूक्ष्मसम्पराया, तेऽपि द्विविधा-क्षपका उपशमकाश्च, तत क्षपका अनिवृत्तिबादरे सूक्ष्मकिट्टीकृत लोभं निर्मलत एव क्षपयन्ति, उपशमकास्तु तमेवोपशमयन्तीति १०। 'उवसंत' त्ति उपशान्तकषाया इत्यर्थ, 'कषशिष' इत्यादि दण्डकधातुर्हिंसार्थस्ततश्च कषन्ति कष्यन्ते वा परस्परमस्मिन् प्राणिन इति कष-ससार 'पुंसि सञ्ज्ञायां घ: प्रायेण' ति प्रायोग्रहणाद् घप्रत्यय., अन्यथा हलन्तत्वात् 'हलश्च' ति घञ्प्रत्यय स्यादिति, कषमयन्ते-

धम्मा वंसा सेला अञ्जना रिट्ठा मघवती, अन्यत्र क्वचित् मघत्यसौ पठ्यते, माघवती इत्येतानि रत्नप्रभादीनां यथासङ्ख्यमनादिकालादेवमेव यथाकथञ्चिदन्वर्थनिरपेक्षतया प्रवृत्तानि ' नामधेयानि ' अभिधानानीति गाथार्थः ॥ १२ ॥ अथ तासामेव सान्वर्थान्यभिधानान्तराण्याह—

रयणप्पभा य सक्करवालुयपंकप्पभा य धूमपहा । होइ तम (होईतमा)तमाविय पुढवीणं नामगोत्ताइं ॥ १३ ॥

रत्नानामिन्द्र वक्ष्यमाणवज्रवैडूर्यलोहिताक्षमसारगल्लप्रभृतीनां बहूनां तत्र सम्भवान्नरकवर्जं प्रायो रत्नानां प्रभा-ज्योत्स्ना यस्यां सा रत्नप्रभा, एवं शर्करा-उपलखण्डानां प्रभा प्रकाशनं स्वरूपख्यापनं यस्यां सा शर्कराप्रभा, एवमन्यत्रापि प्रभाशब्दो योजनीयः, वालुकाया-परुषपांशुरूपाया प्रभा स्वरूपावस्थितिर्यस्यां सा वालुकाप्रभा, पङ्कस्य प्रभा यस्यां सा पङ्कप्रभा, पङ्कद्रव्योपलक्षितेत्यर्थः, धूमस्य प्रभा यस्यां सा धूमप्रभा, धूमद्रव्योपलक्षितेति भावः, तमसः प्रभा यस्यां सा तमःप्रभा, कृष्णद्रव्योपलक्षितेति हृदयम्, अन्ये तु तमा इत्येतामन्यामसमस्य मन्यन्ते, तत्रापि तम इत्यद्रव्ययुक्तत्वात्सेति मन्तव्यं, अतिशयेन तमः तमस्तमस्तस्य प्रभा यस्यां सा तमस्तमःप्रभा, अतिशयकृष्णद्रव्ययुक्तेत्यर्थः, अत्रापि तमस्तमा इत्येतावदेव कैश्चिदिच्छन्ति, तत्राप्यतिशयतमोरूपद्रव्ययुक्तत्वात्तमस्तमा, इत्येतानि धर्मादिपृथिवीनां तासु तत्तत्पर्यायेषु नरकात् सर्वदैवानुवृत्तानामानि गोत्रः स्वाभिधायकवचनस्य त्राणाद्-यथार्थत्वसम्पादनेन पालनाद्गोत्राणि, सत्यार्थानीत्यर्थः, नामानि च तानि गोत्राणि चेति नामगोत्राणीति गाथार्थः ॥ १३ ॥ उक्ता नरकगतिः, अथ तिर्यग्गतिनिरूपणायाह—

तिरियगईया पञ्चिन्दिया य पज्जत्तया तिरियचीओ । तिरिया य अपज्जत्ता मणुया य पज्जत्त इयरे य ॥ १४ ॥

तिर्यग्गतौ भवास्तिर्यग्गतिकाः, के पुनस्ते ? इत्याह—'पञ्चिन्दिया य त्ति' पञ्चेन्द्रियास्तिर्यग्गतिका मीनमहिषमयूरादयः, चशब्दादेकद्वित्रिचतुरिन्द्रियाणां सङ्ग्रहः, एते च सर्वे कथम्भूताः ? इत्याह-पर्याप्तकाः, न केवलमेते तिरश्च्यश्च तिर्यग्योषितश्च पर्याप्तास्तिर्यग्गतौ भवन्ति । ननु किमेते एकेन्द्रियादयः पर्याप्ता एव तिर्यग्गतिका भण्यन्ते, नेत्याह अपर्याप्ताश्च एते तिर्यञ्चस्तिर्यग्गतिका भवन्ति, तस्मादेकद्वित्रिचतुष्पञ्चेन्द्रियास्तिर्यञ्चः पर्याप्तापर्याप्तास्तिर्यग्गतिका भण्यन्त इति तात्पर्यम् । अथ मनुष्यगतिनिरूप

गाथार्थमाह-मनुष्या पर्याप्ता इतरे च-अपर्याप्ता मनुष्यगतौ भवन्तीति शेष इति गाथार्थः ॥ १४ ॥ मनुष्यानेव क्षेत्रादिभेदतश्चिन्तयन्नाह—

ते कम्मभोगभूमिय अंतरदीवा य खित्तपविभत्ता। सम्मुच्छिमा य गब्भय आसिमिलक्खुत्ति य समेया ॥ १५ ॥

'ते' अनन्तरोक्ताः पर्याप्तापर्याप्तमनुष्याः पुनरपि 'खेत्तपविभत्त' त्ति निवासस्थानभूतेन क्षेत्रेण हेतुभूतेन प्रविभक्ताः पृथक्चिन्त्यमानास्त्रिविधा भवन्ति, तदेव च त्रैविध्यमुपदर्शयन्नाह—कृषिवाणिज्यतपःसंयमानुष्ठानादिकर्मप्रधाना भूमयः कर्मभूमयो-भरतपञ्चकैरावतपञ्चकमहाविदेहपञ्चकलक्षणाः पञ्चदश तासु जाताः कर्मभूमिजाः, भुज्यन्त इति भोगाः-शब्दरूपरसगन्धस्पर्शाः, ते चेह युगलधार्मिकाणां सम्बन्धिनो विवक्षिताः १, कृष्यादिकर्मरहिताः भोगप्रधाना एव भूमयो भोगभूमयः हैमवतपञ्चकहरिवर्षपञ्चकदेवकुरुपञ्चकोत्तरकुरुपञ्चकरम्यकपञ्चकैरण्यवतपञ्चकरूपास्त्रिंशत् तासु जाता भोगभूमिजाः २ अन्तरे-लवणसमुद्रस्य मध्ये द्वीपा अन्तरद्वीपा-एकोरुकादयः षट्पञ्चाशत्तेषु जाता मनुष्या अप्युपचारादन्तरद्वीपाः ३, चशब्दः समुच्चये, अथ क प्रदेशे पुनरमी द्वीपा वर्तन्ते ? कियत्प्रमाणाश्च ? इति, अत्रोच्यते, इह जम्बूद्वीपे भरतक्षेत्रपर्यन्ते पूर्वापरायततया व्यवस्थितस्य हिमवत्पर्वतस्य पर्यन्तादुत्तरपूर्वस्यां दिशि त्रीणि योजनशतानि लवणसमुद्रमवगाह्य, हिमवतः पर्यन्तादीशानकोणानुसारेण त्रीणि योजनशतानि लवणसमुद्रं प्रविश्येत्यर्थः, अत्रान्तरे त्रीणि योजनशतानि प्रत्येकमायामविष्कम्भाभ्यामेकोनपञ्चाशदधिकानि नव योजनशतानि किञ्चिन्न्यूनानि परिक्षेपेणैकोरुकनामा द्वीपः समस्ति, अयं च पञ्चधनुःशतविष्कम्भया गव्यूतद्वयोच्छ्रितया पद्मवरवेदिकया वनखण्डेन च सर्वतः समावृतः १, एवमस्यैव हिमवतः पर्वतस्य पर्यन्ताद्दक्षिणपूर्वस्यां दिशि, आग्नेयकोणानुसारेणेत्यर्थः, त्रीणि योजनशतानि लवणसमुद्रमवगाह्यैकोरुकनिर्दिष्टप्रमाणयुक्त एवाभासिकनामा द्वीपः समस्ति २ तथा तस्यैव हिमवतः पर्यन्ताद्दक्षिणापरस्यां दिशि, नैर्ऋतकोणानुसारेणेति भावः, त्रीणि योजनशतानि लवणसमुद्रं प्रविश्य यथोक्तमानयुक्त एव वैषाणिकनामा द्वीपो मन्तव्यः ३ हिमवत एव पर्यन्तात् पश्चिमोत्तरस्यां दिशि, वायव्यकोणानुसारेणेत्यर्थः, त्रीणि योजनशतानि लवणसमुद्रमवगाह्याभिहितप्रमाणान्वित एव नङ्गोलिकनामा द्वीपः प्राप्यत इति ४, एवमेते चत्वारो द्वीपा हिमवत एव चतसृष्वपि विदिक्ष्वेकप्रमाणायन्विताः प्रोक्ताः, अ[न्य]तो यथाक्रममेकोरुकादीनां पुरो व्यवस्थिता भिन्नप्रमाणायन्विताश्चत्वारो द्वीपाः प्रोच्यन्ते, तद्यथा—एकोरुकद्वीप-

स्योत्तरपूर्वस्यां दिशि चतुर्भिर्योजनशते परत [ प्रत्यकं ] चत्वारि योजनशतायामविष्कम्भाभ्यां किञ्चिन्न्यूनपञ्चषष्ट्यधिकद्वादशयोजनशतानि परिक्षेपेण हयकर्णनामा
द्वीपो भवति ५ पूर्वोक्तप्रमाणा पद्मरवेदिका वनखण्डं च पार्श्वत सर्वद्वीपानां द्रष्टव्यम्, एवमाभासिकद्वीपस्य दक्षिणपूर्वस्यामेव दिशि चतुर्भिरेव योजनशते परतो हयकर्णद्वीप
निर्दिष्टप्रमाणयुक्त एव गजकर्णाभिधानो द्वीप समवसेय ६ तथा वैषाणिकद्वीपस्य दक्षिणपश्चिमायामेव दिशि चतुर्भिरेव योजनशते परतो हयकर्णद्वीपप्रमाण
एव गोकर्णाभिधानो द्वीप समवगन्तव्य ७, एवं नङ्गोलिकद्वीपस्य पश्चिमोत्तरस्यामेव दिशि चतुर्भिरेव योजनशते परतो हयकर्णद्वीपसमान एव शष्कुलीकर्णनामा द्वीपो
बोद्धव्य इति ८, एवमेतेऽपि हयकर्णादयश्चत्वारो द्वीपा समानपरिमाणाद्यन्विता प्रोक्ता, एवमेतेषां चतुर्णामप्यनन्तरोक्तहयकर्णादिद्वीपानां यथासङ्ख्यमनन्तरोक्तासु उत्तरपूर्वादिकासु
चतसृष्वपि विदिक्षु पञ्चभि पञ्चभिर्योजनशते परत क्रमेणादर्शमुखमेण्ढमुखायोमुखगोमुखनामानश्चत्वारो द्वीपा भवन्ति, एते च प्रत्येकं पञ्चयोजनशतान्यायामविष्कम्भाभ्यामेका
शीत्यधिकपञ्चदशयोजनशतानि परिक्षेपेण भवन्ति १२, एतेषां त्वादर्शमुखादीनामेतास्वेव विदिक्षु षड्भिर्योजनशते परतो यथासङ्ख्यमश्वमुखहस्तिमुखसिंहमुखव्याघ्रमुखा
भिधानाश्चत्वारो द्वीपा वक्तव्या प्रत्येक षड्योजनशतायामविष्कम्भाभ्यां सप्तनवत्यधिकाष्टादशयोजनशतानि परिक्षेपेण भवन्ति १६, एषामप्यश्वमुखादीनां तास्वेव विदिक्षु
सप्तभि सप्तभिर्योजनशते परतो यथासङ्ख्यमश्वकर्णहरिकर्णाकर्णकर्णप्रावरणनामानश्चत्वारो द्वीपा द्रष्टव्या सप्तसप्तयोजनशतान्यायामविष्कम्भाभ्यां त्रयोदशाधिकद्वाविंशतियोजनशतानि
परिक्षेपेण च भवन्ति २०, एतेषां चाश्वकर्णादीनामभिहितास्वेव विदिक्ष्वष्टभिरष्टभिर्योजनशते परतो यथासङ्ख्यमुल्कामुखमेघमुखविद्युन्मुखविद्युद्दन्ताभिधानाश्चत्वारो द्वीपा
मन्तव्या, अष्टाष्टयोजनशतायामविष्कम्भाभ्यामेकोनत्रिंशदधिकपञ्चविंशतियोजनशतानि परिक्षेपेण भवन्ति २४, अमीषां चोल्कामुखादीनां तास्वेव विदिक्षु नवभिर्नवभिर्योजनशते
परतो यथाक्रम घनदन्तलष्टदन्तगूढदन्तशुद्धदन्तनामानश्चत्वारो द्वीपा मन्तव्या, नवनवयोजनशतायामविष्कम्भाभ्यां पञ्चचत्वारिंशदधिकाष्टाविंशतियोजनशतानि परिक्षेपेण च
भवन्ति २८, एतेषु च द्वीपेषु वज्रऋषभनाराचसंहननयुक्ता समचतुरस्रसंस्थानसंस्थिता सामलक्षणव्यञ्जनगुणोपेता देवलोकानुकारिरूपलावण्यालङ्कृतविग्रहा अष्टधनु शतप्रमाणा,
स्त्रीणां त्विदमेव प्रमाणं किञ्चिन्न्यूनं द्रष्टव्य, पल्योपमासङ्ख्येयभागायुष स्त्रीपुरुषयुगलव्यवस्थिता मनुष्या परिवसन्ति। एते च दशविधकल्पद्रुमोपनायिनो भवन्ति, ते नामी

॥ १५ ॥

कल्पद्रुमा 'मत्तगा भिंगगा तुडियगा दीवसिहा जोईसिया चित्तंगा चित्तरसा मणियगा गेहागारा अणियगणा य' त्ति तत्ताया. कल्पशाखिनो विशिष्टबलवीर्यकान्तिहेतुविस्रसापरिणत-सरससुगन्धिस्वादुमनोहारिनानाप्रकारमदिरापरिपूर्णकोशके फलैरिव शोभमानास्तिष्ठन्ति, तेभ्यस्तेषां मनुष्याणां मद्यावाप्तिर्भवतीति, भृङ्गाङ्गा पुनर्यथेह मणिकनकमय-विचित्रभाजनानि दृश्यन्ते तथैव विस्रसापरिणते. स्थालकचोलादिभिर्नानाविधभाजनै फलैरिव शोभमाना दृश्यन्ते, तेभ्यस्तेषां भाजनानि भवन्ति, एवमन्यत्रापि यद्येषु प्राप्यते तत्तेभ्यस्तेषां भवतीति द्रष्टव्यं, त्रुटिताङ्गाभिधानास्तु कल्पमहीरुहस्ततविततघनशुषिरभेदभिन्नैर्बहुप्रकारैरातोद्यै फलैरिवोपशोभितास्तिष्ठन्ति, तत्र च ' ततं वीणादिकं ज्ञेयं, विततं पटहादिकम् । घनं तु-कांस्यतालादि, शुषिरं काहलादिकम् ॥ १ ॥ दीपशिखास्तु यथेह स्निग्धं प्रज्वलन्त्यः कनकमणिमय्यो दीपिका उद्योतं कुर्वाणा दृश्यन्ते तद्वद्विस्रसापरिण-तप्रकृष्टोद्योतेन सर्वमुद्योतयन्तस्तिष्ठन्ति, ज्योतिःशिखास्तु रविमण्डलमिव स्वतेजसा सर्वमवभासयन्तो वर्त्तन्ते इति, चित्राङ्गास्तु विचित्रसरससुरभिपञ्चवर्णमाल्यमाला-भिराकीर्णाः सदैवासत इति, चित्ररसास्त्वित्यत्यकलमशालिदालिपक्वान्नव्यञ्जनादिभ्योऽतीवापरिमितमाधुर्यस्वादुतादिगुणोपेतविचित्रस्वाद्यभोज्यवस्तुपरिपूर्णैः फलमध्यैर्विराजमाना सतिष्ठन्त इति, मणिकाङ्गास्तु विस्रसापरिणतानि विमलमहार्घ्यभुवनैकसारस्फारहारकटककेयूरनूपुरादिभिर्भूषणनिवहैः समन्वितास्तिष्ठन्तीति, गृहाकारास्तु विस्रसापरिणामत एव प्राकारोपगूढसोपानपङ्क्तिविचित्रशालारतिगृहगवाक्षगुप्तप्रकटानेकापवरककुट्टिमतलायलङ्कृतविचित्रभवनसमनुगताः सतिष्ठन्त इति, अनग्नास्तु विस्रसावशात एव स्फुरत्प्रचुरते-जोऽतिसूक्ष्मसुकुमालदेवदूष्यानुकारिप्रवरविचित्रवस्त्रानुगताः प्राप्यन्त इति । अपरञ्च ते मनुष्याः प्रकृत्या भद्रका विनीताः प्रशान्ताः प्रतनुक्रोधमानमायालोभा अल्पेच्छा निरौत्सुक्याः कामचारिणो वायुवेगाः, सत्यपि तत्र कनकमणिमौक्तिकादिके ममत्वकारणे ममत्वमूर्च्छाभिनिवेशरहिताः सर्वथाऽपगतवैरानुबन्धाः परस्परप्रेष्यतादिभावविनिर्मुक्ता अहमिन्द्राः, हस्त्यश्वकरभगोमहिष्यादीनां तत्र सद्भावेऽपि तत्परिभोगरहिताः, पादविहारचारिणो रोगवेदनादिविनिर्मुक्ता भवन्ति, चतुर्थान्ते आहारं गृह्णन्ति, चतुःषष्टिश्च पृष्ठिकरण्डकास्तेषां, षण्मासावशेषायुषश्च स्त्रीपुरुषयुगलममी प्रसवन्ति, एकोनाशीतिं च दिनानि तत्परिपालयन्ति, स्नेहकषायाल्पतया च मरणानन्तरं दिवमुपगच्छन्ति, तत्र हि व्याघ्रसिंहसर्पादिस्वापदगणा अपि क्रूरतादिदोषविनिर्मुक्ता न परस्परं भक्षणादिषु प्रवर्तन्तेऽत एव तेऽपि देवलोकगामिन एव, तेषु च द्वीपेषु शालिव्रीह्यादीनि धान्यानि विलसात

एव भान्ति ननु मनुष्यादयो भुञ्जते, भूमिस्थितिपुष्पफलानि च तरूणां शर्करातोऽप्यतीवमाधुर्यादिगुणोपेतानि भवन्त्यतस्तानि मनुष्याणां परिभोगमायान्ति, तेषु च द्वीपेषु दंशमशकयूकामत्कुणादयः क्षुद्रोपद्रवादयश्च न भवन्ति, भूमिश्च तत्र स्थाणुकण्टकादिरहिता सर्वत्र समतला रमणीया च भवतीत्यलं विस्तरेण। तदेवमेते महार्द्धिकाः सप्ताष्टाविंशतिर्द्वीपाः प्रोक्ताः, मेरोरुत्तरतोऽप्येतैरेव नामभिरनेनैव प्रमाणादिना स्वरूपेण युक्ता अष्टाविंशतिर्द्वीपा वक्तव्याः, केवलं हिमवत्पर्वतस्य स्थाने ऐरवतपर्यन्तवर्ती शिखरी पर्वतो वाच्यः, अन्यदपि विशेषं किञ्चित्, तदेवमेते दर्शिता लेशतः षट्पञ्चाशदन्तरद्वीपाः, विस्तरतस्तु जीवाभिगमादिभ्योऽवसेयाः। यदत्र च षट्पञ्चाशत्स्वप्यन्तरद्वीपेषु हैमवतादिकर्मभूमिष्वपि तदेव द्रष्टव्यं, केवलमायुरादिनाऽन्यथात्वं, तच्च बहुषु स्थानान्तरेषु सुप्रतीतत्वादिह नोक्तम्, अन्तरद्वीपानां तु स्वरूपं स्वल्पं एव स्थानान्तरेऽभिहितमिति विशेषतोऽत्र प्रदर्शितमिति एतेऽपि कर्मभूमिजादयः सामान्येन मनुष्याः पुनरपि सह भेदैर्वर्तन्त इति सभेदा भवन्ति, यथमित्याह संमुच्छिमा ये त्वादि, संमूर्च्छनं गर्भनिरपेक्षं वान्तपित्तादिष्वेव भवनं समूर्च्छनं तस्माज्जाताः संमूर्च्छजा मनुष्याः, एते च मनुष्यक्षेत्र एव गर्भजमनुष्याणामुच्चारादिषु त्पद्यन्ते नान्यत्र, यत उक्तं प्रज्ञापनायाम्— कहि णं भंते! समुच्छिममणुस्सा समुच्छंति, गोयमा! अंतोमणुस्सखेत्ते पणयालीसाए जोयणसयसहस्सेसु अड्ढाइज्जेसु दीवसमुद्देसु पन्नरससु कम्मभूमीसु तीसाए अकम्मभूमीसु छप्पन्नाए अंतरदीवेसु गब्भवक्कंतियमणुस्साणं चेव उच्चारेसु वा पासवणेसु वा खेलेसु वा सिंघाणेसु वा वंतेसु वा पित्तेसु वा पूएसु वा सोणिएसु वा सुक्केसु वा सुक्कपोग्गलपरिसाडेसु वा विगयजीवकलेवरेसु वा थीपुरिससंजोएसु वा नगरनिद्धमणेसु वा सव्वेसु चेव असुइएसु ठाणेसु समुच्छिममणुस्सा समुच्छंति, अंगुलस्स असंखेज्जइभागमित्ताए ओगाहणाए असण्णी मिच्छादिट्ठी सव्वाहिं पज्जत्तीहिं अपज्जत्तगा अंतोमुहुत्ताउया चेव कालं करेंति, सेत्तं समुच्छिममणुस्सा'। योनिनां गर्भेषु जाता गर्भजा मनुष्याः, प्रतीता भवन्ति। आराद्-दूरात् सर्वहेयधर्मेभ्यो याता आर्याः, ते च द्विविधा ऋद्धिप्राप्ता अनृद्धिप्राप्ताश्च, तत्र ऋद्धिप्राप्ताः षड्विधास्तद्यथा—तीर्थकरचक्रवर्तिवासुदेवबलदेवचारणमुनिविद्याधराः, अनृद्धिप्राप्ताश्च आर्या नवविधाः प्रज्ञप्तास्तद्यथा क्षेत्रत आर्याः, जातितः कुलतः कर्मतः शिल्पतो भाषातो ज्ञानतो दर्शनतश्चारित्रतश्च, तत्र क्षेत्रत आर्या ये आर्यदेशेषूत्पद्यन्ते, येषु च तीर्थकराणां तत्साधूनां तद्धर्मस्य च प्रवृत्तिरस्ति त आर्यदेशेषूच्यन्ते, तानि चामूनि 'रायगिह मगह १ चंपा अंगा २ तह तामलित्ति वंगा य ३। कंचणपुर कलिंगा ४

वाणारसिमेव कासी य ५ ॥१॥ साएय कोमला ६ गयउर च कुरु ७ सोरिय कुसट्टा ८ य। कपिल्ल पचाला ६ अहिछत्ता जंगला चेव १० ॥२॥ बारवई य सुरट्ठा ११ मिहिल विदेहा य १२ वच्छ कोसबी १३। नदिपुर संडिल्ला १४ भद्दिलपुरमेव मलया य १५ ॥ ३ ॥ वइराड वच्छ १६ वरणा अच्छा. १७ तह मत्तियावइ दसगणा १८। सोत्तियमई:य चेई १६ वीयभय सिंधुसोवीरा २० ॥ ४ ॥ महुरा य सूरसेणा २१ पावा भंगी य २२ मास परिवट्टी २३। सावत्थी य कुणाला २४ कोडीवरिस च लाढा य २५ ॥ ५ ॥] सेयवियाविय नयरी केयइअद्ध च आरिय भणिय। एत्थुप्पत्ति जिणाण चक्कीणं रामकण्हाण ॥ ६ ॥" अयमिह तात्पर्यार्थ —राजगृह नगर राजधानी मगधाजनपद चम्पा राजधानी अङ्गा जनपद ताम्रलिप्ती राजधानी वङ्गा जनपद इत्येवं सर्वत्र द्रष्टव्यं यावच्छ्वेतविका नगरी केतकीजनपदस्यार्द्धं। तदेवमेते सार्द्धा पञ्चविंशति-र्जनपदा [आर्यक्षेत्राण्युच्यन्ते, एतेषूत्पन्ना मनुष्या क्षेत्रत आर्या व्यपदिश्यन्ते, एते च प्रत्यासत्त्या भरतक्षेत्रवर्तिन एव क्षेत्रार्या प्रोक्ता, एतेषा चोपलक्षणत्वादन्येऽपि महाविदेहान्तर्वर्त्तिविजयमध्यमखण्डादिष्वमी बहवो द्रष्टव्या इति, जात्यार्यास्तु षड्विधा, यत उक्तं **प्रज्ञापनायाम्**—"अंबट्ठा य कलंदा(य), विदेहा वङगाइ य। हरिया य चुचणा चेव, छप्पेया इब्भजाइओ ॥ १ ॥" एतासु षट्सु जातिषूत्पन्ना जात्यार्या प्रोच्यन्ते, केवलमेता जातय साम्प्रत न ज्ञायन्ते, कुलार्या उग्रभोगराजन्येक्ष्वाकुज्ञातकौरव्यकुलोत्पत्ति-भेदात्षड्विधा, *कर्मार्यास्तु ये आर्य कर्म्म कुर्वन्ति न निन्दित, ते च दूषिकगान्धिकसौत्रिककार्पासिककौसुम्भिकादयोऽनेकविधा,' शिल्पार्या: [अप्यनिन्दितशिल्पकारिण, तेऽपि तुन्नाकलेप्यकारशङ्खकारदन्तकारचितकारादयोऽनेकविधा, भाषार्यास्तु यैरर्द्धमागधया भाषया भाष्यते, येषु चाष्टादशभेदा ब्राह्मीलिपि प्रवर्तते, सा चेदानी सम्यग् न ज्ञायते, आभिनिबोधकज्ञानादयो ज्ञानार्या, क्षायिकसम्यग्दृष्ट्यादयो दर्शनार्या, सामायिकचारित्रादयश्चारित्रार्या। 'मिलिक्खुत्ति य' त्ति 'च' समुच्चये येषु धर्म्मस्य नामापि न ज्ञायते केवलमपेयपानाभक्ष्यभक्षणागम्यगमनादिनिरता शास्त्रायप्रतीतवेषभाषादिसमाचारास्तेऽनार्या मनुष्या म्लेच्छा उच्यन्ते, ते च बहुविधास्तद्यथा—
" सगजवणसवरबब्बरकायमुरु डोड्डगोड्डपक्कणया। अरवागहूणरोमसपारसखसखासिया चेव ॥ १ ॥ दुविलयलउसबोक्कसभिल्लधपुलिंदकुंचभमररुया। कुंचायचीणचुंचुयमाल-

* [ ये चान्ये आतृतीयाद्वा पञ्चमाद्वा सप्तमाद्वा कुलकरेभ्यो वा विशुद्धान्वयप्रकृतय तत्त्वार्थभाष्ये ]

वदमिना कुराया य ॥ २ ॥ केयग्गियहयमुहरवमुह तह तुरगमिढगमुहा य। हयरयणा गयरयणा मयाय य मणारिशा वह्व ॥ ३ ॥ पाथा य चंडहा मणारिया निरिणा निरग्गुरुपा। धम्माति भवरराइ जेसु न नज्ज ति सुमिणवि ॥ ४ ॥' इह च कर्म्मभूमिजभोगभूमिजान्तरद्वीपजानां सर्वेषामपि गर्भजसंमूर्च्छनभेदद्वयं सामान्येन सम्भवति, कम्मभूम्यादिषु त्रिष्वपि स्थानेषु संमूर्च्छजानां गर्भजानां च मनुष्याणामुत्पादात्, आर्यम्लेच्छभेदद्वयं तु कर्म्मभूमिजानामेव द्रष्टव्यं *अन्येषां भोगपुरुषत्वेन शरयन्तरत्वादायम्लेच्छत्वविकल्पातीतत्वादित्यलं विस्तरेणेति गाथार्थः ॥ १५ ॥ अथ देवगतिस्वरूपनिर्णयायाह—

देवा य भवणवासी वंतरिया जोइसा य वेमाणी। कप्पोवगा य नेया गेविज्जाणुत्तरसुरा य ॥ १६ ॥

दीव्यन्तीति देवाः प्राग्भवोपात्तपुण्यप्राग्भारोपनतविशिष्टभोगसुखाः प्राणिविशेषाः, ते च मूलभेदतश्चतुर्विधास्तद्यथा—भवनेषु रत्नमयासन्निवेशरूपेषु वसन्तीति भवनवासिनः, विशिष्टे—अध ऊर्ध्वं च प्रत्येकं योजनशतरहितप्रथमयोजनसहस्रलक्षणे रत्नप्रभापृथिव्या अन्तर्मध्ये भवा व्यन्तराः, द्योतन्ते इति ज्योतींषि तेषु भवा ज्योतिष्काः, स्वार्थिकप्रत्यये ज्योतिषाः, विमाने भवन्तीति वैमानिकाः, अनन्तरोक्तत्वात् सर्वदेवनिकायप्रधानत्वाच्च वैमानिकांस्तावद्विशेषेण सभेदानाह 'कप्पोवगे'त्यादि, प्रभिन्नोत्पन्नानां देवानां सामानिकत्वादिव्यवहारमर्यादाव्यवसायसभागमनपुस्तकवाचनसिद्धायतनपूजनपुरन्दरोपसेवनादिलक्षणमाचारं कर्तव्यं कल्पन्तमुपगच्छन्ति आश्रयन्ति सेवन्तीति कल्पोपगाः—द्वादशदेवलोकवर्तिनो वैमानिका ज्ञेयाः तेषु सर्वेष्वपि यथोक्तरूपस्य कल्पस्य सद्भावात्, परतस्तु कल्पातीता ग्रैवेयकानुत्तरसुरेषु च निर्दिष्टस्वरूपकल्पासम्भवात् तानेव कल्पातीतान् दर्शयति-लोकपुरुषस्य ग्रीवाप्रदेशे भवानि विमानानि ग्रैवेयकानि तेषु भवा देवा अप्युपचारतो ग्रैवेयकाः, न विद्यन्ते उत्तरे प्रधाना अन्ये देवा येभ्यस्तेऽनुत्तरास्ते च त

*तत्त्वार्थभाष्ये तु 'आर्या म्लेच्छाश्च' ति सूत्रे अतो विपरीता म्लेच्छाः, तद्यथा हिमवतश्चतसृषु विदिक्षु त्रीणि योजनशतानि लवणसमुद्रमवगाह्य चतसृणां मनुष्यविजातीनां चत्वारोऽन्तरद्वीपा भवन्ति त्रिशतयोजनविष्कम्भायामाः तद्यथा-एकोरुकाणामाभाषिकाणां—शिखरिणोऽप्येवमेवेत्यर्थं षट्पञ्चाशत् इति ॥ अत्र भरतादिविनयापेक्षयाऽऽर्यानार्यत्वविभागोऽभिप्रेत, तत्त्व स्पष्टैव जात्यन्तरता युग्मिनां भाष्य तु जातिज्ञानचारित्रार्यत्वाभावापेक्षयाऽनार्यत्वमिष्टमेवेति सुधियोऽत्र, मूले व्यापकं द्वैत।

देव भेदा गा १६

सुराश्चेत्यनुत्तरसुराः, विजयवैजयन्तजयन्तापराजितसर्वार्थसिद्धलक्षणविमानपञ्चकवासिनः, एते उभयरूपा अपि कल्पातीता इति मन्तव्याः, तेष्वहमिन्द्रतया मननक्रमणादिकल्पस्य सर्वथाऽसम्भवादिति गाथार्थः ॥ १६ ॥ अथ भवनपत्यादिदेवानामुत्तरभेदान् प्रतिपादयितुमुपक्रमते—

**असुरा नागसुवन्ना दीवोदहिथणियविज्जुदिसिनामा । वायग्गिकुमाराविय दसेव भणिया भवणवासी ॥ १७ ॥**

कुमारशब्दः प्रत्येकमभिसम्बध्यते, ततश्चासुरकुमारा नागकुमाराः सुवर्णकुमारा दीपकुमारा उदधिकुमाराः स्तनितकुमारा विद्युत्कुमारा दिक्कुमारा वायुकुमारा अग्निकुमारा इत्येवं दशविधा एव भवनवासिनो भवन्ति, गाथाबन्धानुलोम्यादिकारणाच्च युतक्रिदेते एवं पठिताः, आगमे त्वमी अमुनैव क्रमेण पठ्यन्ते, यथा—"असुरा नागसुवन्ना विज्जू अग्गी य दीव उदही य । दिसि वाऊ तह थणिया दसभेया इति भवणाई ॥ १७ ॥" व्यन्तरभेदानाह—

**किंनरकिंपुरिसमहोरगा य गंधव्व रक्खसा जक्खा । भूया य पिसायाविय अट्ठविहा वाणमंतरिया ॥ १८ ॥**

एतेऽप्यागमे प्राय इत्थमेव निर्दिश्यन्ते, तद्यथा—"पिसाय भूया जक्खा रक्खसा किनरा य किंपुरिसा । महोरगा य गंधव्वा अट्ठविहा वाणमंतरिया ॥ १ ॥" इह तु किनरादिक्रमनिर्देशकारणं स्वयमभ्यूह्यमिति ॥ १८ ॥ ज्योतिष्कभेदानाह—

**चंदा सूरा य गहा नक्खत्ता तारगा य पंचविहा । जोइसिया नरलोए गइरयओ संठिया सेसा ॥ १९ ॥**

असङ्ख्येयाश्चन्द्राः असङ्ख्येयाश्च सूर्याः, एवं प्रत्येकमसङ्ख्याता ग्रहनक्षत्रतारका इत्येवं ज्योतिष्काः पञ्चविधाः । आह-ननु ते परिदृश्यमानचन्द्रादित्वत्सर्वेऽपि चला उत केचिदवस्थिता अपि भवन्ति ? इत्याशङ्क्याह-'नरलोए गइरयउ' ति नरलोके-मनुष्यक्षेत्रे तत्र, ये ज्योतिष्कास्तत्र नरलोके मानुषोत्तरपर्वतादर्वाग् वर्तन्ते ते सर्वेऽपि गतौ-चलने रतिः-स्वभावतो वृत्तिर्येषां ते गतिरतयः, शेषास्तु ये मानुषोत्तरपर्वतात्परेण स्वयम्भूरमणसमुद्रं यावद्वर्तन्ते ते सर्वेऽपि 'संस्थिता' अचलनस्वभावत्वेन स्थानस्था एव तिष्ठन्तीत्यर्थः, क्वचित् 'तिरियलोए' इतिपाठः, स चासङ्गत एव लक्ष्यते, यतो नरलोके गतिरतय इत्येवमभिधाय संस्थिताः शेषा इत्युपपद्यते, नान्यथा, तिर्यग्लोकादन्यत्रैषा

त्याख्यानावरणकषायक्षयोपशमसम्भवेन देशविरतेरपि :लाभादिति भाव,, प्रमत्तसंयतादीनि तु गुणस्थानानि तेषु न लभ्यन्ते, अवश्य प्रत्याख्यानावरणकषायोदयस्य सद्भावात, तदुदये च सर्वविरतेरभावादिति, मनुष्यगतौ पुनश्चतुर्दशापि जीवसमासा प्राप्यन्ते, तस्या सर्वस्यापि मोहनीयादेरुदयक्षयोपशमादिसम्भवादिति, सामान्यचिन्ता चेयमतो विशेषचिन्तायामपि किञ्चिदिग्मात्रमभिधीयते—'मिच्छद्दिट्ठी'त्यादि, ये लब्धितोऽपर्याप्ता मनुष्यास्तिर्यञ्चश्च ते सर्वेऽपि मिथ्यादृष्टय एव, सङ्क्लिष्टत्वेन शेषगुणाना तत्रासम्भवादिति, एव कर्म्माकर्म्मभूमिजादिभेदेन विशेषविचारणायामपरेऽपि ये विशेषास्ते स्वयमभ्यूह्या इति गाथार्थ ॥ २२ ॥ अवसित गतिद्वारमथेन्द्रियद्वार निरूप्यते, इन्द्रियाणि च निराश्रयाणि न सभवन्ति, आश्रयाश्च तेषामेकेन्द्रियादिजीवा अतस्तद्द्वारेण तद् विभणिषुराह—

एगिंदिया य बायरसुहुमा पज्जत्तया अपज्जत्ता। वियतियचउरिंदियदुविहभेय पज्जत्त इयरे य ॥ २३ ॥

पंचिंदिया असण्णी सण्णी पज्जत्तया अपज्जत्ता। पंचिंदिएसु चोद्दस मिच्छद्दिट्ठी भवे सेसा ॥ २४ ॥

एकेन्द्रिया द्विविधा, चशब्दस्य भिन्नक्रमत्वाद्बादरा सूक्ष्माश्च, बादरनामकर्मोदयाद्बादरा -सूक्ष्मनामकर्मोदयाच्च सूक्ष्मा इति, तेऽपि प्रत्येक द्विविधा पर्याप्तका अपर्याप्तकाश्च, द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रिया अपि प्रत्येक द्विभेदा -पर्याप्तका इतरे च-अपर्याप्तका, पञ्चेन्द्रिया अप्यसञ्ज्ञिसञ्ज्ञिभेदाद् द्विविधा, सम्मूर्च्छजा गर्भजाश्चेत्यर्थ, तेऽपि प्रत्येक द्विभेदा -पर्याप्तका इतरे वा-अपर्याप्तकाश्चेति, तदनेन "एगिंदियसुहुमियरा सण्णियरपणिंदिया य सवितिचऊ। पज्जत्तापज्जत्ता भेएणं चउदसग्गामा॥१॥" इति स्थानान्तरे यश्चतुर्दशधा भूतग्राम प्रोक्त स इहेन्द्रियाणामाश्रयत्वेनोक्तो विज्ञेय। तदित्थमिन्द्रियभणनप्रक्रमेण तदाश्रयभूतान् चतुर्दशविधानेकेन्द्रियादिजीवानभिधाय साम्प्रत तेष्वेव ये यत्र यावन्तो जीवसमासा सभवन्ति तान् तत्र तावतो दर्शयन्नाह-'पंचिंदिएसु' इत्यादि, पञ्च इन्द्रियाणि येषा ते पञ्चेन्द्रिया पर्याप्तापर्याप्तसञ्ज्यसञ्ज्ञिपञ्चेन्द्रियरूपास्तेषु मिथ्यादृष्ट्यादिगुणस्थानरूपाश्चतुर्दशापि जीवसमासा प्राप्यन्ते, पञ्चेन्द्रिया हि सामान्येन नारकादयो मनुष्याश्चोच्यन्ते, तेषु च मिलितेषु यथोक्तानि चतुर्दशापि गुणस्थानानि लभ्यन्त एवेति भाव, शेषा पुन

एकेन्द्रियादिषु जीवस, गा. २३-४

सूक्ष्मापर्याप्तैकेन्द्रियादयो दशापि जीवभेदा मिथ्यादृष्टय एव, तथाविधविशुद्ध्यभावत शेषगुणस्थानाना तत्रासम्भवादित्यत आह—ननु करणापर्याप्तेषु बादरपृथिव्यब्वनस्पतिषु करणापर्याप्तद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियेषु च सास्वादनसम्यग्दृष्टि प्राप्यते स कस्मान्नोक्त ? सत्यं किन्तु स्वल्पकालभावित्वान्न तस्येह गणना कृता, यद्वाऽनन्तानुबन्ध्युदयकलुषितत्वात् प्रत्यासन्नीकृतमिथ्यात्वोदयत्वाच्च मिथ्यादृष्टित्वेनैवायमिह विवक्षित इत्यदोष इति गाथाद्वयार्थः ॥ २४ ॥ आह—ननु अत्र गाथाद्वयेन सूक्ष्मबादरैकेन्द्रियद्वित्रिचतुरिन्द्रियसञ्ज्ञ्यसञ्ज्ञिपञ्चेन्द्रियलक्षणा सप्तापि जीवभेदा पर्याप्तापर्याप्तविशेषणाभ्यां विशेषिताश्चतुर्दशविधत्वेनोक्ता तत्कास्ता पर्याप्तयो यद्योगात्पर्याप्ता भवन्ति यद्वैकल्याच्चापर्याप्तत्वमासादयन्तीत्याशङ्क्य प्रसङ्गत पर्याप्तिस्वरूपनिरूपणार्थमाह—

**आहारसरीरिंदियपज्जत्ती आणपाण भासमणे। चत्तारि पंचछप्पिय एगिंदियविगलसण्णीणं ॥ २५ ॥**

इहाहारादिपुद्गलग्रहणपरिणमनहेतु शक्तिविशेष पर्याप्ति सा च षड्भेदा प्रोक्ता, तद्यथा—यया ऽऽहारपुद्गलानादाय खलरसरूपतया परिणमयति साऽऽहारपर्याप्ति १ यया तु रसीभूतमाहारं रसासृग्मांसमेदोऽस्थिमज्जाशुक्रलक्षणधातुतया परिणमयति सा शरीरपर्याप्ति २, यया तु धातुभूतमाहारमिन्द्रियतया परिणमयति सेन्द्रियपर्याप्ति ३, यया त्वानापानवर्गणाद्रव्यमादायानापानत्वेन परिणमय्य मुञ्चति साऽऽनापानपर्याप्ति ४, यया पुनर्भाषावर्गणाद्रव्यमादाय भाषात्वेन परिणमय्य मुञ्चति सा भाषापर्याप्ति ५, यया तु मन प्रायोग्यवर्गणाद्रव्यमादाय मनस्त्वेन परिणमय्य मुञ्चति सा मन पर्याप्ति ६, तदेव गाथापूर्वार्द्धमत्रोपात्तपर्याप्तिशब्दस्य सर्वत्र योजनात् षट् पर्याप्तयोऽवगन्तव्या । आह किं सर्वेषामपि जीवाना सर्वा अप्येता पर्याप्तय प्राप्यन्ते ? नेत्याह—' चत्तारि ' इत्यादि, यथासङ्ख्येन सम्बन्ध, तद्यथा आद्या चतस्र एकेन्द्रियाणां, भाषामनसोस्तेष्वभावात्, विकलशब्देन चात्र मनोविकला गृह्यन्ते, ते च पारिशेष्यात् द्वित्रिचतुरिन्द्रिया असञ्ज्ञिपञ्चेन्द्रियाश्च लभ्यन्ते, तेषामाद्या पञ्चैव पर्याप्तयो, न तु मन पर्याप्तिमनसस्तेष्वभावादिति, सञ्ज्ञिपञ्चेन्द्रियाणां पुन षडपि पर्याप्तय प्राप्यन्ते, मनसोऽपि तेषा सद्भावादिति गाथार्थः ॥ २५ ॥ उक्तं सप्रसङ्गमिन्द्रियद्वारमथ कायद्वारमाह—

**पुढविदगअगणिमारुय साहरणकाइया चउद्दा उ। पत्तेय तसा दुविहा चोद्दस तस सेसिया मिच्छा ॥ २६ ॥**

पृथिव्युदकाग्निवायुकायिकास्तथा वनस्पतयोऽपि ये साधारणकायिका निगोदस्वरूपा इत्यर्थः एते पञ्चापि प्रत्येक चतुर्द्धा भवन्ति, सूक्ष्मबादरपर्याप्तकापर्याप्तकभेदात्, पृ- थिव्यादयः पञ्चापि कायाश्चतुर्विधा भवन्तीत्यर्थ, ये तु प्रत्येकस्वरूपा निम्बाम्रकोशम्बजम्बूप्रभृतयो वनस्पतयस्तथा द्वित्रिचतुष्पञ्चेन्द्रियरूपास्त्रसकायिका, एते प्रत्येकं पर्याप्ताप- र्याप्तकभेदाद् द्विविधा एव, सूक्ष्मबादरलक्षण तु भेदद्वयमेतेषु न सम्भवति, बादरनामकर्मोदयाद्, बादरत्वादेवामीषामिति भाव । तदेवं पृथिव्यादीन् कायान् निरूप्य तेषु जीवसमासां- श्चिन्तयन्नाह-'चोद्दस' त्यादि, यथोक्तस्वरूपेषु त्रसकायिकेषु सामान्यचिन्तया चतुर्दशापि गुणस्थानलक्षणा जीवसमासा प्राप्यन्ते, विशेषचिन्ता तु स्वयमभ्यूह्य कर्तव्या, शेषास्तु प्रत्येकवनस्पतिकायपर्यन्ता सर्वेऽपि मिथ्यादृष्टय एव, तथाविधविशुद्ध्यभावेन शेषगुणस्थानकानामभावात्, करणपर्याप्तबादरपृथ्वीकायिकादिषु सास्वादनसम्यग्दृष्टयभणनकारण पूर्वोक्तमेवेति गाथार्थः ॥ २६ ॥ आह-नन्वेते बादरपृथिवीकायिकादय पर्याप्तापर्याप्तभेदद्वयभिन्ना प्रोक्तास्तत्किमेतदेव भेदद्वयममीषा सम्भवत्याहोश्विदन्येऽपि भेदा सन्ति ? इति, अत्रोच्यते, सन्त्यन्येऽपि भेदा, केवल स्थानान्तरे तेषा विस्तरेणोक्तत्वादिह तु दिग्मात्रस्यैव दिदर्शयिषितत्वात्सर्वे नोक्ता, कथ पुन स्थानान्तरे तेऽभिहिता ?, उच्यते, बादरपृथिवीकायिका द्विविधा प्रज्ञप्तास्तद्यथा-श्लक्ष्णबादरपृथ्वीकायिका खरबादरपृथ्वीकायिकाश्च, तत कृष्णनीललोहितपीतशुक्लमृत्तिकापनकमृत्तिकापाण्डुमृत्तिकाभेदत श्लक्ष्णबादरपृथ्वीकायिका सप्तविधा, तत्र पाण्डुश्चा मृत्तिकैव या 'पाण्डु' त्ति लोके प्रतीता सा पाण्डुमृत्तिकेत्युच्यते, अस्याश्च शुक्लमृत्तिकाग्रहणेन सङ्ग्रहेऽपि भेदेनोपादान कृष्णादिमृत्तिकानामपि स्वस्थाने वर्णादितारतम्याद्भेदबहुविधत्वसूचनार्थमिति, पनको नभसि विवर्तमानात्यन्तसूक्ष्मरजोरूप स एव मृत्तिका पनकमृत्तिका, मरुषु पर्पटिकेति रूढा, चरणाभिघाते सति या झगित्युज्जृम्भते सा पनकमृत्तिकेत्यन्ये, जलाश्रितपङ्करूपेत्यपरे । खरबादरपृथ्वीभेदान् पुनर्विनेयजनानुग्रहार्थं प्रसङ्गत सूत्रकार स्वयमेवाह —

**पुढवी य सक्करावालुया य उवले सिला य लोणूसे। अयतंबतउयसीसय रुप्पसुवण्णे य वइरे य ॥ २७ ॥**

**हरियाले हिंगुलए मणसिला सासगंजणपवाले। अब्भपडलऽब्भवालुय बायरकाए मणिविहाणा ॥ २८ ॥**

तद्वशात् सुदृश्यत्वात् गम्यमानत्वात्पृथ्वीशब्देनेह शुद्धपृथिवी गृह्यते, या कर्करात्पृथक्भेदरूपा च भवतीत्यर्थ, चशब्द उक्तभेदापेक्षया समुच्चये, शर्करा लघूपलशकलरूपा, वालुका च प्रतीता उपला-गण्डशैलादि शिला च दृषत्स्वरूपा लवणं प्रतीतम् ऊषा-क्षारमृद्विशेषः, चारमृत्तिकाविशेष, अयस्ताम्रत्रपुसीसकरूप्यसुवर्णानि च विदितानि, तामसत्वं तामसत्वं सम्यग्भिन्नो धातुर गजेह महात्म्या न पुनर्लोके व्यवह्रियमाणा अय पिण्डरूप, तथा अप वाद्विताप्यपद्धात्वेन तनत्वात् सचित्तपृथ्वीभेदानां इह प्रस्तुत्वादिति, तथा तु तत्सत्यादनन्तर चैवमभिधान, धात्ववस्थायामपि एतेत यथरूप्यादीनि सन्त्येव, पञ्चादिसाम्यभेदात्तु भवशिगमता विशिष्टस्वरूपाभिभाव एषामीषां समयन इति, वज्रं हीरक, हरितालो हिङ्गुलको मनःशिलाति च प्रतीता एव, सीसकश्च धातुविशेष अञ्जन-सौवीराञ्जनस्वरूपं, प्रवाल च विद्रुम अभ्रपटल जनविदितमेव श्लक्ष्णाभ्रपटलान्विता बालुकाऽभ्रवालुका, गाथाद्वयपृथ्वीकायेऽमी भेदा इति शेष, चस्य गम्यमानत्वान्न करानभेते, ' मणिविधानानि च ' मणिभेदाश्चह ज्ञेया इति गाथाद्वयार्थ ॥ २८ ॥
यानि पुनस्तानि मणिविधानानि ? इत्याह— गोमेज्जए ये' त्यादि,

गोमेज्जए य रुयए अंके फलिहे य लोहियक्खे य । चंदप्पह वेरुलिए जलकंते सूरकंते य ॥ २९ ॥

गेरुय चंदण वधगे भुयमोय तह मसारगल्ले य । वण्णाईहि य भेदा सुहुमाणं नत्थि ते भेया ॥ ३० ॥

गाथाद्वय दशाद्य मत्स्य स्फटिक लोहिताक्ष चन्द्रप्रभो वैडूर्यो जलकान्त सूर्यकान्त इति ॥ गैरिकचन्दनो वधका भुजमोचकस्तथा मसारगल्लश्चेति एतेऽपि सर्वे खरबादरपृथ्वीकायभेदा । आह ननु अन्यत्रैतानि मणिविधानान्येवं पठ्यन्ते— ' गोमेज्जए य रुयए अंके फलिहे य लोहियक्खे य । मरगय मसारगल्ले भुयमोयग इंदनीले य ॥ १ ॥ चंदण गेरुय हंसग पुलए सोगंधिए य बोद्धव्वे । चंदप्पह वेरुलिए जलकंते सूरकंते य ॥ २ ॥" तत्कथमत्रैवं पठितानि ?, सत्यं, किन्तु परस्परं कस्यचित्कश्चिदन्तर्भावादविरोधो भावनीयस्तत्र तु बहुश्रुता एव विदन्तीति, एतेषां च खरबादरपृथ्वीकायिकानां सर्वेषामपि उक्तभेदेभ्योऽन्यऽपि वर्ण

न गुन्जावात, मह' त्ति वृक्षादीन् भञ्जन् यो वाति स महावात इत्यर्थः, घनवाततनुवातौ तु घनोदध्याद्याधारभूतौ प्रतीतावेव वातशब्दश्चेह प्रत्येकमपि सर्वत्र योजित सद्धनवाताद्यास्यपि भेदा मन्दप्रतिता दृश्यन्त तेषामिहाद्युवातवातान्तर्गतत्वात् सङ्ग्रहो द्रष्टव्य तत्र यो बहि स्थितमपि तृणादिकं सत्त्वमन्तरीकृत्य विविच्चितमनसा स्तेन क्षिपति स संवर्तकवात, वर्णादीत्यादि पूर्ववदिति गाथार्थ ॥ २९ ॥ बादरवनस्पतिभेदानाह—

मूलग्गपोरबीया कंदा तह खंधबीय बीयरुहा। संमुच्छिमा य भणिया पत्तेय अणंतकाया य ॥ ३० ॥

मूलं बीजं यषा ते मूलबीजा उत्पलकन्दकदल्यादयः, अग्रं बीजं येषां तेऽग्रबीजा—कोरण्टकनागवल्ल्यादयः, पर्व बीजं येषां ते पर्वबीजा इक्ष्वादयः 'कन्द' त्ति अत्रापि बीजशब्दः सम्बध्यते, कन्दो बीजं येषां ते कन्दबीजा—सूरणादयः 'खंधबीय' त्ति स्कन्धो बीजं येषां ते स्कन्धबीजाः शल्लकीपारिभद्रादयः 'बीयरुह' त्ति बीजाद्रोहन्तीति बीजरुहाः शालिमुद्गादयः, समूर्च्छन्ति तथाविधप्रसिद्धबीजाभावेनैव दग्धभूम्यादावपि समुत्पद्यन्तेति संमूर्छिमा तृणादयः, कः पुनरनन्तरोक्ता मूलाग्रादिभेदेन प्रतिपत्तव्या इत्याह—'पत्तेय' त्ति एकमेकं प्रति प्रत्येकं एकैकशो विभिन्नं शरीरं तत्र गाथाबीजा अपि वनस्पतयो मुद्गादयोऽत्र प्रत्येका ग्राह्या, तेषां हि यद्यप्यन्यान्यगुणा न तदन्यत्य अभेदप्रतिभासस्तु पुरीषाणि सपर्षपाणामिव तथापीक्षितं, उक्तं च—'जह सगलसरिसवाणं सिलेसमिस्साण वट्टिया वट्टी। पत्तेयसरीराणं तह हुंति सरीरसंघाया ॥ १ ॥ जह वा तिलपप्पडिया बहुएहिं तिलेहिं मेलिया संती। पत्तेयसरीराणं तह हुंति सरीरसंघाया ॥ २ ॥' अनन्तानामनन्तानां काय—शरीरं येषु वनस्पतिषु ते अनन्तकाया, एत उक्तरूपा अनन्तकायाश्च वनस्पतयो मूलबीजादिभेदभिन्ना सम्भवन्तीति गाथार्थ ॥ ३० ॥ अथ कन्दादिप्रकारान्तरेण वनस्पतिभेदानाह—

कंदा मूला छल्ली कट्ठा पत्ता पवाल पुप्फ फला। गुच्छा गुम्मा वल्ली तणाणि तह पव्वया चेव ॥ ३१ ॥

इह कन्दप्रधाना वनस्पतय कन्दा इत विवक्षिता, ते च सूरणादयस्तेषां हि कन्दा एव बहुतराः, त एव च लोके बहूपयोगिनस्तद्विनाशे च सर्वस्य तत्संबद्धस्य तद्विनाश, एवमनया दिशा शेषाणामपि यद्यत्र सम्भवति तत्तत्र प्राधान्यकारणमभ्यूह्य, तत्र मूलप्रधाना उशीरादयः छल्ली त्वक् तत्प्रधाना वदर्यादय काष्ठत्वगभ्यन्तरवर्ति

|| २८ ||

गूढसिरसंधिपव्वं समभंगमहीरयं च छिन्नरुहं । साहारणं सरीरं तव्विवरीयं च पत्तेयं || ३७ ||

इह यस्य पत्रकाण्डनालशाखादेर्गूढा अलक्ष्यमाणा शिरा भवन्ति सन्धयः पर्वाणि च गूढानि भवन्ति तथा यस्य भज्यमानस्य शाखादेस्त्रोट्यमानस्य च पत्रादेः सम भङ्गुरा भङ्गः छेदः सम्पद्यते हीरकश्च तन्तुलक्षणो मध्ये न भवति, तथा छित्वा गृहायानीतं शुष्कतावस्थाप्राप्तमपि च जलादिसामग्रीं प्राप्य गुडूच्यादिवत्पुनरपि यत् प्ररोहति तच्छिन्नरुहं, तदेतत्सर्वमेतल्लक्षणविशिष्टमुपर्युक्तादिभेदेभ्योऽन्यदप्यनन्तानां जीवानां साधारणं शरीरं प्रतिपत्तव्यं, तद्विपरीतं तु प्रत्येकशरीरं, उपलक्षणं चैतद् यस्यापि छिद्यमानस्य, यदाह— "चक्कागं भज्जमाणस्स, गंठी चुण्णघणो भवे । पुढविसरिसेण भेएण, अणंतजीवं वियाणाहि" || १ || अयमर्थः चक्राकारं सम यथा भवत्येवं भज्यमानस्य ग्रन्थिः शुभ्रचूर्णघनो भवति-यस्य भज्यमानस्य मध्ये शुभ्रो घनचूर्णं उड्डीयमानो दृश्यते, स वनस्पतिरनन्तजीवानां साधारणशरीरमित्यर्थः, यः पुनरसौ सम भज्यते ? इत्यत्र दृष्टान्तमाह—पृथ्वीसदृशभेदेन, अत्र पृथ्वी केदारादौ परिवर्तितशुष्ककाप्यदिका श्लक्ष्णघटिकानिर्मितरतिका या गृह्यते, यथा तस्या भज्यमानाया सम अदन्तुरा भेदा भवति एवं वनस्पतिरपि चक्राकारं सम यो भज्यत इति भाव इति गाथार्थः || ३७ || तदेवं निरूपिताः पञ्चापि पृथ्वीकायिकादयः स्थावराः अथ त्रसकायनिरूपणार्थमाह—

दुविहा तसा य वुत्ता वियला सयलिंदिया मुणेयव्वा । बितियचउरिंदिया वियला सेसा सयलिंदिया नेया || ३८ ||

शीतातपाद्यभिहताः स्थानान्तरमभिलषन्ति चलन्तीति त्रसाः, ते पुनः 'द्विविधा' द्विप्रकाराः प्रोक्ताः, तद्यथा विकलाः सकलेन्द्रियाश्च 'मुणितव्याः' ज्ञातव्याः, तत्र पञ्चलक्षणामिन्द्रियसङ्ख्यामाश्रित्य 'विकलाः' असम्पूर्णा हीनेन्द्रियसङ्ख्या द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियाः, शेषास्तु त्रसकाये ये उद्धरितास्ते सकलेन्द्रिया ज्ञातव्याः, पञ्चलक्षणां सङ्ख्यामाश्रित्य सकलानि सम्पूर्णानीन्द्रियाणि येषां ते सकलेन्द्रिया इति गाथार्थः || ३८ || के पुनस्ते द्वीन्द्रियादयः ? इत्याह—

संखा गोम्मी भमराइया उ विगलिंदिया मुणेयव्वा । पंचिंदिया य जलथलखहयरसुरनारयनरा य || ३९ ||

|| २९ ||

साधारणलक्षणं
द्वित्रीन्द्रियादि
भेदा गा
३७-३९

इह शङ्खादिष्वादिशब्दः प्रत्येकमभिसम्बध्यते, ततश्च शङ्खादयो द्वीन्द्रिया गोमी-कर्णशृगाली तत्प्रभृतयस्त्रीन्द्रिया भ्रमरादयश्चतुरिन्द्रिया, एते तावत्सर्वेऽपि विकलेन्द्रिया मुणितव्या, ये तु सकलेन्द्रियतयाऽनन्तरमुद्दिष्टा पञ्चेन्द्रियास्ते जलचरादयो विज्ञेया, तत्र जले चरन्ति-पर्यटन्तीति जलचरा-मत्स्यमकरादय एव, स्थलचरा गो-गवयप्रभृतय, खचरा -काकबकादय, सुरा-भवनपत्यादय, नारका-रत्नप्रभोत्पन्नादय, नराश्च कर्मभूमिजादय इति गाथार्थ ॥ ३९ ॥ तदेवं कायद्वारस्य प्रस्तुतत्वान्निरूपित पृथिव्यादिभेदत षड्विधोऽपि जीवनिकाय, तत्र च समस्तजन्तूना सांगिका कोटिकोटी कुलाना सहस्रविंशत्यादिभेदभिन्नानि चतुरशीतिर्लक्षाणि योनीना षट् संहननानि षट् च संस्थानानीत्यादयोऽनेके भावाः सम्भवन्ति, तत्र कुलाद्यभिधाने सविशेष किञ्चिन्निरूपकार पश्यन् प्रागादिष्टमिदमाह—

**बारस सत्त य तिन्नि य सत्त य कुलकोडि सयसहस्साइं । नेया पुढविदगागणिवाऊणं चेव परिसंखा ॥ ४० ॥**

इह कुलकोटिशतसहस्रशब्दः प्रत्येकमभिसम्बध्यते, द्वादश कुलकोटिशतसहस्राणि सप्त कुलकोटिशतसहस्राणीत्यादि, कुलान्याश्रित्य परिसङ्ख्यान-परिसङ्ख्या 'ज्ञेया' ज्ञातव्येति सम्बन्ध, केषाम ? इत्याह—'पुढवी' त्यादि, यथासङ्ख्य चेह योजना, तत्र द्वादश कुलकोटिशतसहस्राणि पृथ्वीकायिकाना ज्ञेयानि, उदकजीवाना सप्त, अग्निकायिकाना त्रीणि, वायूना पुन सप्तैव कुलकोटिशतसहस्राणि कुलसङ्ख्या ज्ञेयेति गाथार्थ ॥ ४० ॥ तथा –

**कुलकोडिसयसहस्सा सत्तट्ठ य नव य अट्ठवीसं च । बेइंदियतेइंदिय चउरिंदिय हरियकायाणं ॥ ४१ ॥**

द्वीन्द्रियाणा सप्त कुलकोटिलक्षाणि त्रीन्द्रियाणामष्टौ चतुरिन्द्रियाणा नव 'हरितकायाना' वनस्पतीनामष्टाविंशति कुलकोटिलक्षाणि भवन्तीति गाथार्थ ॥ ४१ ॥ तथा—

**अद्धत्तेरस बारस दस दस कुलकोडिसयसहस्साइं । जलयर पक्खि चउप्पयउरभुयसप्पाण नव हुंति ॥ ४२ ॥**

जलचराणा-पूर्वनिर्दिष्टस्वरूपाणां सार्द्धानि द्वादश कुलकोटिलक्षाणि भवन्ति, पक्षिणा तु द्वादश, चतुष्पदोरःपरिसर्पभुजपरिसर्पभेदत स्थलचरास्त्रिविधा, तत्र

कपिलरक्तादिवर्णभेदात्कुलानेकविधत्वमिखल विस्तरेण, एता एव योनी संवृतविवृतादिधर्मभेदेन सूत्रकार स्वयमेव निरूपयन्नाह—

**एगिंदियनेरइया संवुडजोणी य हुंति देवा य । विगलिंदियाण वियडा संवुडवियडा य गब्भंमि ॥ ४५ ॥**

एकेन्द्रिया नारकाश्च संवृतयोनय, तत्र नारका कथं संवृतयोनय, ?, उच्यते, तदुत्पत्तिस्थानभूताना निष्कुटाना संवृतगवाक्षकल्पत्वात्, देवा अपि सर्वे संवृतयोनय एव 'देवसयणिज्जंसि देवदूसंतरिए अंगुलस्स असंखेज्जइभागमित्ताए सरीरोगाहणाए उववज्जा' इत्यादिवचनत पटप्रच्छादितेषु देवशयनीयेषु देवदूष्याभ्यन्तरे संवृतस्वरूपे तेषा-मुत्पादात्, एवमेतदनुसारत: एकेन्द्रियाणामपि सर्वेषा केवलिदृष्टेन केनापि प्रकारेण संवृतयोनित्व भावनीय, विकलेन्द्रियग्रहणेनेह द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियास्तथा समूर्च्छ-जपञ्चेन्द्रियतिर्यग्मनुष्याश्च गृह्यन्ते, एषामपि मनोविकलत्वेन विशिष्टसम्पूर्णेन्द्रियकार्याकरणात्परमार्थतो विकलेन्द्रियत्वात्, ततोऽमीषा द्वीन्द्रियादीना सर्वेषामपि विवृता-केवलि-गम्येनैव केनापि प्रकारेणागुह्यस्वरूपा योनिर्मन्तव्या, गर्भे तु ये जीवा पञ्चेन्द्रियतिर्यग्मनुष्या समुत्पद्यन्ते तेषा संवृतविवृता योनि, अस्तानावृतत्वस्वरूपेयं, अत्रापि भावनाऽतीन्द्रियज्ञानगम्यैव, केवल मनुष्ययोनिस्वरूपमिदं पूर्वसूरिभिर्लिखितमवलोक्यते, तद्यथा -स्त्रीणा नाभेरध शिराद्वयाऽधस्ताद्वोमुखसंस्थितकोशकाकारा योनि, तस्याश्च बहिश्चूतमञ्जरिकल्पा मांसस्फोटका ऋतुकाले स्फुटन्ति, तेभ्य: शोणित गलति, तत्र केचन रक्तावयवा योनेरन्तर्विशन्ति, ताश्च पुरुषशुक्रसम्पृक्तानासाद्य जीव समुत्पद्यते, तत च कललार्बुदमांसपेश्यादिक्रमेण सर्वावयवनिष्पत्तौ ततो योनेर्निर्गच्छतीति गाथार्थ ॥ ४५ ॥

**अच्चित्ता खलु जोणी नेरइयाणं तहेव देवाण । मीसा य गब्भवसही तिविहा जोणी उ सेसाणं ॥४६ ॥**

नारकाणां च देवाना योनिरचित्तैव, सत्यपि सूक्ष्मैकेन्द्रियव्यापकत्वे तदुपपातक्षेत्रस्य केनापि जन्तुनाऽपरिगृहीतत्वेनाऽचेतनत्वात्, गर्भशब्देनेह गर्भजप्राणिनो विव-क्षितास्तेषा वसति योनि 'मिश्रा' चेतनाचेतनरूपा भवति, अचित्ताना शुक्रशोणितादिपुद्गलाना तत्र सद्भावात् सचित्ताना तु योषिच्छरीरावयवाना सुप्रतीतत्वादिति, शेषाणा: त्वेकेन्द्रियविकलेन्द्रियसमूर्छजपञ्चेन्द्रियाणा त्रिविधाऽपि योनि सम्भवति, केषाञ्चिदपरजीवपरिगृहीतक्षेत्रोत्पन्नाना सचित्ता केषाञ्चित्त्वन्यजीवापरिगृहीतक्षेत्रोत्पन्ना-

संवृताचित्तादि-भेदा योनि गा ४५-६

पृथिव्यव्वायुवनस्पतिविकलेन्द्रियसंमूर्छजपञ्चेन्द्रियाणां त्रिविधाऽपि योनिः संभवति, शीतस्पर्शपरिणतचेवोत्पन्नानां शीता उष्णस्पर्शप्रदेशजातानां तूष्णा शीतोष्णस्पर्शान्वितस्थानसम्भूतानां पुनः शीतोष्णा योनिरिति भाव इति गाथार्थः ॥ ४७॥ यथोक्तयोनिसमुत्पन्नाश्च जीवा यथासम्भवं षट्सु संहननेषु वर्तन्तेऽतः संहननान्यल्पनिरूपणार्थमेवाह—

वज्जरिसह नारायं वज्जं नारायं च नारायं। अद्धं चिय नारायं खीलिय छेवट्ठ संघयणं ॥ ४८ ॥

संहति संहननं-अस्थ्नां परस्परं सम्बन्धप्रापणमिति भावः, तच्चास्थिसम्बन्धस्यैव वैचित्र्यमाश्रित्य षोढा भिद्यते, तत्र वज्रशब्देन कीलिका प्रोच्यते, ऋषभस्तु संहतास्थिद्वयस्यैवोपरि वलयाकारः परिवेष्टनपट्टः, विवक्षितास्थ्नां द्वयोरेकत उभयतो मर्कटबन्धो नाराचः, ततश्चेदमुक्तं भवति द्वयोरस्थ्नोरुभयतो मर्कटबन्धेन बद्धयोः पट्टाकृतिना तृतीयेनास्थ्ना परिवेष्टितयोरुपरि तदस्थित्रयभेदि कीलिकाख्यं वज्रनामकमस्थि यत्र भवति तद्वज्रर्षभनाराचं प्रथमं संहननं, वज्रर्षभाभ्यामुपलक्षितो-नियन्त्रितो नाराचोऽस्मिन्निति कृत्वा १ 'वज्जं नारायं' चेति यत्र तु ऋषभो नास्ति शेषं तु विद्यते तद्वज्रनाराचं द्वितीयमिति, वज्ररहितऋषभनाराचं द्वितीयमित्यन्ये २ वज्रर्षभवर्जं नाराचं तृतीयं ३ 'अद्धं चिय नारायं' ति चतुर्थं चार्धनाराचं द्वितीयमित्यन्ये, यदेकतो मर्कटबन्धं द्वितीयपार्श्वे तु कीलिकाविद्धं तदर्धनाराचमिति हृदयम् ४ ऋषभनाराचवर्जं कीलिकाविद्धास्थिद्वयसञ्चयमात्रं तु कीलिकाख्यं पञ्चमं ५ 'छेवट्ठं' ति इकारस्यानुस्वारस्य च लुप्तस्येह दर्शनाच्छेदे पर्यन्ते सेवार्तं परस्परसम्बन्धघटनालक्षणं वर्तनं प्रतिर्यत्र तच्छेदवृत्तं, कीलिकापट्टमर्कटबन्धरहितमस्थिपर्यन्तमात्रस्पर्शि छेदवृत्ताभिधानं षष्ठं संहननमित्यर्थः, सेवार्तमित्यन्ये, अस्थिपर्यन्तसंस्पर्शलक्षणां सेवामृतं गतमिति सेवार्तमिति हृदयमिति गाथार्थः ॥ ४८ ॥ ऋषभवज्रनाराचशब्दार्थं स्वयमेव व्याचिख्यासुराह—

रिसहो य होइ पट्टो वज्जं पुण कीलिया वियाणाहि। उभओ मक्कडबंधं नारायं तं वियाणाहि ॥ ४९ ॥

गतार्थैव ॥ ४९ ॥ एतानि च संहननानि येषां जीवानां भवन्ति भवन्ति येषां च सर्वथा न भवन्ति तदेतद्दर्शयन्नाह—

व्वियसमुग्घाएणं समोहणई' त्यादि एवम्भूतया विक्रियया निष्पद्यमानत्वाद्वैक्रियमिदमुच्यते अस्वाभाविकमितियावत् नन्वनया व्युत्पत्त्योत्तरवैक्रियसङ्ग्रह एव स्यान्न सहजवैक्रियस्य, तस्य समुद्घातादिक्रियामन्तरेणैव जायमानत्वात्, सत्यं, किन्तूत्तरवैक्रियसमानजातीयपुद्गलैर्निष्पद्यमानत्वाद्वैक्रियमिव वैक्रियमित्युपचारतस्तदपि वैक्रियमुच्यते, अथवौदारिकापेक्षया विशिष्टा विलक्षणा क्रिया विक्रिया तस्यां भवं वैक्रियमित्येवं तदपि गृह्यते, 'पाणिदयरिद्धिसंदरिसणत्थमत्थोवगहणहेउं वा। संसयवोच्छेयत्थं गमणं जिणपायमूलंमि ॥ १ ॥' इत्येवंभूतकार्योत्पत्तौ चतुर्दशपूर्वविदा आह्रियते गृह्यत इत्याहारकं अथवाऽऽह्रियन्ते सूक्ष्मा जीवादयः पदार्था केवलिसमीपेऽनेनेत्याहारकं ३ आहारपाककारणभूतास्तज्जानिसर्गहेतवश्चाप्या पुद्गलास्तेज इत्युच्यते तेनेत्थम्भूतेन तेजसा निर्वृत्तं तैजसं, ओष्मादिलिङ्गगम्यं ४ कर्मणा निर्वृत्तं कार्म्मणमष्टकर्मसमुदायरूपमित्यर्थ ५ तदेवमेतानि पञ्च शरीराणि सामान्येन सर्वजीवानां भवन्ति, विशेषतोऽपि चिन्त्यमानानि 'पंच मणुएसु' त्ति नानाजीवानाश्रित्य मनुष्येषु पञ्चाप्यमूनि लभ्यन्त इत्यर्थः वायुना गर्भजपञ्चेन्द्रियतिरश्चां चत्वारि शरीराण्यौदारिकवैक्रियतैजसकार्म्मणलक्षणानि प्राप्यन्ते, आहारकं तु न लभ्यते, तस्य चतुर्दशपूर्वविद एव सम्भवादिति गाथार्थः ॥ ५३ ॥ देवादीनां शरीरसङ्ख्यामाह—'वेउव्वी' त्यादि,

वेउव्वियतेयकम्मए य सुरनारया तिसरीरा। सेसेगिंदियवियला ओरालियतेयकम्मइगा ॥ ५४ ॥

सुरनारकाः पुनस्त्रीणि शरीराणि येषां ते त्रिशरीरा भवन्ति, कानि पुनस्तानि शरीराणि तथा भवन्ति? इत्याह—वैक्रियं तैजसं कार्मणं चेति औदारिकममीषां न भवति, तस्य तिर्यग्मनुष्येष्वेव सम्भवात्, आहारकमपि न सम्भवति, तस्य मनुष्यचतुर्दशपूर्वधरेष्वेव भावादिति, भणितशेषाः पुनरेकेन्द्रियाः पृथिव्यप्तेजोवायुवनस्पतिलक्षणाः तथा सम्पूर्णेन्द्रियमनोवैकल्याद्विकला द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासंज्ञिपञ्चेन्द्रियस्वरूपा औदारिकतैजसकार्म्मणशरीरवन्त एव भवन्ति, वैक्रियं तु भवप्रत्ययिकं तावदमीषां न भवति, तस्य सुरनारकेष्वेव सम्भवाद्, उत्तरवैक्रियमपि न प्राप्यते तल्लब्ध्यभावात्, आहारकाभावे तु पूर्वोक्तमेव कारणं भावनीयमिति गाथार्थः ॥ ५४ ॥ तदेवमभिहितं सप्रसङ्गं कायद्वारमथ क्रमप्राप्तं योगद्वारमभिधित्सुराह—

सच्चे मोसे मीसेऽसच्चे मोसे मणे य वाया य। ओरालियवेउव्विय आहारयमिस्सकम्मइए ॥ ५५ ॥

मनोविषयो वाग्विषयश्च स सत्यो मृषा मिश्रोऽसत्यामृषश्चेति योगः प्रत्येकं चतुर्द्धेत्यक्षरघटना, भावार्थस्त्वभिधीयते-तत्र योग इति तावत्कः शब्दार्थः ?, उच्यते, योजनं योगो जीवस्य वीर्यं शक्तिरुत्साहः पराक्रमश्चेष्टा परिस्पन्द इतियावत्, अथवा युज्यते-धावनवल्गनादिक्रियासु व्यापार्यते य. स योग इति कर्म्मसाधन, यदिवा युज्यते-सम्बध्यते धावनवल्गनादिक्रियाभ्यां जीवोऽनेनेति योग इति करणसाधनः, स च मनोवाक्कायभेदात्त्रिधा, तद्यथा —मनोयोगो वाग्योगः काययोगश्चेति, तत्र तनुयोगेन काय-योगेन मनःप्रायोग्यवर्गणाभ्यो गृहीत्वा मनस्त्वेन परिणमितानि वस्तुचिन्ताप्रवर्त्तकानि द्रव्याणि मन इत्युच्यते, तेन मनसा सहकारिकारणभूतेन योगो मनोयोगो, मनोविषयो वा योगो मनोयोगः १, उच्यते इति वाग्-भाषापरिणामापन्नपुद्गलद्रव्यसमूह इत्यर्थः, तया वाचा सहकारिकारणभूतया योगो वाग्योगो वाग्विषयो वा योगो वाग्योगः २, चीयत इति कायः औदारिकादिस्तेन सहकारिकारणभूतेन योगः काययोगः कायविषयो वा योग. काययोग ३, एष च त्रिविधोऽपि योगः पुनः पञ्चदशधा भिद्यते, तत्र मनो-योगस्तावच्चतुर्धा, तद्यथा-सन्तो मुनयो-जीवादिपदार्था वा तेषां यथावद्रूप मुक्तिप्रापकत्वेन यथावस्थितवस्तुपरिचिन्तनेन वा हित सत्यः, अस्ति जीव शरीरमात्रव्यापक इत्यादि-यथावद्वस्तुविकल्पनपर इत्यर्थ, सत्यश्चासौ मनोयोगश्च सत्यमनोयोगः, आह ननु योग· परिस्पन्दक्रियारूप उक्तस्तस्य च कथं सत्यादिव्यपदेश सम्भवति ?, तदप्रतीतेरे-वाभावादिति, सत्यं, तथाऽपि सत्यमनोविज्ञानसहकारिकारणत्वात् मनोयोगस्यापि सत्यत्वमुच्यते, कारणे कार्यधर्मोपचारादित्येवमन्यत्रापि भावनीयमिति १, सत्यविपरी-तोऽसत्यो, नास्ति जीव· सर्वव्यापकोवा इत्यसत्याद्यथावस्थितवस्तुचिन्तनपर इति भाव., असत्यश्चासौ मनोयोगश्चासत्यमनोयोग २, सत्यश्चासावसत्यश्च सत्यासत्य इति कृता-कृतादिवत्कर्मधारय. स चासौ मनोयोग, इह धवखदिरपलाशादिमिश्रेषु बहुष्वशोकवृक्षेष्वशोकवनमेवेदमिति यदा विकल्पयति तदा प्रस्तुतमनोयोगविषयता, अत्र हि विकल्पः तत्राशोकवृक्षाणां सद्भावात्सत्योऽन्येषामपि धवादीनां कियतामपि विद्यमानत्वादसत्य इति मिश्रत्वात्सत्यासत्यमनोयोगतया प्रोच्यतेऽत एव सूत्रकृता मिश्र इत्युक्तम्, उपल-क्षणं चाशोकवनोदाहरणं, सर्वस्मिन्नपि नगरे गृहे २ दारका जाता· प्रतिगृहं विवाहा इत्यादि विकल्पस्यापि प्रस्तुतमनोयोगविषयता द्रष्टव्या, इदमेवाशोकवनादिक वचनेन ब्रुवतो

वाग्योगश्चेत्यसत्यामृषवाग्योग:, विषयव्यवस्था सर्वत्र पूर्वोक्तेवेति ४ । इह तृतीतचतुर्थौ मनोयोगो वाग्योगौ च परिस्थूरव्यवहारनयमतेनेव द्रष्टव्यौ, शुद्धनयाना तु मनोज्ञानं वचन वा सर्वमदुप्रविवक्षापूर्वकं सत्य अज्ञानादिदूषिताशयपूर्वक त्वसत्य, उभयानुभयरूप तु नास्त्येव, सत्यासत्यराशिद्वयेऽन्तर्भावादिति भावनीय । काययोगस्त्वौदारिकवैक्रियाहारकतन्मिश्रकार्म्मणकायभेदात्सप्तधा, तत्रौदारिकवैक्रियाहारकाण्यनन्तरमेव व्याख्यातानि, 'मिस्स'त्ति अत्र मिश्रशब्दस्त्रिष्वपि शरीरेषु प्रत्येकं संभत्स्यते, ततश्चौदारिकमेव कायस्तेन सहकारिणा योग औदारिककायविषयो वा योग औदारिककाययोग १, मिश्रशब्दसम्बन्धादौदारिक मिश्र यत्र कार्म्मणेनेति गम्यते स भवत्यौदारिकमिश्र, उत्पत्तिदेशे ह्यनन्तरागतो जीव प्रथमसमये कार्मणेनेवाहारयति तत परमौदारिकस्याप्यारम्भादौदारिकेण कार्म्मणमिश्रेणान्तर्मुहूर्तमाहारयति, उक्तञ्च निर्युक्तिकृता—"जोएण कम्मएणं आहारेई अणंतर जीवो । तेण पर मीसेणं जाव सरीरस्स निप्फत्ती ॥ १ ॥" औदारिकमिश्रश्चासौ कायश्च तेन योग औदारिकमिश्रकाययोग, मिश्रताया उभयगतत्वेऽपि कार्म्मणमिश्र इति न व्यपदिश्यते, किन्त्वौदारिकस्य तदा प्रारभ्यमाणत्वेन वहुव्यापारत्वेन च प्रधानत्वात्तेनेव व्यपदेश औदारिकमिश्र इति २, वैक्रियं पूर्वनिर्दिष्टस्वरूप तदेव कायस्तेन योगो वैक्रियकाययोग ३, वैक्रियं कार्म्मणेन मिश्रं यत्रासौ वैक्रियमिश्र,, अयं च देवनारकाणामपर्याप्तावस्थाया मन्तव्य, अत्रापि कार्म्मणमिश्रतानभिधाने कारण पूर्वोक्तमेव भावनीयं, अपरं च वादरपर्याप्तकवायोर्गर्भजपञ्चेन्द्रियतिर्यग्मनुष्याणा च वैक्रियलब्धिमता वैक्रियं कृत्वा तत् परित्यज्य पुनरौदारिकं स्वीकुर्वतामौदारिकेणापि मिश्र वैक्रियमवाप्यत इत्यमीषामपि वैक्रियमिश्रसद्भावो ज्ञातव्य, अथात्र पक्षे यथा वैक्रियमौदारिकेण मिश्रमित्यतो वैक्रियमिश्रमिति व्यपदिश्यते तथौदारिकमपि वैक्रियेण मिश्रमित्यौदारिकमिश्रमित्यपि कस्मान्नोच्यत ? इति चेत्, तदयुक्तं, यतो हन्त प्रधानेनेव व्यपदेशो भवति, वैक्रियपरित्यागकाले च वहुव्यापारत्वात्तदेव प्रधानमतस्तेनेव व्यपदेश, अत एव हि वाय्वादीनां वैक्रियारम्भकाले वैक्रियमिश्रताव्यपदेशो न भवति, औदारिके हि स्थिता अमी वैक्रियमारभन्ते, ततः प्रारम्भकत्वेन वहुव्यापारत्वादौदारिकमेव प्रधानमतस्तेनेव व्यपदेशो भवत्यौदारिकमिश्रमिति, अन्ये तु वैक्रियारम्भकाल एव वाय्वादीना वैक्रियमिश्रता प्रतिपद्यन्ते, प्रारभ्यमाणत्वेन वैक्रियस्य प्राधान्यविवक्षया तेनैव व्यपदेशमिच्छन्तीति भावस्तदलमतिविस्तरेण, तदर्थिना तु **प्रज्ञापनाटीकैव** निरीक्षणीया, वैक्रियमिश्रश्चासौ कायश्च तेन योगो वैक्रियमिश्रकाययोग ४, आहारक पूर्वाभिहितसद्भाव तदेव कायस्तेन योग आहारककाययोग ५, आहारक मिश्रं यत्रौ-

दारिकयेति गम्यते स आहारकमिश्र स चासौ कायस्तेन योग आहारकमिश्रकाययोग यदा सिद्धप्रयोजनश्चतुर्दशपूर्वधर आहारकं परित्यज्य पुनरौदारिकोपादानाय प्रवर्त्तते तदौदारिकेण मिश्रमाहारकं प्राप्यते, प्रभूतव्यापारत्वेन प्रधानत्वादाहारकस्यैव तदा व्यपदेश इति भाव, अन्ये त्वस्यापि प्रारम्भकाल एवाहारकमिश्रतां प्रतिपद्यन्ते, प्रारभ्यमाणत्वेनाहारकस्य प्राधान्यविवक्षया तेनैव व्यपदेशमिच्छन्तीति हृदय ६ कार्मणं निरूपिततत्त्वं तदेव कायस्तेन योग कार्मणकाययोग, कार्मणमिश्रस्तु यथा न सम्भवति तथा निरदिक्षत, कार्मणकाययोगश्च केवलो विग्रहगतौ केवलिन समुद्घातगतस्य च तृतीयचतुर्थपञ्चमसमयेषु प्राप्यत इति भावनीयम्, इह च तैजसकार्म्मणयोरसद्भावे द्वितीयं भवत्यन एकस्याभावे द्वितीयमवश्यतया न भवत्यवश्यं सदैव सहचरितत्वात् कार्म्मणग्रहणेनैव तैजसं गृहीतमित्यनया विवक्षया कार्मणकाययोगात्तैजसकाययोग पृथग् नोक्त इति भावनीयमिति गाथार्थ ॥ ५५ ॥ तदेवं निर्दिष्टा पञ्चदशयोगा इह च जीवसमासा गुणस्थानलक्षणा गत्यादिमार्गणास्थानेषु चिन्तनीया इति प्रस्तुत, तदन्तर्मनसि सम्प्रधार्य गुणस्थानकानि यथोक्तयोगेषु निरूपयितुमाह—

**सच्चे असच्चमोसे सण्णी उ सजोगिकेवली जाव । सण्णी जा छउमत्थो सेस सवाइ अ तयउ ॥ ५६ ॥**

सत्याऽसत्यामृषयोश्च मनोयोगो वाग्योगश्च संज्ञिमिथ्यादृष्टिगुणस्थानादारभ्य यावत्सयोगिकेवलिगुणस्थान तावत्प्राप्यते इदमुक्तं भवति एकेन्द्रियाणां तावन्मनोयोगवाग्योगौ सर्वथैव न सम्भवत, द्वित्रिचतुरिन्द्रियासंज्ञिपञ्चेन्द्रियाणां तु वाग्योग सम्भवति केवलमसावन्त्यामेव गाथायामसत्यामृषतया वक्ष्यतेऽत इह पारिशेष्यात्संज्ञिमिथ्यादृष्टिगुणस्थानादारभ्येत्युक्तम्, अयोगिकेवलिनस्तु सर्वथा योगाभाव एवेति सयोगिकेवल्येव पर्यन्ते निर्दिष्ट इति, सण्णी जा छउमत्थो' 'सेस त्ति भणितशेषम्, असत्यमनोयोगलक्षणसत्यामृषामनोयोगलक्षणवाग्योगलक्षणवाग्योगचतुष्टय संज्ञिमिथ्यादृष्टिगुणस्थानादवारभ्य क्षीणमोहच्छद्मस्थगुणस्थानं यावत्लभ्यते इहाप्येकेन्द्रियद्वित्रिचतुरिन्द्रियासंज्ञिपञ्चेन्द्रियाणामभणने कारणं पूर्वोक्तमेव द्रष्टव्यम्, अपरं च प्रस्तुतयोगचतुष्टयं रागद्वेषाज्ञानानाभोगवतामेव सम्भवति, ते च रागादय सयोगिकेवलिन सर्वथैवाच्छिन्ना इति सयोगिकेवलिनं परिहृत्य क्षीणमोहच्छद्मस्थ एव पर्यन्ते निर्दिष्ट, न चैवमपि मिथ्यादृष्ट्यादिषु प्रमत्तान्तेष्वेव गुणस्थानकेषु प्रस्तुतयोगचतुष्टयस्य सम्भवो

पूर्वविद प्रमत्तसयता आहारककाययोगिनोऽपि भवन्ति, आह तन्नाहारकारम्भकाले एव लब्ध्युपजीवनेनौत्सुक्यसम्भवात्तत्कर्तुः प्रमत्तस्य स्थानान्तरं प्राप्तं, आहारकशरीरस्य निष्पत्तौ पुनरौत्सुक्यनिवृत्तेरप्रमत्तोऽप्यसौ निर्दिष्टस्तत्कथमिह प्रमत्तत्वेनैव प्रोक्त ?, सत्य, किन्तु स्थानान्तरेऽपि येषामेतन्मतमस्ति मनुष्याहारकस्य प्रारम्भे निष्ठाया च तत्कर्ता प्रमत्त एव भवति लब्ध्युपजीवनत्वादिति तन्मतमिहाश्रितमित्यदोष, वैक्रियस्यापीदमेव मतमाश्रित्यासनत्वे निषेधः क्रियते इति भावनीयमिति । 'सव्वे पज्जत्तया मीस'त्ति सर्वेऽपि यथानिर्दिष्टविशेषणविशिष्टाः पूर्वाभिहिताः सुरादयोऽपर्याप्ता-अपर्याप्तावस्थावर्तिनो यावदद्यापि शरीरपर्याप्तिर्न समर्थ्यते इति शेष, तावदमी मिश्रकाययोगवन्तो भवन्ति, तथाहि-सुरनारकास्तावदपर्याप्तावस्थायां सर्वेऽपि पूर्वोक्तस्वरूपवैक्रियमिश्रकाययोगवन्तः प्राप्यन्ते, … मिथ्यादृष्टिसास्वादनाविरतसम्यग्दृष्टय एवैते द्रष्टव्याः, न तु सम्यग्मिथ्यादृष्टय, अपर्याप्तावस्थायां सम्यग्मिथ्यात्वासम्भवात्, तथाहि-तदवस्थायां स्यात्पारभविकं वा औपशमिकं वा ?, न तावत्पारभविकं सम्यग्मिथ्यादृष्टेर्मरणस्यैव निषेधात्, 'न सम्ममिच्छो कुणइ कालं' मिति वचनात्, नापि तद्भविकं, यतो यदि मिथ्यादृष्टिः सन् पर्याप्तावस्थायामपर्याप्त एव सम्यग्मिथ्यात्वं न गच्छति, तदवस्थस्य तथाविधविशुद्ध्यभावात्, अथ सास्वादनः सन् परभवादायातस्तदा पश्चात्कृत(त): ऊर्ध्वमस्य मिथ्यात्वमेव गच्छति, न सम्यग्मिथ्यात्वम्, अथ सम्यग्मिथ्यादृष्टि सन्नसावपरभवादायातस्तस्यानन्तर्येण सम्यग्मिथ्यात्वे गमनमेव नास्ति, अन्यत्र निषिद्धत्वात्, यत उक्तं—'मिच्छत्ता संकंती अविरुद्धा होइ सम्म मीसेसु । मिस्साओ वा दोसु सम्म मिच्छे न उण मीसं ॥ १ ॥'' इति, तस्मादपर्याप्तावस्थायामसौ सम्यग्मिथ्यादृष्टय, ततः सम्यग्मिथ्यादृष्टिसुरनारका न वैक्रियमिश्रसम्भवा इति स्थितं, नरतिर्यञ्चस्त्वपर्याप्ताः पूर्वोक्तस्वरूपौदारिकमिश्रकाययोगिनो गण्यन्ते, केवलमेतेऽपि तस्यामवस्थायां मिथ्यादृष्टिसास्वादनाविरता एव मन्तव्या, यतः सम्यग्मिथ्यादृष्टित्वादयो निरवशेषाऽनन्तरोक्तैव युक्तिरत्राप्यवतरति, देशविरतादीन्यपि गुणस्थानकान्यपर्याप्तावस्थायां न संभवन्ति, विरतिस्तत्र न तद्भावाद्, अपर्याप्तस्य न विरतेः सम्भवोऽत्यन्ताभावादिति । आह-ननु 'सव्वे अपज्जत्तया मीसा' इति सूत्रकृता प्रोक्तं, एतच्चायुक्तमिव लक्ष्यते, पर्याप्तस्यापि मनुष्यस्य सयोगिकेवलिनः समुद्घातावस्थायां द्वितीयषष्ठसप्तमसमयेष्वौदारिकमिश्रस्य सम्भवात्, तथा नराणां तिरश्चां च पर्याप्तानां तद्विमतां वैक्रियस्य आरम्भकाले पूर्वोक्तस्वरूपस्य वैक्रियमिश्रस्य लाभात्, तथा पर्याप्तमनुष्याणामेव चतुर्दशपूर्व-

॥ ४४ ॥

समयत्रयेऽपि तस्मिन् भवत्यनाहारको नियमात् ॥ २ ॥" इति, तदेवं केवलिनं समुद्घाता यथोक्तेषु त्रिषु समयेषु कार्मणकाययोगे प्राप्यन्ते, शेषास्तु देशवि-
रतादयो जीवसमासाः कार्म्मणकाययोगे न प्राप्यन्ते, सयोगिकेवलिनं विहायान्यस्य विग्रहगतावेव केवलकार्मणकाययोगसद्भावात्, तस्यां च देशविरतत्वादिगुणानामसद्भावात्, सम्य-
ग्मिथ्यादृष्टिरपि विग्रहगतो न सम्भवति, यतोऽसौ भवान्तरगमनमप्राप्नुवन् विग्रहगतिभाक्, तस्य चागमे मरणनिषेधात्, एतदेवाह—' न सम्ममिच्छो कुणइ काल'मिति,
सम्यग्मिथ्यादृष्टित्वे वर्तमानो जन्तुः कालं न करोत्येव, तत्स्वाभाव्यादिति, अत्र 'सच्चे मरागमोसे सण्णी उ सजोगिकेवली जावे' त्यादिगाथात्रयोक्तस्यैवार्थस्य तात्पर्यमुच्यते,
तत्र मिथ्यादृष्टिसास्वादनाविरतसम्यग्दृष्टिलक्षणास्त्रयो जीवसमासास्तावच्चतुर्विधमनोयोगचतुर्विधवाग्योगौदारिकौदारिकमिश्रवैक्रियवैक्रियमिश्रकार्म्मणकाययोगलक्षणेषु त्रयोदशसु
योगेषु वर्तन्ते, सम्यग्मिथ्यादृष्टिस्तु चतुर्विधमनोयोगचतुर्विधवाग्योगौदारिकशरीरवैक्रियशरीरलक्षणेषु दशसु योगेषु वर्तन्ते, देशविरतस्तु दशस्वेतेष्वेव तथैकादशे वैक्रियमिश्रकाययोगे
वर्तते, प्रमत्तसंयतस्त्वेतेष्वेवाहारकद्विकसहितेषु त्रयोदशसु योगेषु प्राप्यते, अप्रमत्तादयः क्षीणमोहान्ताः पुनः षड् जीवसमासाश्चतुर्विधमनोयोगचतुर्विधवाग्योगौदारिकशरीर-
लक्षणेषु नवसु योगेषु लभ्यन्ते, सयोगिकेवली तु सत्यमनोयोगासत्यामृषमनोयोगसत्यवाग्योगासत्यामृषवाग्योगौदारिकौदारिकमिश्रकार्मणकाययोगलक्षणेषु सप्तसु योगेषु वर्तन्त
इत्येतत्पूर्वोक्तग्रन्थेनेह प्रतिपादितं, तथा च सति—" चउरो जीवसमासा तेरसजोगेसु दससु एक्को य। एक्कारससु य एक्कं तेरसु एक्को नवसु छक्कं ॥ १ ॥ "
अयोगिकेवलिगुणस्थानं तु योगेषु न वर्तते एवायोगत्वादेवेत्येतदिह सामर्थ्यात् भवतीति गाथार्थः ॥ ५८ ॥ उक्तं योगद्वारमथ वेदद्वारमभिधित्सुराह—

**नेरइया य नपुंसा तिरिक्खमणुया तिवेयया हुंति । देवा य इत्थिपुरिसा गेविज्जाई पुरिसवेया ॥ ५९ ॥**

वेद्यते स्त्र्यादिकामाभिलाषजनकत्वेनानुभूयत इति वेदः-चारित्रमोहनीयान्तर्गतः कर्मपुद्गलसमूहविशेषः, अयं च त्रिधा, तद्यथा-स्त्रियाः पुरुषं प्रति कामाभिलाषजनको
वेदः स्त्रीवेदः, पुरुषस्य स्त्रियं प्रति कामाभिलाषजनको वेदः पुरुषवेदः, नपुंसकस्योभयं प्रति कामाभिलाषजनको वेदो नपुंसकवेदः, एष त्रिविधोऽपि वेद आधारमन्तरेण निराश्रयो
न सम्भवत्यतो नारकाद्याश्रयद्वारेणैव निरूप्यते नारकास्तावन्नपुंसकाः, नारकेषु नपुंसकवेद एव प्राप्यते, तेषामतिसंक्लिष्टत्वेन शेषवेदद्वयाभावादिति भावः, तिर्यग्मनुष्यास्त्रिवेदका

निवृत्तिबादर एव व्यवच्छिद्यते, परतस्तु तदुदयाभाव एवेत्येतस्मिन् कषायलग्ने यथोक्ता एव नव जीवसमासा प्राप्यन्ते, लोभकषायद्वारेऽन्तु सूक्ष्मसम्परायेऽपि भवन्तीत्यत्र सूक्ष्मसम्परायान्ता दश जीवसमासा लभ्यन्त इति गाथार्थ ॥ ६० ॥ उक्त कषायद्वारमथ ज्ञानद्वारं विभणिषुराह—

आभिणिसुओहिमणकेवलं च नाणं तु होइ पंचविहं । उग्गह ईह अवाया धरणाऽऽभिणिवोहियं चउहा ॥ ६१ ॥

ज्ञायते-परिच्छिद्यते वस्त्वनेनेति ज्ञानं-ज्ञातिर्वा ज्ञानं सामान्यविशेषात्मके वस्तुनि विशेषग्रहणात्मको बोध इत्यर्थ, तत् पुनराभिनि भीमो भीमसेन इत्यादिन्यायादेकदेशेन समुदायस्य गम्यमानत्वादाभिनिबोधिकश्रुतावधिमनःपर्यायकेवलभेदात्पञ्चविधं, तत्राभीत्याभिमुख्ये नीति नैयत्ये, ततश्चाभिमुखो वस्तुनो योग्यदेशावस्थानापेक्षी नियत इन्द्रियाण्याश्रित्य स्वस्वविषयापेक्षी बोधोऽभिनिबोध स एव स्वार्थिकतद्धितोत्पादादाभिनिबोधिकं, अथवाऽभिनिबुध्यते-परिच्छिनत्ति वस्त्विदमभिनिबोध इति कर्त्तरि, यद्वाऽभिनिबुध्यते-संवेद्यते आत्मना स इत्यभिनिबोध इति कर्मणि स एवाभिनिबोधिकमिति तथैव, तथा श्रवणं श्रुत-अभिलापप्लावितार्थग्रहणरूप उपलब्धिविशेष, अथवा श्रूयतेऽसाविति श्रुत-शब्द, अयं च कारणे कार्योपचारेण ज्ञानशब्दवाच्यो भवतीत सोऽपि श्रुतमुच्यते, तथाऽवधानमवधि इन्द्रियाद्यनपेक्षमात्मन साक्षादर्थग्रहणम्, अथवाऽवधि-मर्यादा तेनावधिना-रूपिद्रव्यमर्यादात्मकेन यज्ज्ञानं प्रवर्त्तते तदप्यवधिरुपचारादिति, तथा संज्ञिभिर्जीवैः काययोगेनेत्यादिना पूर्वोक्तस्वरूप मन पर्ययति-अवगच्छतीति कर्मणयणि कृते मनःपर्यायमिति, तथा केवलं एकमसहायमसाधारणमनन्तमपरिशेषं चोच्यते, तत्रैकं तद्भावे शेषछाद्मस्थिकज्ञानदर्शनाभावात् असहायं त्विन्द्रियमन आलोकाद्यनिरपेक्षत्वेनार्थपरिच्छेदात् असाधारणं तदन्यदृशत्वात् अनन्तं तदपर्यवसितकालावस्थायित्वात् अपरिशेषं तु सम्पूर्णमुच्यते सम्पूर्णद्रव्यादिज्ञेयग्राहित्वादिति, तत्रैतस्मिन् पञ्चविधेऽवग्रहेहापायधारणाभेदात्तावदाभिनिबोधिकं चतुर्द्धा भवतीति गाथार्थ ॥६१॥ अवग्रहादीनामपि भेदनिरूपणार्थमाह—

पचहिवि इंदिएहिं मणसा अत्थोग्गहो मुणेयव्वो । चक्खिंदियमणरहियं वंजणमीहाइयं छद्धा ॥६२॥

अवग्रहो द्विधा व्यञ्जनावग्रहोऽर्थावग्रहश्च, तत्र व्यज्यते-प्रकटीक्रियते शब्दादिरर्थोऽनेनेति व्यञ्जनं, किं तत् ?, उच्यते, उपकरणेन्द्रियस्य कदम्बपुष्पाकृते श्रोत-

पुलाकादिस्वरूपम्।

दाया सूक्ष्मबकुशा, उक्तञ्च—"आभोगे नाणता करेइ दोसे अजाणमणभोगो। ताण नाविज्जनो असवुडो संवुडो इयरो ॥ १ ॥ अच्छिमुहं मज्जमाणो होइ अहा सुहुमओ तहा बउसो ॥ इत्यादि, एते च बकुशा सामान्येन ऋद्धियशस्कामाः सातगौरवाश्रिता अविविक्तपरिवाराश्छेदयोग्यशबलचारित्रयुक्ता भवन्ति। तत्र ऋद्धिः प्रभूतवस्त्रपात्रादिप्राप्तिर्यशः-ख्यातिर्गुणवत्त्वकामकाः, सातं-सुखं तत्र गौरवं आदरस्तदाश्रिताः, अविविक्तः असंयमात् अपृथग्भूतः समुद्रफेनादिना निघृष्टजङ्घस्तैलादिना विहितशरीरमृजः कर्त्तरिकाकल्पितकेशः परिवारो यस्य तेऽविविक्तपरिवाराः, छेदयोग्यशबलमतिचारैश्चरणं यत्र तेन युक्ताः २, कुशीला द्विविधा प्रतिसेवनाकुशीला कषायकुशीलाश्च, तत्र सेवना-संयमस्य सम्यगाराधना तत्प्रतिपक्षस्तु प्रतिसेवना तया कुशीलाः प्रतिसेवनाकुशीलाः कषायैः सञ्ज्वलनक्रोधादिभिः कुशीलाः कषायकुशीलाः, तत्र प्रतिसेवनाकुशीलाः पञ्चविधा ज्ञानदर्शनचारित्रलिङ्गप्रतिसेवकाः सूक्ष्मप्रतिसेवकाश्च, तत्र ज्ञानदर्शनचारित्रलिङ्गान्युपजीवन्स्तत्प्रतिसेवक उच्यते एष शोभनस्तपस्वीत्यादिप्रशंसया तु यस्तुष्यति स सूक्ष्मप्रतिसेवकः उक्तञ्च— इह नाणाइकुसीलो उवजीवं होइ नाणपभिइए। अहसुहुमो पुण तुस्सं एस तवस्सित्ति संसाए ॥ १ ॥ कषायकुशीला अपि पञ्चविधा ज्ञानदर्शनचारित्रलिङ्गकषायकुशीलाः सूक्ष्मकषायकुशीलाश्च, तत्र ज्ञानदर्शनचारित्रलिङ्गानि सञ्ज्वलनक्रोधकषायप्रयुक्तो यः स्वस्वविषये व्यापारयति स तत्तत्कषायकुशील उच्यते, कषायाविष्ट एव यः कस्यापि शापं प्रयच्छति स चारित्रकषायकुशीलः मनसा तु क्रोधादीन् कुर्वन् सूक्ष्मकषायकुशीलः, अथवा सञ्ज्वलनक्रोधादिकषायाविष्ट एव ज्ञानदर्शनचारित्रलिङ्गानि यो विराधयति अतिचारमलिनानि करोति स ज्ञानादिकषायकुशीलः, सूक्ष्मकषायकुशीलस्तु तथैव, आह च—'नाणं दंसण लिंगं जो जुंजइ कोहमाणमाईहिं। सो नाणाइकुसीलो कसायओ होइ विन्नेओ ॥ १ ॥ अहवा कोहाईहिं नाणाइविराहओ कुसीलोत्ति। मणसा कोहाई कुणंतो होइ सुहुमो उ ॥ २ ॥" उक्ता द्विविधा अपि कुशीला इति ३ निर्ग्रन्था द्विविधा उपशान्तमोहाः क्षीणमोहाश्च, एतत्स्वरूपं तु प्रागेव निरूपितं ज्ञातव्यम्, स्नातकास्तु सर्वोपाधिव्यतीतत्वान्निरुपचरितभेदासम्भवत एकप्रकारा एवेति। एतेषां च पुलाकादीनां व्याख्याप्रज्ञप्तौ— "पन्नवणे वेय रागे कप्प चरित्त पडिसेवणा नाणे" इत्यादि यथोक्तैः षट्त्रिंशता द्वारैर्विचारोऽस्ति तत्र कतिचिदुपयोगीनि कानिचिद् द्वाराण्यपि लिख्यन्ते, तत्र वेदद्वारे पुलाकानां

समर्थकल्पद्रुमाकारं विश्रामणैक महाजम्बूवृक्षमद्राक्षु, तत सर्वैरपि दृर्षमागतैरभिहितम्-अहो अवसरपाठमस्य दर्शनं तस्मान्निवर्तगामो बुभुक्षा भक्षयामो निर्जच्छयाऽस्य सरसफलानि, इत्येकवाक्यतया सत्या तन्मध्ये क्लिष्टपरिणामेनैकेन प्रोक्तं-युक्तमिदं केवलमस्मिन्नारोहता जीवितव्यस्यापि सन्देहस्तस्मात्तीक्ष्णकुठारै रमूलत एव कर्तयित्वा तिर्यगेन प्रपात्य सुखेनैव सर्वफलानि भुञ्जीमहि, एष एवजातीय कृष्णलेश्यापरिणाम १ द्वितीयेन तु किञ्चित्मशूकेनोक्त-किमस्माकमेतावत्प्रमाणेनैतेन महाकृक्षेण कर्तितेन?, महतीं शाखामेवैकामस्य सम्बन्धिनीं कर्तयित्वा पातयामस्ततस्तत्फलान्यभ्यवहराम, एवप्रकारस्तु नीललेश्यापरिणाम २ तृतीयस्त्वाह- किं तयाऽपि महाशाखया कर्तितया, तदवयवभूता एव लघुतराः प्रशाखाश्छिद्य इत्येवविध कापोतलेश्यापरिणामः ३ चतुर्थस्तु जगाद-किं ताभिरपि वराकीभि च्छिन्नाभि?, तत्पर्यन्तवर्तिन गुच्छान्नेव कर्तयाम, अथ तेजसलेश्यापरिणाम ४ पञ्चमस्तु ब्रूते-गुच्छैरपि किं छिन्नैः?, तन्मध्यात्परिपक्वानि भक्षणयोग्यानि कानिचित्तत्फलान्येव गृह्णीम इत्येष पद्मलेश्यापरिणाम ५ षष्ठस्त्वभिधत्ते-तैरपि किमुचितैः?, यावद्भिरस्माक प्रयोजन तावन्ति फलान्यस्य वृक्षस्याधस्तादपि पतितानि प्राप्यन्ते, तद्दूरं नैरेव प्राणवृत्ति कल्पयाम, किमेनन्मोटनभञ्जनादिसन्तापेनेत्येवजातीय शुक्ललेश्यापरिणाम इति जम्बूखादकदृष्टान्त १ ॥ अथ ग्रामघातकाना दृष्टान्त उच्यते-तत्र षड्भिस्तस्करनायकैर्मिलित्वा धनधान्याद्यपहारनिमित्त कस्मिंश्चिद्ग्रामे किल धाटी प्रक्षिप्ता, ततैकेन प्रोक्त-द्विपदचतुष्पदपुरुषस्त्रीबालवृद्धादिक यत्किमपि पश्यत तत्सर्वं मारयतेत्येवजातीयः कृष्णलेश्यापरिणामः १ द्वितीयस्तु नीललेश्यापरिणामयुक्तः प्राह-मानुषानेव मारयत किं तिर्यग्भिरिति २ तृतीयस्तु कापोतलेश्यापरिणामान्वित प्राह-पुरुषानेव विनाशयत, किं स्त्रीभिरिति ३ चतुर्थः पुनस्तेजसलेश्यापरिणामवर्ती जगाद-पुरुषेष्वपि सायुधानेव घातयत, किं निरायुधैरिति ४ पञ्चमस्तु पद्मलेश्यापरिणामयुक्तोऽवादीत्-सायुधेष्वपि युध्यमानानेव निगृह्णीत, किं शेषैर्निरपराधैरिति ५ षष्ठस्तु शुक्ललेश्यापरिणामसम्पन्न प्रतिपादयति-हन्त सर्वमिदमयुक्त, यत एक तावत् धन हरथ अपर च लोकमेन वराक विनाशयथ, तस्मादिदं यद्यप्यपहरत तथाऽपि प्राणान् तावत्सर्वस्यापि लोकस्य रक्षतेति ६ । तदेव प्रदर्शिता सदृष्टान्ता षड् लेश्याः स्वरूपतोऽथ गुणस्थानलक्षणान् जीवसमासान् सूत्रकार एव तासु निरूपयन्नाह—

**किण्हा नीला काऊ अविरयसम्मंत संजयंतऽपरे। तेऊ पम्हा सण्णऽप्पमायसुक्का सजोगंता ॥ ७० ॥**

लेश्यासु दृष्टान्तौ।

गुणस्थानेषु पृथ्व्यादिषु लेश्या गा

कृष्णा नीला कापोती चेत्याद्य लेश्यात्रय मिथ्यादृष्ट्यारभ्याविरतसम्यग्दृष्टय त भवति न परत, इदमुक्त भवति मिथ्यादृष्ट्याद्यविरतसम्यग्दृगन्ता एव जीवा यथायोगलेश्यात्रय वर्त्तन्त न देशविरतादय, तेषां विशुद्धत्वात् लेश्याना चामूषामविशुद्धत्वादिति मजयतऽपरे त्ति 'अपर' अन्य पुनरशुभलेश्यानामिद लेश्यात्रय भवति, यथासम्भव मिथ्यादृष्ट्यारभ्य अप्रमत्तगुणस्थानपर्यन्ता जीवा एतस्मिन् कृष्णादिलेश्यात्रये वर्त्तन्त न त्वप्रमत्तादय इति भाव देशविरतप्रमत्तावस्थायामपि तथाविधविशुद्धभावादिर लेश्यात्रय त प्रतिपद्यन्त इति हृदय, तेऊपम्हा सण्णऽप्पमाय'त्ति संज्ञिपदग्रहणेनात्र मिथ्यादृष्टि सञ्ज्ञी गृह्यते, त मिथ्यादृष्टिसञ्ज्ञिपञ्चेन्द्रियमादौ कृत्वा आरभ्य तदन्तर्गतसम्यग्दर्शनात् न नियत प्रमादा यस्यासौ अप्रमाद अप्रमत्तस्तमन्त व्यवस्थाप्य तैजसी पद्मा च लेश्या प्राप्यत इदमुक्त भवति मिथ्यादृष्ट्यादिष्वप्रमत्तसंयतान्तेषु सप्तसु गुणस्थानेषु वर्तमानस्य सञ्ज्ञिनो जीवस्य तेजसीपद्मालक्षणमपि लेश्याद्वय वर्त्तत न त्वपूर्वकरणादिषु, तेषु शुक्ललेश्याया एवैकस्या सद्भावादिति, आह ननु शास्त्रान्तरेषु पृथिव्यम्बुवनस्पतीनामपि तैजसी लेश्या उक्ताऽत्र तु सञ्ज्ञिन एवासौ प्रोक्ता तत्कथ न विरोध ? इति अत्रोच्यते, इहानन्तरमेवमाख्यायते लेश्या द्विविधा भवन्ति द्रव्यतो भावतश्च, तत्रेशानान्ताना देवानां या अमी व द्रव्यतस्तैजसी लेश्या वक्ष्यते तद्युक्त एव पृथिवी मिथ्यादृष्टिर्देवस्तेभ्यश्च्युत्वा पृथिव्यम्बुवनस्पतिषूत्पद्यते, तस्य च सा पूर्वभवसम्बन्धिनी तैजसी द्रव्यलेश्यैवत्यत्र नाभिहिता भावलेश्यानामेवह गुणस्थानकेषु चिन्तयितुमभिप्रेतत्वात्, अथवा पृथिव्यादीनामपर्याप्तावस्थायामेवैषा भवति, न परत अल्पकालभावित्वनेह नासौ निर्दिष्टेत्यविरोध इति सुक्का सजोगंत त्ति मिथ्यादृष्टिमादौ कृत्वा सयोगिकेवलिपर्यन्ता शुक्ललेश्या प्राप्यते, मिथ्यादृष्ट्यादिषु सयोगिकेवलिपर्यन्तेषु, त्रयोदशसु गुणस्थानकेषु शुक्ललेश्या लभ्यत इत्यर्थ अयोगिनाऽलेश्यत्वादिति गाथार्थ ॥ ■ ॥ अथास्मिन्नेव लेश्याद्वारे प्रस्तुते पृथिव्यादिजीवानां मध्ये कस्य कियत्य कास्ता लेश्या सम्भवन्तीतिशिष्यापेक्षामित्याविष्कुर्वन्नाह—

पुढविदगहरिय भवणे वण जोइसिया असंखनरतिरिया । सेसेगिंदियवियला तियलेसा भावलेसाए ॥ ७१ ॥

पुढवी'त्यादि पृथिव्युदकवनस्पतयस्तथा असुरकुमारादयो भवनपतयो व्यन्तराश्च प्रत्येक कृष्णानीलाकापोतीतेजसीलेश्याचतुष्टययुक्ता भवन्तीति शेष,

॥ ६३ ॥

तथा ज्योतिषिका केवलतैजसीलेश्यासमन्विता भवन्तीत्ययमप्युपस्कारः, असङ्ख्येयवर्षायुषो युगलधर्मानुवर्तिनो नरास्तिर्यञ्चश्च कृष्णनीलकापोतीतैजसीलक्षणलेश्याचतुष्टययुक्ता भवन्तीत्यत्राप्यध्याहारः, शेषैकेन्द्रियास्तेजोवायुलक्षणा द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियलक्षणा विकलेन्द्रियाश्च कृष्णनीलकापोतीलक्षणलेश्यात्रययुक्ता भवन्ति, आह-ननु गाथापूर्वार्धे त्रिषु स्थानेषु लेश्याचतुष्टयादिकोऽध्याहारः कस्माल्लभ्यते? यावतेदमेव गाथापर्यन्तोक्तकृष्णादिलेश्यात्रयमादित एवारभ्य सर्वेषामेव पृथिवीकायिकादीनामविशेषतः कथं न?, उच्यते, नैतदेवं, पृथिव्यब्वनस्पतिभ्यः शेषैकेन्द्रियाणामुत्तरार्धे भेदेनोपादानात्, यदि हि सर्वेषामिदमेव कृष्णादिलेश्यात्रयमभिप्रेतं स्यात्तदेकेन्द्रियान् समुदितानेव निर्दिशेत, किं पृथग्निर्देशेन?, तस्मादत एव भेदनिर्देशात्पूर्वार्धे स्वागमो गम्यते, न च प्रज्ञापनादिग्रन्थसंवादेन यथा निर्दिष्ट एव घटामियर्ति, न हि शास्त्रं शास्त्रान्तरविसंवादेन व्याख्यायमानं प्रमाणतामध्यारोहतीत्यलमतिचर्चितेन, आह-नन्वमी गाथोत्तरार्द्धेन निर्दिष्टास्तेजोवायुप्रभृतयो जीवा द्रव्यलेश्ययैव त्रिलेश्या भवन्तीत्युत भावलेश्ययापि? इत्याशङ्क्याह--'भावलेसाए' त्ति अपिशब्दस्येह गम्यमानत्वान्न केवलं द्रव्यलेश्यया त्रिलेश्याः अपितु भावलेश्ययाप्येते यथोक्तत्रिलेश्या एव भवन्ति, न पुनर्वक्ष्यमाणन्यायेन देवादय इव भावपरावृत्त्या षडपि लेश्या अपि भवन्तीति भावः, पृथिव्यब्वनस्पतयोऽपि द्रव्यलेश्यया यथोक्तकृष्णाद्यशुभलेश्यात्रययुक्ता एव मन्तव्याः, केवलमपर्याप्तावस्थायां पूर्वोक्तयुक्त्या तैजस्यपि चतुर्थी द्रव्यलेश्याऽमीषां द्रष्टव्या, भवनपतिव्यन्तराणां पुनः पूर्वनिर्दिष्टाश्चतस्रो द्रव्यलेश्या एव द्रष्टव्याः, ज्योतिष्काणामपि तैजसी द्रव्यलेश्यैवावगन्तव्या, भावपरावृत्त्या पुनर्भवनपत्यादीनां षडपि लेश्या भवन्ति इति भावः, असङ्ख्येयवर्षायुषस्तु नरतिर्यञ्चो द्रव्यलेश्यया भावलेश्यया च पूर्वोक्तचतुर्लेश्या एव मन्तव्याः, अपरं चास्यां गाथायामुपलक्षणव्याख्यानात्सङ्ख्येयवर्षायुषां गर्भजनरतिरश्चां द्रव्यतो भावतश्च षडपि लेश्या भवन्तीति द्रष्टव्यं, सम्मूर्च्छजानां तु नरतिरश्चां कृष्णादिकास्तिस्रोऽशुभलेश्या इति मन्तव्यमिति गाथार्थः ॥ ७१ ॥ अथ नारकाणां सप्तस्वपि नरकपृथिवीषु क्रमेण लेश्याः प्रतिपादयितुमाह—'काऊ' इत्यादि,

काऊ काऊ तह काउनील नीला य नीलकिण्हा य । किण्हा य परमकिण्हा लेसा रयणप्पभाईणं ॥ ७२ ॥

काउ त्ति रत्नप्रभानारकाणामेका कापोतैव लेश्या भवतीत्यर्थः, काउ त्ति शर्करप्रभानारकाणामपि तैवेत्यर्थः, पर क्लिष्टतरेति द्रष्टव्य, काउनील त्ति वालुकाप्रभाया कापोती नीला च लेश्या भवति कपुचिदुपरितनेषु तत्प्रस्तटेषु कापोतलेश्या कपुचिदधस्तनेषु नीललेश्येति भावः नीला य त्ति चतुर्थ्या पङ्कप्रभापृथिव्या नीललेश्यैव भवतीत्यर्थः, नीलकिण्हा य त्ति मतापि पञ्चमाया धूमप्रभापृथिव्या कपुचिदुपरितनप्रस्तटेषु नीललेश्या शेषेष्वधस्तनप्रस्तटेषु कृष्णलेश्या भवतीत्यर्थः किण्हा य त्ति षष्ठपृथिव्यामेव कृष्णलेश्या भवति परमकिण्हा य त्ति महातमःपृथिव्या परमकृष्णलेश्या भवति, नैव कृष्णलेश्या तस्या क्लिष्टतरा प्राप्या इत्यर्थः उक्तक्रमेण रत्नप्रभादिनारकाणामेता लेश्या भवन्तीति गाथार्थः ॥ ७२ ॥ अथ वैमानिकाना लेश्यानिरूपणार्थमाह—

तेऊ तेऊ तह तेऊ पम्ह पम्हा य पम्हसुक्का य। सुक्का य परमसुक्का सक्कादिविमाणवासीण ॥७३॥

शक्र-सौधर्माधिपतिरिन्द्रस्तदुपलक्षितो यः सौधर्मदेवलोक एव गृह्यते ततश्च सौधर्मादिदेवलोकवर्तिना विमानवासिना देवाना तैजस्यादिका लेश्या क्रमेण विज्ञेयास्तथा—सौधर्मे नाकिनां तैजसी लेश्या भवति ईशानेऽपि सैव केवल किञ्चिद्विशुद्धतराऽसौ द्रष्टव्या, तह तेउपम्ह त्ति सनत्कुमारे कस्यचिन्देवस्य तैजसी [illegible] तेजसी शेषदेवाना तु पद्मलेश्येत्यर्थः पम्हा य त्ति माहेन्द्रदेवलोके पद्मलेश्यैव केवलेति भावः पम्हसुक्का य ब्रह्मलोकेऽपि बहूना देवाना पद्मलेश्यैव विशुद्धतरा प्राप्यते कस्यचिन्देवविशेषस्य [illegible] तु शुक्ललेश्याऽपि लभ्यत इत्यर्थः सुक्का य त्ति लान्तकादिष्वच्युतपर्यन्तेषु देवलोकेषु नवसु च ग्रैवेयकेष्वपि शुक्ललेश्या प्राप्यते केवल लान्तकात् महाशुक्रे सा विशुद्धतरा द्रष्टव्या ततोऽपि सहस्रारे विशुद्धतमेत्येव यथोत्तरं विशुद्धा सा मन्तव्या यावत्सर्वग्रैवेयकेषु पञ्चसु अनुत्तरविमानेषु पुनः परमसुक्का परमशुक्ललेश्या अतिविशुद्धशुक्ललेश्या भवतीत्यर्थः, तदेवं व्याख्याताऽसौ गाथा पर—'किण्हा नीला काऊ तेऊलेसा य भवणवंतरिया। जोइससोहम्मीसाण तेऊलेस्सा मुणेयव्वा ॥ १ ॥ कप्पे सणंकुमारे माहिंदे चेव बंभलोगे य। एएसु पम्हलेसा तेण परं सुक्कलेसा य ॥ २ ॥"

इत्यादि प्रज्ञापनादिषु सनत्कुमारे पद्मलेश्यैव केवला निर्दिष्टा ब्रह्मलोकेऽपि च सैव केवला प्रोक्ता, प्रस्तुतगाथाया तु सनत्कुमारे कियतामपि देवाना तैजस्यप्य

भिहिता ब्रह्मलोकेऽपि केषाञ्चिदमराणा शुक्ललेश्याऽपि प्रतिपादिता, यद्वात तत्त्वं तत्केवलिनो बहुश्रुता वा विदन्तीति, अन्य पुनरेता गाथामन्यथाऽपि व्याख्यानयति, परं तद्व्याख्यान प्रज्ञापनादिभिर्द्दृढविसंवादोत्युपेक्षितमिति गाथार्थ ॥ ३ ॥ इह भवनपत्यादीना वैमानिकान्ताना देवाना नारकाणा [illegible] पर्वं या कृष्णादिका लेश्या केषाञ्चित्काश्चिदेव प्रतिनियता प्रोक्तास्ता द्रव्यलेश्या एव द्रष्टव्या, भावलेश्यास्तु प्रत्येक सर्वेषा षडपि भवन्तीत्यनदिदानी दर्शयितुमाह -'देवाणे'त्यादि,

देवाण नारयाण य दव्वलेसा हवंति एयाउ। भावपरित्तीए उण नेरइयसुराण छल्लेसा ॥ ७४ ॥

देवाना नारकाणा च 'एयाउ'त्ति या पूर्वं यस्यास्य लेश्या प्रोक्तास्ता एता द्रव्यलेश्या एव ज्ञातव्या भवन्तीत्यर्थ, भावस्य-लेश्याद्रव्योपष्टम्भितस्य जिताध्यवसायस्य पुन परावर्तो-परावर्त्तने नारकसुराणा सर्वेषामपि प्रत्येकं षडपि लेश्या भवन्तीति ज्ञातव्यम्, इदमत्र हृदय-लेश्याशब्द शुभाशुभ परिणामविशेष व्याख्यात, तस्य च परिणामविशेषस्य जनकानि सकलकर्म्मनिस्यन्दभूतानि द्रव्याणि जन्तूना सदा सन्निहितानि सन्तीत्यपि पूर्वमेव सूचित, तत्र कृष्णलेश्यापरिणामस्योत्पादकानि द्रव्याणि वर्णतोऽञ्जनपुञ्जादिमलशकृष्णवर्णानि गन्धतो मृतगवादिशरीरगन्धादप्यनन्तगुणाशुभगन्धानि रसत कटुकतुम्बकनिम्बरसादिभ्योऽप्यनन्तगुणकटुकरसानि स्पर्शत करपत्रस्पर्शादप्यनन्तगुणकर्कशस्पर्शानि भवन्ति, नीललेश्यापरिणामजनकानि तु वर्णतश्चासपिच्छवैडूर्यमणिसमानवर्णानि गन्धत कृष्णलेश्याद्रव्यवदेव नवर तस्मात्किञ्चिदसौ शुभतरो मन्तव्य., रसतस्त्रिकटुकहस्तिपिप्पलीरसादप्यनन्तगुणतिक्तरसानि स्पर्शतो गोजिह्वास्पर्शादप्यनन्तगुणकर्कशस्पर्शानि भवन्ति, कापोतलेश्यापरिणामनिर्वर्त्तकानि तु वर्णतस्तैलकण्टककोकिलशरीरपारापतग्रीवादितुल्यवर्णानि गन्धतो नीललेश्याद्रव्यवदेव केवल तस्मादयं मनाग्विशुद्धतरोऽवन्तव्य, रसतस्तरुणाम्रफलतुवरकपित्थरसादप्यनन्तगुणाशुभरसानि स्पर्शत शाकपत्रस्पर्शादप्यनन्तगुणकर्कशस्पर्शानि भवन्ति, तेजसलेश्यापरिणामसम्पादकानि तु वर्णता हिङ्गुलप्रवालदिनकरशुकमुखदीपशिखासदृशवर्णानि गन्धतस्तु सुरभिकुसुमघृष्यमानगन्धद्रव्यतुल्यसुरभिगन्धान्वितानि रसत परिपक्वाम्रफलसुपक्वकपित्थरसादप्यनन्तगुणशुभरसानि स्पर्शतस्तु बूरनवनीतशिरीषकुसुमस्पर्शादप्यनन्तगुणकोमलस्पर्शानि भवन्ति, पद्मलेश्यानिर्वर्त्तकानि तु वर्णतश्चम्पकहरिद्रासणकुसुमसदृशवर्णानि गन्धतस्तेजसलेश्यावदेव नवर शुभतरोऽत्र वक्तव्य रसतः सुसंस्कृतद्राक्षासवादिभ्योऽप्यन-

तदशुभस्पर्शानि स्पर्शतस्तु तैजसलेश्यावद् द्रष्टव्या नवरं कोमलतमोऽत्र द्रष्टव्य । शुक्ललेश्यादिहेतुभूतानि तु द्रव्याणि वर्णतः शङ्खकुन्दक्षीरहारादिसमानवर्णानि गन्धतस्तैजसलेश्या वदत्र नवरं शुभताऽत्र द्रष्टव्या रसतस्तु खर्जूरमृद्वीकाक्षीराद्यपेक्षया तद्बहुशुभरसानि स्पर्शतस्तु तैजसलेश्यावदेव नवरं कोमलतमोऽत्र वाच्य इति । एवं च मन्यते कृष्णादिद्रव्यैरात्मनश्च परिणामविशेषा जन्यन्ते मुख्यतया त एव लेश्याशब्देनोच्यन्ते गौणवृत्त्या पुनः कारणे कार्योपचारलक्षणया एतान्यपि कृष्णादिद्रव्याणि लेश्याशब्देन व्यपदिश्यन्ते ततः कृष्णादिद्रव्याणि द्रव्यरूपा लेश्या द्रव्यलेश्या इति निर्दिश्यन्ते ततो भवनपतिव्यन्तराणां याः कृष्णनीलकापोततेजोलक्षणाश्चतस्रो लेश्या उक्तास्ता द्रव्यलेश्या एव द्रष्टव्याः, यस्य चिद्भवस्य च भवमारभ्य पर्यन्तं यावत्कृष्णलेश्याद्रव्याण्यवस्थितानि प्राप्यन्ते यस्यचिन्नीललेश्याद्रव्याण्येव कस्यचित्कापोतलेश्यैव कस्यचि त्तेजोलेश्यैवेत्यागमात् यावत्तेजोलेश्याद्रव्याण्यवस्थितानि लभ्यन्ते, ननु षड्लेश्या शुक्ललेश्याद्रव्याणामवस्थितादय कस्यापि तत्रास्तीत्यर्थ एवं शेषदेवानां नारकाणां च मध्ये या यस्य पूर्वं लेश्या प्रोक्ता सा तस्य द्रव्यलेश्या द्रष्टव्या, तल्लेश्याद्रव्याणि तस्य देवस्य नारकस्य वा सर्वदैवावस्थितान्यपि द्रष्टव्यानीति तात्पर्यं, भावमाश्रित्य पुनः सर्वेषां देवनारकाणां षडपि लेश्या भवन्तीति, आह ननु भावोऽपि द्रव्यलेश्यानन्यत्वेनैव निर्दिष्टो यदि च द्रव्याणि तथा षट्प्रकाराणि न संभवन्ति तर्हि भावोऽपि षट्प्रकार कथं स्यात् ? आगमान्तरेण वाक्यस्य भवता निर्हेतुकत्वप्रसङ्गात् ?, सत्यं किन्त्ववस्थितादयत्वमाश्रित्य यानि यस्योक्तानि द्रव्याणि तान्येव तस्य भवन्ति, शेषाणि स्वस्व दुदयेन भणितत्वात् अन्यान्यपि तानि तेषामुदयं प्राप्यन्त एव तथाहि-सप्तमनरकपृथिव्यां सर्वदा कृष्णलेश्याद्रव्याण्यवस्थितानि प्राप्यन्ते, कदाचित्तु सम्यक्त्वलाभादिकाले तेजस्यादिलेश्याद्रव्याण्यप्युदयमागच्छन्ति ततस्ते सम्यक्त्वादिभावं प्रतिपद्यन्ते, अन्यथा चेतदङ्गीकर्त्तव्यमन्यथा सम्यक्त्वलाभस्तेषां सर्वथैव प्रोक्तः स नोपपद्येत, अशु भलेश्यापरिणामे तदसम्भवादिति आह—यद्येवं तर्ह्यवस्थितागन्तुकलेश्याद्रव्यस्य परिणामद्वयस्यैककाले सद्भावः प्रसज्यते, न च युगपत्परस्परविरुद्धपरिणामद्वयं समयेऽभ्यु पगम्यते युक्त्या वा संगच्छते, सत्यं, यान्यागन्तुकलेश्याद्रव्याणि कदाचिदुदयमागच्छन्ति तैरवस्थितलेश्याद्रव्याणि प्रतिहतसामर्थ्यानि तथा विधीयन्ते यथा स्वानुरूपं परिणा मं जनयितुं न शक्नुवन्ति तत आगन्तुकलेश्याद्रव्योदयकाले तस्यैव एवैक परिणामः सम्भवति, तत्कुतः परिणामद्वयसद्भावः ? इति आह—यद्येवं तर्हि नारकदेवानां याऽऽरि ता

गुरुरा' नित्यादि नरक कृष्णलेश्या महालापक तत्र गता नीललेश्याऽवगच्छतीति वक्तव्य, आग तु कृष्णलेश्योदयेऽवस्थितनील लेश्याया आगमनस्यैव घनात्, एव यथा नीललेश्याऽन्यापरितन लेश्याभि सह भाविता तथा कापोतीप्रभृतयोऽपि भावनीया, सबल चाधस्तनलेश्यया सहालापकेऽवसर्पतीति वाच्यम्, उपरितनलेश्यया उत्सर्पतीति यावत्कृष्णलेश्या प्राप्याऽवसर्पतीत्यत्र वाच्य, तदुपरि लेश्याया अभावादित्यल प्रसङ्गे न, तस्मादागतु कलेश्यादय व्यवस्थितलेश्यादया न विरुध्यत, तत्रा तत्प्रतिघातस्याश न्यायन निवारितत्वादिति स्थित तत्त्व नारकदेवाना द्रव्यता या यस्योक्ता लेश्या सैव तस्य भाति, भावलेश्यास्तु सर्वा सर्वा एव सम्भवन्तीति समर्थि समग्रश्रीनारकादीना सम्यक्त्वलाभादिकालो तैजसलेश्यादिभव सगमकदेवादीनां श्रीम महावीरोपसर्गकरणादिसमय कृष्णादिलेश्यासद्भावश्च निर्विवादो घन एवति गाथार्थ

॥ ७८॥ भवन्ति यथायोग्य लेश्याद्वारमथ भव्यद्वारमुच्यते-तत्र मुक्तिपर्यायेण भविष्यन्तीति भव्या, य इदानीमद्यापि निर्वाण न प्राप्नुवन्ति आगामिनि तु काले निश्चयेन तत्प्रा प्स्यन्ति त भव्या इत्यर्थ तद्विपरीतास्त्वभव्या अत एव भव्या भवसिद्धिका अप्युच्यन्ते, भवा—भाविनी सिद्धिर्येषा त भवसिद्धिका इतिकृत्वा, तद्विपरीतास्त्वभवसिद्धिका इद च भव्याना भव्यत्वमनादिकालसिद्ध शाश्वतमेव न पुन सामग्र्यन्तरात् पश्चाद्भव्यत्वमुपगच्छति वा, अभव्यत्वमप्यभव्यानामित्थमेव द्रष्टव्य, एताभ्यां च भव्यत्वाभव्यत्वाभ्या सासारिका जीवराशि सर्वोऽपि सगृहीता द्रष्टव्य तत्र चाभव्या स्तोका भव्यास्तु तदनन्तगुणा बोद्धव्या, सिद्धानामनन्तभागवर्तित्वनागमेऽभव्यानां पठितत्वात्, भव्याना तु सिद्धेभ्योऽनन्तगुणत्वेन तत्रैवाभिहितत्वादिति आह ननु यदि भव्यत्वमभव्यत्व चानादिकालसिद्धमभ्युपगम्यते तदा वक्तव्य किमेतत्प्रत्यक्षगम्यमनुमानगम्य वा?, उच्यते, केवलिना प्रत्यक्षगम्य व्यवहारिणा त्वनुमानाद्यमेय, नन्वनुमान लिङ्गात्प्रवर्तते, किं च तल्लिङ्ग येन व्यवहारिणा भव्यत्वमवगच्छेयु ? इत्यत्राभिदध्महे—य ससारविपक्षभूत मोक्ष मन्यते तदवाप्त्यभिलाष च स्पृहयति, किमह भव्योऽभव्यो वा? यदि भव्यस्तदा शोभनमथाभव्यस्तदा धिग्मामित्यादि चिन्ता च कदाचिदपि करोति स इत्यादिप्रका रलिङ्गेन ज्ञायते भव्य इति यस्य तु कदाचिदपि नेय चिन्ता समुत्पन्ना समुत्पद्यते समुत्पत्स्यते वा स ज्ञायतेऽभव्य इति वृद्धा व्याचक्षते यत उक्तमाचाराङ्गटीका याम्—"अभव्यस्य हि भव्याभव्याशङ्काया अभावा" दित्यादि। तदेव निरूपिता स्वरूपत सङ्क्षेपेण भव्या अभव्याश्च सूत्रकार स्वयमेव गुणस्थानलक्षणान् जी

लेश्यान्य...

...सादि भव्या

भव्यस्वरूप च

न्मिथ्यात्वे सर्वथोच्छेदितेषु सत्सु देशघातिनामपि कियतां द्विस्थानिकादिरसस्पर्द्धकानां प्रतिसमयमनन्ते भागे प्रक्षीयमाणे देशोपघातिस्पर्द्धकरसस्याप्येकस्मिन्ननन्ततम भागेऽवतिष्ठमाने इत्यर्थं जीवः सम्यक्त्वमवाप्नोति, नान्यथेति शेष इति गाथार्थः ॥ ७७ ॥ तदेवं निर्दिष्टं सम्यक्त्वस्य लाभकारणं तच्च सम्यक्त्वं त्रिधा भवति, तद्यथा—क्षयोपशमेन निर्वृत्तं क्षायोपशमिकं उपशमेन निर्वृत्तमौपशमिकं क्षयेण निष्पन्नं क्षायिकमिति, ततः क्षयोपशमादीनामेव स्वरूपनिरूपणायमाह—

खीणमुइण्णं सेसयमुवसंतं भण्णए खओवसमो । उदयविघाओ उवसमो खओ य दसणतिगघाओ ॥ ७८ ॥

मिथ्यात्वं यदुदीर्णम्—उदयमागतमासीत् तत्सर्वं यदा 'क्षीणम्' क्षपितं भवति, उदीर्णात्तु न 'शेषकम्' उद्धरितं यद्विवक्षितकालेऽद्याप्युदयं नागच्छति केवलं सत्तायामेव वर्तते तद् 'उपशान्तं' विष्कम्भितोदयं यदा भवति तदाऽस्मीदृशो मिथ्यात्वमोहनीयस्योदीर्णस्य क्षीणत्वादनुदीर्णस्य तूपशान्तत्वात्क्षयोपशमो भण्यते, तेन क्षयोपशमेन निर्वृत्तं क्षायोपशमिकं सम्यक्त्वं, मिथ्यात्वमोहनीये कर्मणि क्षयोपशमावस्थे यज्जन्तवः सम्यक्त्वं लभन्ते तत्क्षायोपशमिकसम्यक्त्वमुच्यत इत्यर्थः, एतच्च सूत्रेऽतदपि प्रक्रमायातत्वात्स्वयमेवावगन्तव्यम्, एवमुत्तरत्रापि, 'उदयविघाओ उवसमो' त्ति उपशमनमुपशमः, स कः? इत्याह—मिथ्यात्वमोहनीयस्य य उदयस्तस्य यो विघातो भवेत् स उपशमः उदयविघातश्चात्र क्षयः, उदीर्णस्य मिथ्यात्वस्य क्षय इत्यपि द्रष्टव्यं, उदीर्णेऽक्षीणे मिथ्यात्वस्योपशमायोगात्, अत एव कस्याञ्चित्पुस्तिकायां 'खओ य दंसणतिगघाओ' इत्यस्य स्थाने 'जा समुइण्णस्स य विसुद्धी' इति पाठो दृश्यते अतोऽयमर्थः—समुदितस्योदयविघातः समुदीर्णस्य चोदयप्राप्तस्य या विशुद्धिः—क्षयः स उपशमः, अत्र पाठे व्याख्यानं सुगमत्वात्स्वयमभ्यूह्यमिति, ततश्चेदमुक्तं भवति—उदयप्राप्तस्य मिथ्यात्वस्य क्षयः शेषस्य त्वनुदीर्णस्य सत्तामात्रवर्तिनो य उदयविघात उदयायोग्यत्वापादनलक्षणः स उपशमः आह—यद्येवं क्षयोपशमस्याप्यवस्थालक्षणस्यैव पूर्वं व्याख्यातत्वात्तस्योपशमेन सह भेदो न प्राप्नोति सत्यं, किन्तु क्षयोपशमावस्थे कर्मणि विपाकत एवोदयो नास्ति प्रदेशतस्त्वस्त्येव, उपशान्तावस्थे तु प्रदेशतोऽपि नास्त्युदय इत्येतावताऽनयोर्विशेष इत्यलं प्रसङ्गेन, तेनोपशमेन निर्वृत्तमौपशमिकं, सम्यक्त्वमिति स्वयमेव द्रष्टव्यं, इदं च यथा लभ्यते यथा च मिथ्यात्वमोहनीयस्य कर्मणोऽन्तरकरणे वर्तमानस्य जीवस्यैतद्भवति

तथाऽत्रैव ग्रन्थे सास्वादनगुणस्थानविचारे पूर्वं दर्शितमेव, क्षायोपशमिकस्यापि सम्यक्त्वस्य शुद्धसम्यक्त्वपुञ्जपुद्गलवेदनरूपस्य स्वरूपं तत्रैव निर्णीतमवगन्तव्यमिति, 'खओ य दंसणतिगघाओ' त्ति दर्शनशब्देन दर्शनमोहनीय कर्मात्र विवक्षितं, तस्य त्रिकं पूर्वोक्तस्वरूपं सम्यक्त्वमिश्रमिथ्यात्वपुञ्जत्रयलक्षणं तस्य यो घातो—विशुद्धाध्यवसायतः सर्वथा दलिकनिर्लेपताकरणलक्षणः स क्षय इहोच्यते, तेन क्षयेण निष्पन्नं क्षायिकं, सम्यक्त्वमभिधीयत इति स्वयमेवावसेयम्, आह—नन्वन्यत्र दर्शनसप्तकक्षयेण क्षायिकं सम्यक्त्वमुक्तं अत्र तु दर्शनत्रिकक्षयादुच्यत इति कथं न विरोधः ?, सत्यं, किन्तु मुख्यतः इदमेव दर्शनत्रिकं सम्यक्त्वस्यावारकमत एव तत्क्षयादेव क्षायिकं सम्यक्त्वं वक्तुमुचितं, यच्चान्यत्र दर्शनसप्तकक्षयादुच्यते तदनन्तानुबन्धिचतुष्टयेऽक्षपिते दर्शनत्रिकं कदाचिदपि न क्षिप्यते, तदक्षपणे तु न क्षायिकं सम्यक्त्वमतः पारम्पर्येणानन्तानुबन्धिचतुष्टयक्षयाविनाभावित्वात्क्षायिकसम्यक्त्वस्य तेऽप्यनन्तानुबन्धिनश्चत्वारः क्रोधादयो दर्शनमोहत्वेन विवक्षिताः, दर्शनसप्तकक्षयाच्च क्षायिकं सम्यक्त्वमित्यन्यत्रोक्तमित्यदोषः, परमार्थतस्तु यथोक्तं दर्शनत्रिकमेव दर्शनमोह उच्यते, तत्क्षयानन्तरमेव क्षायिकसम्यक्त्वोपलब्धेरित्यलमतिचर्चितेन, क्वापि 'खइयं दंसणतिगघाओ' त्ति पाठस्तत्र दर्शनत्रिकघातः क्षय इति शेषस्तेन क्षयेण निष्पन्नं क्षायिकं सम्यक्त्वं भवतीत्युपस्कारः, एवमन्यान्यपि पाठान्तराण्युक्तानुसारतः प्रस्तुताविरोधतो व्याख्येयानीति गाथार्थः ॥ ७८ ॥ तदेवमुक्तं स्वरूपतः सम्यक्त्वमथातः गुणस्थानलक्षणान् जीवसमासांश्चिन्तयन्नाह—

**उवसमवेयग खइया अविरयसम्माइ सम्मदिट्ठीसु । उवसंतमप्पमत्ता तह सिद्धंता जहाकमसो ॥ ७९ ॥**

'**उवसमे**' त्यादि, '**उवसम**'त्ति -औपशमिकं सम्यक्त्वं '**वेयग**' त्ति वेद्यते—अनुभूयते शुद्धसम्यक्त्वपुञ्जपुद्गला अस्मिन्निति वेदकं—क्षायोपशमिकं सम्यक्त्वमुच्यते, औपशमिकक्षायिकसम्यक्त्वयोः पुद्गलवेदनस्य सर्वथैवाभावादिदमेव क्षायोपशमिकं सम्यक्त्वं वेदकमभिधीयत इति भावः, अत एव क्षप्यमाणसम्यक्त्वपुञ्जपुद्गलचरमग्रासलक्षणं यदन्यत्र वेदकं सम्यक्त्वमुक्तं तदिह ग्रन्थे पृथग् नोक्तं, पुद्गलवेदनस्य समानत्वेन क्षायोपशमिकसम्यक्त्व एवान्तर्भावादिति, '**खइय**' त्ति क्षायिकं सम्यक्त्वं, तदेतानि त्रीण्यपि सम्यक्त्वानि '**अविरयसम्माइ सम्मदिट्ठीसु**' त्ति अविरतसम्यग्दृष्ट्यादिषु सम्यग्दृष्टिषु वर्त्तते, न तु मिथ्यादृष्टिसास्वादनमिश्रगुणस्थानकेष्वित्यर्थः । अ-

सुरादिषु सम्यक्त्वं

क्षायोपशमिकं सम्यक्त्वमवाप्यते, मनुष्यतिर्यग्भ्यो वा यः क्षायोपशमिकसम्यग्दृष्टिर्वैमानिकेषूत्पद्यते तस्यैतत्पारभविकं लभ्यते, यदा पुनः कश्चिन्मनुष्यो वैमानिकयोग्यमायुर्बन्धं विधाय पश्चात्क्षपकश्रेणिमारभते बद्धायुष्कत्वाच्च तां न समापयति, केवलं दर्शनसप्तकं क्षपयित्वा क्षायिकं सम्यक्त्वमवाप्नोति, ततश्च मनुष्यायुस्त्रुटिसमये मृत्वा वैमानिकेषूत्पद्यते तदाऽनेन न्यायेन वैमानिकानां पारभविकं क्षायिकं सम्यक्त्वमवाप्यते, न तु तद्भविकं, मनुष्यस्यैव तद्भवे क्षायिकसम्यक्त्वारम्भकत्वादित्येवं वैमानिकास्त्रिविधसम्यग्दृष्टयः, मनुष्यास्तु द्विविधाः - सङ्ख्येयवर्षायुषोऽसङ्ख्येयवर्षायुषश्च, तत्र सङ्ख्येयवर्षायुषां मनुष्याणामौपशमिकसम्यक्त्वमनन्तरोक्तन्यायेन प्रथमसम्यक्त्वलाभकाले भवत्युपशमश्रेण्या वा, तदनन्तरकालादिभावि तु क्षायोपशमिकं तद्भविकं, अथवा देवादीनां क्षायोपशमिकसम्यग्दृष्टीनां मनुष्येषूत्पत्तौ पारभविकं क्षायोपशमिकं सम्यक्त्वमवाप्यते, क्षायिकं तु क्षपकश्रेण्या तद्भविकं, नारकदेवानां क्षायिकसम्यग्दृष्टीनां मनुष्येषूत्पत्तौ पारभविकं वा तदिति, असङ्ख्येयवर्षायुषां तु मनुष्याणामौपशमिकं वैमानिकदेव भावनीयं, क्षायोपशमिकं तु तदनन्तरकालादिभावि तद्भविकं नेयं, तिर्यग्मनुष्यास्तु क्षायोपशमिकसम्यक्त्वयुक्ता वैमानिकेष्वेव जायन्ते नान्यत्र, ये तु मिथ्यादृष्टयस्ते यद्यायुष्कत्वादुत्पद्यन्ते तेऽप्यस्य मरणसमये मिथ्यात्वं गत्वैवोत्पद्यन्त इति पारभविकं क्षायोपशमिकसम्यक्त्वममीषां न लभ्यत इति कार्मग्रन्थिकाः, सैद्धान्तिकास्तु मन्यन्ते—क्षायोपशमिकसम्यक्त्वयुक्ता अपि बद्धायुषोऽमी केचिदेतेषूत्पद्यन्त इति पारभविकमपि क्षायोपशमिकं सम्यक्त्वममीषां लभ्यते, क्षायिकं तु वैमानिकदेववद्वाच्यमिति, रत्नप्रभानारकाणां त्वौपशमिकं क्षायिकं च वैमानिकदेववत्, क्षायोपशमिकं त्वसङ्ख्येयवर्षायुष्कमनुष्यवद्भावनीयमिति, असङ्ख्येयवर्षायुष्कतिरश्चां पुनरमीषामपि सम्यक्त्वान्यसङ्ख्येयवर्षायुष्कमनुष्यवद्व्याख्यानि, 'असंखवासनरतिरिया' इति कथितत्वात्, न चानङ्गता एव, सङ्ख्येयवर्षायुषामसङ्ख्येयवर्षायुषां च मनुष्याणां 'मणुय'-त्वमनेनैव सामान्यपदेन पूर्वमुपात्तत्वादिति, 'वेयगमुवसामगा सेस' त्ति भणितेभ्यः शेषा भवनपतिव्यन्तरज्योतिष्काः सङ्ख्येयवर्षायुष्कपञ्चेन्द्रियतिर्यञ्चः शर्कराप्रभाद्यधस्तनषट्पृथ्वीनारकाश्च 'वेयग' त्ति क्षायोपशमिकसम्यग्दृश्य 'उवसामग' त्ति औपशमिकसम्यग्दृष्टयश्च भवन्ति, क्षायिकं हि सम्यक्त्वमेतेषु तद्भविकं तावन्न भवति, सङ्ख्येयवर्षायुष्कमनुष्यस्यैव क्षायिकसम्यक्त्वारम्भकत्वादित्युक्तत्वात्, पारभविकमपि न भवति, क्षायिकसम्यग्दृष्टेरेष्वनुत्पत्तेः, आह ननु शर्करादीनां क्षायिकस-

पादिष्वमनस्कपञ्चेन्द्रियान्तेषु जीवेषु वृत्ते, ननु मिश्राविरतसम्यग्दृष्ट्यादयस्तेषामेकेन्द्रियाद्यमनस्कपञ्चेन्द्रियान्तेषु कदाचिदप्यवृत्ते, तदिदमत्र हृदयम्—एकद्वित्रिचतुरिन्द्रियामनस्कपञ्चेन्द्रियलक्षणेषु जीवेषु ये वर्त्तन्ते मिथ्यादृष्टिसास्वादनलक्षणा जीवास्त एवासञ्ज्ञिषु प्राप्यन्ते न मिश्राविरतादयोऽसञ्ज्ञिना तथाविशुद्धेरभावात्, सास्वादनोऽपि पूर्वभवादायातो-पर्याप्तावस्थायामेवासञ्ज्ञिषु प्राप्यते, परतो मिथ्यात्वगमनादिति भावनीय, **सन्नी उ' त्ति** तु' पुनरर्थ लुप्तसप्तमीबहुवचनत्वान्मनोलब्धियुक्तसञ्ज्ञिपञ्चेन्द्रियलक्षणेषु सञ्ज्ञिषु पुनरमी, के ? इत्याह—**समणछउमत्थ' त्ति** छादयति आवृणोति केवलज्ञानादीनीति छद्म ज्ञानावरणादिकर्म तत्र तिष्ठन्तीति छद्मस्था क्षीणमोहपर्यन्तगुणस्थानवर्तिनो जीवास्ते चैकद्वित्रिचतुरिन्द्रियासञ्ज्ञिपञ्चेन्द्रिया अमनस्का अपि भवन्त्यतस्तद्व्यवच्छेदार्थमाह समनस्का, ततश्चेदमुक्त भवति-समनस्का सन्तो ये केचन छद्मस्थास्ते सर्वेऽपि सञ्ज्ञिषु वर्तन्ते, ते च मिथ्यादृष्ट्यादिक्षीणमोहपर्यन्ता द्वादशगुणस्थानवर्तिनो जीवा मन्तव्या, मिथ्यादृष्टिसास्वादना समनस्का अमनस्काश्च भवन्त्यतस्तेषां वृत्तिर्यथासम्भवं सञ्ज्ञिष्वसञ्ज्ञिषु च द्रष्टव्या मिश्राविरतादयस्तु समनस्का एव भवन्त्यतोऽमीषां सञ्ज्ञिष्वेव वृत्तिरितीह तात्पर्य सयोग्ययोगिकेवलिनस्तर्हि क्व वर्त्तन्ते ? इत्याह—'न सन्नी' त्यादि, उभयरूपोऽपि केवली न सञ्ज्ञिषु वर्तते नाप्यसञ्ज्ञिषु, यतोऽसौ सञ्ज्ञी तावन्न भवति, तथाहि—मनोव्यापारपूर्वकातीतार्थस्मरणानागतार्थचिन्तादिलिङ्गा दीर्घकालिकमतिश्रुतस्मरणात्मिका सञ्ज्ञेह प्रस्तुता, सा च भगवत केवलिना न सम्भवति निःशेषावरणक्षयोत्पन्नकेवलज्ञानसाक्षात्प्रतिसमयावभासितसमस्तवस्तुस्तोमत्वेन मनोविकल्पस्मरणचिन्तामतिश्रुतव्यापारातीतत्वाद् अत सञ्ज्ञातीतत्वान्न सञ्ज्ञिव्यपदेशभाज केवलिन, तदुक्त— सन्ना सरणमणागयचिन्ता य न सा जिणेसु सभवइ । मइवावारविमुक्का सन्नाइया इम सन्हा ॥ १ ॥' इति, असञ्ज्ञिव्यपदेशं यथा नार्हन्ति तथा प्रतीतमेव, तद्व्यपदेशस्य मनोलब्धिशून्येषु सम्मूर्छजपञ्चेन्द्रियेष्वेव निवेशनात्, केवलिनो तु तल्लब्धिसम्पन्नत्वात्, अत सयोग्ययोगिकेवली न सञ्ज्ञी नाप्यसञ्ज्ञीति विज्ञेय, किन्तु राश्यन्तरमेवेति स्थितमिति गाथार्थ ॥ ८१ ॥ उक्त सञ्ज्ञिद्वारमथाहारकानाहारकद्वारमभिधानीयं, तत्र के आहारका के चानाहारका ? इत्येतदेव तावन्निरूपयन्नाह—

विग्गहगइमावन्ना केवलिणो समुहया अजोगी य । सिद्धा य अणाहारा सेसा आहारगा जीवा ॥ ८२ ॥

॥ ८१ ॥

नुसारेण सुधियाऽन्यथाऽपि भावनीया, उपलक्षणमात्रत्वादस्य, एवं पूर्वमुत्तरत्रापि च, इहापि पूर्वोक्तयुक्तिवशादाद्यसमयद्वयेऽनाहारकस्तृतीयसमये त्वाहारक इति निश्चय नयवादिनो मन्यन्ते व्यवहारनयवादिनस्तु प्रागुक्तयुक्त्यैवैकस्मिन्नेव मध्यमे विग्रहसमयेऽनाहारको न तु प्रथमचरमसमययोरिति प्रतिपद्यन्ते तदेवं सर्वजीवानां भवान्तरप्रतिपत्तौ ऋजुगतिरेकसमया द्विसमया त्रिसमया च विग्रहगतिरित्येतदेव गतित्रयं संभवति, प्रत्येकेन्द्रियाणामेव विग्रहलब्धापन्ना चतुःसमया विग्रहगतिर्यासंभवति तद्भावना प्रतिपाद्यते—इह त्रसनाड्या बहिर्विदिग्व्यवस्थितस्य सतो यदा निगोदादेरधोलोकादूर्ध्वलोके उत्पादो नाड्या बहिरेव दिशि भवति सोऽवश्यमेकेन समयेन विदिशो दिशमागच्छति द्वितीयेन नाडीं विशति तृतीयेनोर्ध्वलोकं व्रजति चतुर्थेन लोकनाडीतो निर्गत्योत्पत्तिस्थानं उत्पद्यते, तदेवं त्रिविग्रहा चतुःसमया विग्रहगतिरियम् अत्रापि पूर्ववदेकीयमतेनाद्येषु त्रिषु समये ष्वनाहारकश्चतुर्थे त्वाहारक, अन्यदीयमतेन तु मध्यमे समयद्वय एवानाहारको न त्वाद्यन्त्यसमययो, तदित्थमागमे जन्तूनां भवान्तरालगतिरियमेव चतुर्विधा प्रोक्ता—ऋजुगतिरेकविग्रहाद्विविग्रहा त्रिविग्रहा चेति, अन्ये त्वाहुः चतुर्विग्रहोपेता पञ्चसामयिकी अन्याऽप्यस्य गतिः संभवति, यदा त्रसनाडीबहिर्विदिशस्तद्बहिर्विदिश्येवोत्पद्यते इति, अत्र च समयत्रयं पूर्ववदेव चतुर्थसमये तु नाडीतो निर्गत्योत्पत्तिस्थानस्य समश्रेणिं प्रतिपद्यते, पञ्चमे तु नाडीबहिर्विदिग्लक्षणमुत्पत्तिस्थानमवाप्नोति, अत्राप्येकेषामाद्यसमयचतुष्टये ऽनाहारकः पञ्चमे त्वाहारक, अन्यथा तु मध्यमे समयत्रय एवानाहारको न तु प्रथमचरमसमययो, उक्तञ्च—'एकं द्वौ वाऽनाहारक' ( तत्त्वार्थे अ०२–सू०३१ ) वा शब्दात् कदाचित्त्रीन् वेति द्रष्टव्यम्, भाष्यकाराभिप्रायेण वाशब्दस्य एकस्य द्वयोश्च विकल्पार्थतयोपयनं, अधिकस्य स्पष्टं तत्र निषेधात्, इयं च पञ्चसामयिकी गतिः कादाचित्का स्वागमे नोक्ता प्रायेणैकेन्द्रियाणामपीत्थमनुत्पत्तेरिति । तदेवं दर्शिता विग्रहगत्यापन्ना अनाहारका, इह च विग्रहगत्यापन्ना एवानाहारका इति नावधारणीयं सिद्धं शेषानामप्य नाहारकत्वाद् विग्रहगतावनाहारका एवेतीत्यमपि नावधार्यते, तस्यामपि केषुचित्समयेष्वनाहारकत्वस्याप्युक्तत्वात्, तर्हि सर्वाणि वाक्यानि सावधारणानि भवन्तीति कथं नेतव्यमिति, उच्यते अनिष्टेऽवधारणं केवलं संभवदर्थनपरमयोगव्यवच्छेदेन विग्रहगतावनाहारकाः संभवन्त्येवेति, यथा नभसि पक्षी जले मत्स्य इत्यादिष्वित्यलं विस्तरेण, तथा सयोगिन केवलिनोऽपि समवहता —समुद्घाते वर्त्तमानास्तृतीयचतुर्थपञ्चमसमयेषु केवलकार्मणकाययोगावस्थायामनाहारका, एतच्चेहापि प्राक् किञ्चित्सविस्तरं प्रोक्तमवति, अयोगिकेवलिन

ओजआहारादिभेदा

सिद्धाश्च पुनः सर्वथैवानाहारका, आहारमहणकारणौदारिकादिशरीरेषु दर्शनकर्मविच्छेदभावादिति, अतोऽन्ये पुनः सर्वेऽपि जीवा आहारका एव ओजाहारलोमाहार प्रक्षेपाहारान्यतराहारग्रहणकारणसद्भावेन यथासम्भवमाहारयन्त्येवेति कृत्वा,, तत्रौजसा तैजसशरीरेण स्वसहचारिकार्मणशरीरान्वितेनाहार सकलकवलोपादाजाहार, अथवा ओज-स्वजन्मस्थानाचितशुक्रानुविद्धशोणितादिपुद्गलसंघातस्तस्याहार ओजाहारः, अयं चापर्याप्तावस्थायामन्तर्मुहूर्तं सर्वजन्तूना द्रष्टव्य, तथा लोमभि लोमरन्ध्रै शिशिरप्रावृट्कालादिभाविना शीतजलादिपुद्गलानामाहरण—ग्रहण लोमाहार, अयं च पर्याप्त्युत्तरकालमाभवक्षयात्समस्तजीवानामसेय, तथा प्रक्षेपण मुखे प्रवेशन प्रक्षेप-स्तेनौदनादेराहार प्रक्षेपाहार, अथवा प्रक्षिप्यत इति प्रक्षेप—ओदनकवलादिस्तस्याहार प्रक्षेपाहार, अयं च विकलेन्द्रियपञ्चेन्द्रियतिर्यङ्मनुष्याणामेव द्रष्टव्य, तेषामपि कादाचित्को न त्वविरहित, उक्तञ्च— "आयाहारा जीवा सव्वे पज्जत्तया मुणेयव्वा। पज्जत्तया य लाम पक्खेवे होंति भइयव्वा ॥ १ ॥ एगिंदियदेवाणं नेरइयाण च नत्थि पक्खेवा ॥ सेसाण जीवाणं ससारत्थाण पक्खेवा ॥ २ ॥" इत्यादि, आह—"ननु मनश्चिन्तितागतत्वात्पक्षेपतुल्योऽप्याहारो भवनपत्यादीना संभवति स कस्मादिह नोक्त, सत्य, किन्तु करादिनाऽप्रक्षिप्ता एवागन्तुका पुद्गला मनआहारतया परिणमन्ति लोमाहारेऽप्यगमेवमिति तावत्साम्यात्तत्रान्तर्भावितत्वात्पृथगनाभिगमेऽपि नोक्त इत्य-दोष,तस्माद्विग्रहगत्यापन्नादिभ्यः शेषा सर्वेऽपि जीवा यथाशक्त्य त्रिविधमाहार यथासम्भवमाहारयन्त्येवेत्याहारका भवति गाथार्थ ॥ ८२ ॥ तदेवमाहारका अनाहा-रकाश्च जीवा स्वरूपता निर्दिष्टा, अथ गुणस्थानलक्षणा जीवसमासास्तेषु चिन्तनीया, ते च सुगमत्वादिकारणत कुचित्सूत्रकृता न चिन्तिता इति मुग्धमतिविनेयानुग्रहाय वयमेव चिन्तयाम, तत्रानाहारकेषु मिथ्यादृष्टिसास्वादनाविरतसम्यग्दृष्ट्यायोगिकेवलिन समुद्घाते तृतीयचतुर्थपञ्चमसमयवर्तिन सयोगिकेवलिनश्च वर्तन्त, न शेषा तथाहि-अयोगिकेवलिन तृतीयचतुर्थपञ्चमसमयवर्तिसयोगिकेवलिन च विहायान्ये संसारिणा जीवा सर्वेऽपि विग्रहगतावेवानाहारका सम्भवन्ति नान्यत्र, सा च पूर्वभवात्कालं कृत्वा भवान्तरप्रस्थितानामेव भवति, सम्यग्मिथ्यादृष्टिश्च तावत्कालमेव न करोति 'न सम्ममिच्छो कुणइ काल' मिति वचनादतोऽस्य कुतो विग्रहगतिसम्भव, तदसंभवे च कथ-मनाहारकत्वमिति, देशविरतादिक्षीणमोहान्तगुणस्थानवर्तिनो जीवा विग्रहगतौ न संभवन्त्येव, भवान्तराले देशविरत्याद्युचितपरिणामस्यैवाभावे निषिद्धत्वादिति अतः एवा-

मन्यनाहारकत्व, समुद्घाततृतीयचतुर्थपञ्चमसमयवर्तमानस्याभिकेवलिनाऽन्यतम सम्भवति चिरकालेतस्याभावादिति, न चैव सम्यग्मिथ्यादृष्टिदेशविरतादिसमुद्घातत्समयसयजस्या गिकेवलिपर्यन्ता जीवा विग्रहगतरन्यत्र मिथ्यादृष्टिसास्वादनाविरता ते चोक्तयुक्तिवशादनाहारकत्वेन व्याख्यातास्ते आहारकेषु वर्तन्त इति सामर्थ्यगम्यात्र भवति, तदेवमुक्तमा हारकद्वार स्वरूपेन च चिन्तिता गत्यादिष्वाहारकपर्यन्तेषु द्वारेषु चतुर्दशगुणस्थानलक्षणा जीवसमासा, तच्चिन्तन चावसित सतपयप्ररूपणया दव्वपमाण चेत्यादिगाथाप न्यस्त प्रथम सत्पदप्ररूपणाद्वारम् अथ द्वितीयं द्रव्यप्रमाणद्वार प्रस्तुतमपि तावत्त्यक्त्वा यत्प्रस्तावे माह यस्मिन्—ननु चिन्तिता भवद्भिर्गत्यादिद्वारेषु गुणस्थानलक्षणा जीवसमासा पर यत्र वनस्पत्यादिसर्वसाधारणलक्षणेनाजीवेभ्यो व्यावृत्ता जीवा भवन्ति तदेव तावदद्यापीह न किञ्चिदभिहितं ततस्तदपरिज्ञाने जीवा अप्यजीवकल्पतया कथ ज्ञातव्या? इत्याशङ्क्य सर्वजीवाना साधारणमुपयोगस्य लक्षणमाह—

नाणं पंचविहंपिय अन्नाणतिगं च सव्व सागारं । चउद सणमणगारं सव्वे तल्लक्खणा जीवा ॥ ८३ ॥

इहोपयोजनमुपयोगः अर्थोपलम्भ, अथवा उपयुज्यते अर्थग्रहणपरिणामेन परिणमति जीवोऽनेनास्मादस्मिन् वेत्युपयोग, अभिप्रेतः सामान्येन बोध इत्यर्थ, स च विवक्षितसाया द्विधा भवति साकारोऽनाकारश्च, तत्र सहाकारेणार्थसम्बन्धिनाऽऽकारेण वर्तत इति साकार न विद्यते आकारोऽर्थसम्बन्धी आकारो यत्रासौ अना कार, तत्र साकारोपयोगोऽष्टधा कथमित्याह—नाणं पंचविह'मित्यादि, ज्ञायते विशेषाकारेण वस्तु परिच्छिद्यतेऽनेनेति ज्ञानम् आभिनिबोधिकश्रुतावधिमनःपर्याय केवलज्ञानलक्षणम्, एतत्पञ्चप्रकारमपि तथा मत्यज्ञानश्रुताज्ञानविभङ्गलक्षणमज्ञानत्रिकं च 'सव्व सागार'ति सर्वमेतत्साकार साकारोपयोग इत्यर्थ, अनाकारोपयोगस्तु चतुर्धा, कथमित्याह चउद सण मिति चक्षुषा दर्शनं-वस्तुन सामान्याकारेण पर्यालोचन चक्षुर्दर्शनम् अचक्षुषा चक्षुर्वर्जेन्द्रियचतुष्टयेन मनसा च दर्शन अचक्षु सामान्याकारेण ग्रहणमचक्षुर्दर्शनम्, अवधिना अवधिरेव वा दर्शनमवधिदर्शनं, केवलं असहाय चक्षुर्दर्शनादिसहचरित दर्शन केवलदर्शनम्, एतद्दर्शनचतुष्टयम् अनागार ति न विद्यते आकारो यत्र तदनाकारम्, अनाकारोपयोग इति तात्पर्यम्, आह—ननु मानुष मानुषमित्यादि सामान्याकारेण गृह्यमाणे वस्तुनि दर्शनमिष्यते, तस्मिन्नेव स्त्री

अथवा एता एव समयावलिकादिका कलाः—कालांशरूपास्ताभिर्निर्वृत्तस्तासां वा समूह इति काल—समयावलिकादिरूप एव, अथ यथा धर्मास्तिकाय इत्युच्यते तथा काला-स्तिकाय इति कस्मान्नोच्यते? इति चेत्, नैव, प्रदेशबहुत्व एव तदुपपत्तेः, अत्र च तन्नास्ति, अतीतानागतसमयानां विनष्टानुत्पन्नत्वेन प्रज्ञापकप्ररूपणाकाले वर्तमानसमयलक्षणा-स्यैकस्यैव प्रदेशस्य सद्भावादिति, यद्येवमावलिकामुहूर्तदिवसादिप्ररूपणाया अभ्यभावप्रसङ्ग प्राप्नोति, आवलिकादीनामप्यसङ्ख्येयसमयात्मकत्वेन प्रदेशबहुत्व एवोपपत्ते?, सत्यमेतत्, केवलं स्थिरस्थूरकालत्रयवर्तिवस्त्वभ्युपगमपरव्यवहारनयमतमाश्रित्यावलिकादिकाल प्ररूप्यते, निश्चयनयस्तु मन्यते-न धर्मास्तिकायादौ प्रदेशराशिरिवावलिकादा-वस्थित समयराशिरस्ति, अतीतानागतानां विनष्टानुत्पन्नत्वेन वर्तमानसमयमात्रस्यैव सत्त्वादिति न वास्तवा आवलिकादयो, नापि कालेऽस्तिकायतेति, अत एव कालोऽन्यत्र वर्तमानसमयमात्रतयैव निर्दिश्य प्रोक्तो न सामान्येन, यदाह—"कइ णं भंते ! दव्वा पन्नत्ता ? गोयमा ! छ दव्वा पन्नत्ता, तंजहा—धम्मत्थिकाए अधम्मत्थिकाए आगा-सत्थिकाए जीवत्थिकाए पोग्गलत्थिकाए अद्धासमए" इत्यलं विस्तरेण, तदेवमेतानि धर्मास्तिकायादीनि चत्वार्यजीवद्रव्याणि 'अरूवीणि' अमूर्तानि ज्ञातव्यानि, पुद्गलाश्च तेऽस्तिकायाश्चेति पुद्गलास्तिकाय इति योऽन्यत्रोक्त स स्कन्धदेशप्रदेशपरमाणुभेदात् चतुर्द्धा भवति रूपाश्चेत्यत आह—'खंधा देस' इत्यादि, तत्र स्कन्धा:—अनन्ता-नन्तपरमाणुप्रचयरूपा मासचक्षुर्ग्राह्याः स्तम्भकुम्भादयस्तद्ग्राह्या अचित्तमहास्कन्धादयोऽपि, देशास्तु तेषामेवार्द्धत्रिभागादयः स्थूलखण्डरूपा अवयवा, प्रदेशास्तु देशानामेव सूक्ष्मशकलस्वरूपा अवयवा एव, 'अणुतिऽवि य' त्ति अणुरिलपि च, निरंशैकपरमाणुरपि चेत्यर्थ, जातिनिर्देशश्चायं व्यक्तिपक्षे त्वणवोऽपि चेति द्रष्टव्य, विसकलितैकाकिपरमाणूनामपि पुद्गलास्तिकायेऽन्तर्भावत्वोपपत्तेः, तदेते स्कन्धदेशप्रदेशपरमाणुरूपाश्चतुर्विधा अपि पुद्गला. पुद्गलास्तिकाया अजीवद्रव्यलक्षणा रूपिणो मूर्ता एव ज्ञातव्या, पूरणगलनधर्मकत्वाच्चैते पुद्गला उच्यन्ते, एते हि कुतश्चिद् द्रव्याद्गलन्ति वियुज्यन्ते किञ्चित्तु द्रव्यं स्वसंयोगतः पूरयन्ति—पुष्टं कुर्वन्ति, तदेवमेतानि धर्मा-स्तिकायादीनि पञ्चापि मूर्तामूर्तस्वरूपाण्यजीवद्रव्याणि ज्ञातव्यानीति गाथार्थ. ॥ ८५ ॥ आह—ननु जीवद्रव्यस्योपयोगो लक्षणमुक्तमात्सदर्शनात्स्य सत्ता प्रतिपद्यामहे, धर्मास्तिकायादीनां त्वजीवद्रव्याणां किं लक्षणं यत्सामीक्ष्य तत्सत्तां प्रतीम ? इत्याशङ्क्याह—

षोडश कर्म्ममाषका एकः सुवर्णः ६, एतत्सर्वं प्रतिमानमुच्यते, केषु द्रव्येषु पुनः परिच्छेदकत्वेन प्रवर्त्तमानमेतद् द्रव्यप्रमाणभेदानां मध्येऽभीयते ? इत्याह-ध्रियन्ते —प्रमाणपरिज्ञानाय नाराचे व्यवस्थाप्यते यानि तानि धरिमाणि-सुवर्णरजतमुक्ताफलादीनि तेषु विषये परिच्छेदकत्वेन प्रवर्त्तमानत्वात्प्रतिमानस्य द्रव्यप्रमाणमुच्यते, गण्यते —सङ्ख्यायते वस्त्वनेनेति गणिमं गणितं वा, तत्पुनरेकादिशताद्दिशीर्षप्रहेलिकापर्यन्तमिहैव वक्ष्यमाणस्वरूपमिति गाथार्थः ॥ ८९ ॥ अथ क्रमप्राप्तमवमानस्य स्वरूपं किञ्चिद् विशेषिततरमाह—

दण्डधणूजुगनालिय अक्खो मुसलं च होइ चउहत्थं । दसनालियं च रज्जुं वियाण अवमाणसण्णाए ॥ ९० ॥

इहावमानं रामगरागरे 'हत्थेण वा दण्डेण वा' इत्यादिवचनेन हस्तदण्डधनुरादिकमुक्तं, अत्र च हस्तः कुतश्चित्कारणात्सूत्रकृता यद्यपि नोक्तस्तथाप्युपलक्षणव्याख्यानाद् द्रष्टव्यः, स चेहैव वक्ष्यमाणस्वरूपात्मांगुलेन चतुर्विंशत्यङ्गुलमानो बोद्धव्यः, तेन च हस्तेन प्रत्येकं चतुर्हस्तप्रमाणा एते दण्डधनुर्युगनालिकाक्षमुशलनामानः षड् मानविशेषा भवन्ति, एतांश्च दण्डाद्यवमानसञ्ज्ञया विजानीहीति सम्बन्धः, एषु च मध्ये नालिका-यष्टिविशेषरूपा ग्राह्या —भू शेषाः प्रतीता एव, तथा दशनालिकाप्रमाणा चत्वारिंशद्धस्तमानाभिधेयां रज्जुं च मानविशेषरूपमवमानसञ्ज्ञया विजानीहि, आह ननु यदि दण्डादयः सर्वेऽपि प्रत्येकं चतुर्हस्तप्रमाणा एव न न्यूनाधिकमानास्तदा एकेनैव दण्डाद्यन्यतरोपादानेन सिद्ध्यति, किं शेषोपादानेन ?, सत्यं, किन्तु वास्तुभूम्यादिकं मेयवस्तुनि लोकरूढिवशादेतेषां समानप्रमाणानामपि भेदेन व्याप्रियमाणत्वात्सर्वेषामुपादानं, लोके हि वास्तुभूम्यादिकं हस्तेनैव मीयते, कृषिकर्म्मादिविषयभूतं क्षेत्रं तु चतुर्हस्तप्रमाणेन दण्डेनैव, मार्गस्तु गव्यूतियोजनादिपरिज्ञानार्थं धनुषैव, खातं तु कूपादि नालिकयैव चतुर्हस्तप्रमाणयष्टिविशेषरूपया मीयते, एवं युगादेरपि देशादिरूढितः प्रतिनियतवस्तुव्यापारा द्रष्टव्याः उक्तञ्च—"भूमिम्मि हत्थमेज्जं खेत्ते दंडो धणुं च पंथम्मि । खायं च नालियाए वियाण ओमाणपरिमाणं ॥ १ ॥ इति गाथार्थः ॥ ९० ॥ उक्तं च पञ्चप्रकारमपि द्रव्यप्रमाणम् क्षेत्रप्रमाणमभिधित्सुराह—

खेत्तपमाणं दुविहं विभाग ओगाहणाए निप्फन्नं । एगपएसोगाढाइ होइ ओगाहणमणेगं ॥ ९१ ॥

॥ ६२ ॥

स्छ्रया-वृद्धिनयनमागमोक्तमत्रैवानन्तर वक्ष्यमाणस्वरूप वा तस्मादुत्कस्वरूपोत्सेधाज्जातमङ्गुलमुत्सेधाङ्गुल, अथवोत्सेधो—नारकादिशरीराणामुच्चैस्त्व तत्प्रमाणनिर्णयकर्तृत्वेन तद्विषयमङ्गुलमुत्सेधाङ्गुल, अत्रैव वक्ष्यमाणन्यायेन चतु शतगुणितात्सहस्रगुणिताद्वा उत्सेधाङ्गुलप्रमाणाज्जात प्रमाणाङ्गुल, अथवा प्रमाणप्राप्तमङ्गुल प्रमाणाङ्गुल, नातः पर बृहत्तरमङ्गुलमस्त्यत इदमेव प्रमाणप्राप्तमिति भाव, यदिवा समस्तलोकव्यवहारराज्यादिस्थितिप्रथमप्रणेतृत्वेन प्रमाणभूतोऽस्मिन्नवसर्प्पिणीकाले तावद्युगादिदेवो भरतचक्रवर्ती वा तस्य प्रमाणभूतपुरुषस्याङ्गुल प्रमाणाङ्गुलं, आत्माङ्गुले तु ये यस्मिन् काले भरतसगरादयो मनुष्या शास्त्रोक्तप्रमाणयुक्ता भवन्ति तेषां सम्बन्धयात्मा गृह्यते तस्यात्मनोऽङ्गुलमात्माङ्गुल, इद च त्रिविधमप्यङ्गुल पुन प्रत्येक त्रिधा भवति, तद्यथा—सूच्यङ्गुल प्रतराङ्गुलं घनाङ्गुल चेति, तत्र दैर्घ्येणाङ्गुलायता बाहल्यतस्त्वेकप्रादेशिकी नभ प्रदेशश्रेणि शूच्यङ्गुलमुच्यते, एतच्च सद्भावतोऽसङ्ख्येयप्रदेशशूच्यात्मकमप्यसत्कल्पनया शूच्याकारेण प्रदेशत्रय व्यवस्थाप्य भावनीय, तद्यथा -सूची सूच्यैव गुणिता प्रतराङ्गुलं भवति, इदमपि परमार्थतोऽसङ्ख्येयप्रदेशात्मकम्, असद्भावतस्त्वेतामेवानन्तरदर्शितां त्रिप्रदेशात्मिकां सूचीं तयैव गुणयित्वा प्रत्येक प्रदेशत्रयनिष्पन्न सूचीत्रयात्मक नवप्रदेशसङ्ख्य विनिधाय परिभावनीयम्, अत्रापि स्थापना . .., प्रतरश्च सूच्या गुणितो दैर्घ्यविष्कम्भबाहल्येषु समसङ्ख्य घनाङ्गुल भवति, प्रतराङ्गुलं च दैर्घ्यविष्कम्भाभ्यामेव प्रदेशै समसङ्ख्य न पिण्डत तस्य तत्रैकप्रदेशमात्रत्वादिति प्रतराङ्गुलतो घनाङ्गुलस्य भेदो भावनीय, इदमपि सद्भावतो दैर्घ्यविष्कम्भबाहल्येषु प्रत्येकमसङ्ख्येयप्रदेशात्मकम्, असत्प्ररूपणया तु किल सप्तविंशतिप्रदेशमान, पूर्वनिर्दिष्टत्रिप्रदेशात्मकसूच्याऽनन्तरदर्शितनवप्रदेशात्मके प्रतरे गुणिते एतावतामेव प्रदेशाना भावात्, एषा च स्थापनाऽनन्तरनिर्दिष्टनवप्रदेशात्मकप्रतरस्याध उपरि च नव नव प्रदेशान् दत्वा भावनीया, तथा च सत्यायामविष्कम्भपिण्डैस्तुल्यमिदमापद्यत इति गाथार्थः ॥ ६३ ॥ नन्वमीषामुत्सेधाङ्गुलप्रमाणाङ्गुलात्माङ्गुलाना मध्ये उत्सेधाङ्गुलं तावत्किंप्रमाण भवति ? इत्याशङ्क्य तत्प्रमाणनिष्पत्तिक्रमनिरूपणार्थमाह—

**सत्थेण सुतिक्खेणवि छेत्तुं भेत्तुं च जं किर न सक्का। तं परमाणुं सिद्धा वयंति आइं पमाणाणं ॥ ६४ ॥**

॥ ६४ ॥

इह य परमाणु सुतीक्ष्णेनापि शस्त्रेण खड्गादिना कुन्तादिना च यथाग्रद्रव्य किल छेत्तु भेत्तु वा न शक्यते अतिसूक्ष्मत्वात् तमवयवभूत परमाणु, वदयमाणानामुत्श्लक्ष्णश्लक्ष्णिकादीनां निपत्तिकारणभूतानामुच्छ्लक्ष्णश्लक्ष्णिकादिप्रमाणानाम् 'आदि प्रथममारम्भकं वदन्ति सिद्धा ज्ञानसिद्धा केवलिनः, न तु मुक्तिप्राप्ता, तया शरीराद्यभावेन वचनव्यापाराभावादिति, किलशब्देन च लक्षणमवास्येदमधीयते न पुनस्तं कोऽपि छेत्तु भेत्तु वा समारभते, अतिश्लक्ष्णत्वेन छेदनभेदनाविषयत्वात् प्रयोजना भावाच्चेति सूचयति, अथ नह व्यवहारनयमतेनैव परमाणुत्वेनोच्यते, यावताऽनन्ताणुस्कन्ध एवासौ, केवल सूक्ष्मपरिणामापन्नत्वेन चक्षुरादिछेदभेदनाविषयत्वात् सूक्ष्ममपि व्यवहारनय परमाणु मन्यत इत्यत परमाणुत्वेनाभ्यस्त इति गाथार्थ ॥ ९४ ॥ आह—ननु कि परमाणवोऽपि निश्चयव्यवहारनयभेदेन सन्ति येनायमपि व्यवहा रनय परमाणु मन्यते इत्युच्यत इति, सत्य, अस्त्यतदाह—

परमाणू सो दुविहो सुहुमो तह वावहारिओ चेव । सुहुमो य अप्पएसो ववहारनयेण णंतओ खंधो ॥ ९५ ॥

गीतिकेय न तु गाथा ॥ स परमाणु सामान्येन द्विविधो भवति—सूक्ष्म नैश्चयिकस्तथा व्यावहारिकश्च, तत्र निश्चयनयाभिप्रेत सूक्ष्म परमाणुरप्रदेश एव ज्ञातव्यो निरंशत्वेन स्वव्यतिरिक्तान्यप्रदेशानामभावात्, एवंभूत एव हि परमार्थत परमाणुरुच्यते, परम—प्रकृष्ट अप्रदेशोऽणु—सूक्ष्म परमाणुरिति व्युत्पत्ते उक्तञ्च—'कारणमेव तदन्त्य सूक्ष्मो नित्यश्च भवति परमाणु । एकरसवर्णगन्धो द्विस्पर्श, कार्यलिङ्गश्च ॥ १ ॥' इति, कारणमेव तदन्त्य मिति पर्यन्तभूत उत्तरा द्व्यणुकादिस्कन्धानां कारणमेवासौ परमाणुर्न पुनरन्यस्य कस्यापि सत्के कार्यमसौ, ततोऽपि परतोऽन्यस्य कस्यापि तदारम्भकस्याभावात्, द्व्यणुकादयस्तु पूर्वोत्तरापेक्षया कार्य कारण च भवन्तीति भाव, शेष सुगमं, ववहारनएण णंतओ खंधो त्ति व्यवहारनयमतेन पुनरनन्ताणुनिष्पन्नोऽपि स्कन्धो योऽद्यापि सूक्ष्मपरिणामापन्नत्वेन छेत्तु भेत्तु वा न शक्यते सोऽपि परमाणुरुच्यते, सूक्ष्मत्वेन छेदनभेदनाद्यविषयत्वस्यात्रापि तुल्यत्वादिति भावार्थ । आह—ननु भवत्वेव तथाऽपि सूक्ष्मपरमाणुरेव प्रमाणानामादित्वेन कस्मान्नाधिक्रियते, न ह्यसौ प्रमाणानां कारणत्वेन न व्याप्रियते, व्यावहारिकपरमाणोरपि तैरेवानन्तैर्निष्पन्नत्वात्, सत्यमुक्त, किन्तु प्रमाणव्यवहारोऽत्र प्रस्तुत, व्यवहा

॥ ६५ ॥

न भवन्त्येव तद्विषया इति भावः, " खधोऽणंतपएसो अत्थेगइओ उ जो य छिज्जेज्जा । भिज्जेज व " त्ति काचित् पाठः, अत्राप्यर्थो न भिद्यत एवेति गाथार्थः ॥ ९७ ॥ तत्र यश्छेदनाद्यविषयः सूक्ष्मपरिणामापन्नो व्यावहारिकः परमाणुः स पूर्वमेव दर्शितः, इदानीं बादरपरिणामतया छेदनादिगोचरस्कन्धरूपान् श्लक्ष्णश्लक्ष्णिकाया उपरिवर्त्तिनः शेषानुत्सेधाङ्गुलनिष्पत्तिकारणभूतान् परिमाणविशेषानुपदर्शयन्नाह—

परमाणू तसरेणू रहरेणू अग्गयं च वालस्स । लिक्खा जूया य जवो अट्ठगुणाविवड्ढिया कमसो ॥ ९८ ॥

इह परमाणोरनन्तरमुपलक्षणव्याख्यानादूर्ध्वरेणोः पाठो द्रष्टव्यः, आगमेऽनेकस्थानेषु तथैव दृष्टत्वाद् युक्तिसङ्गतत्वाच्च, ततश्चैते परमाणूर्ध्वरेणुकत्रसरेणुरथरेण्वादयो यवपर्यन्ताः परिमाणविशेषा यथोत्तरमष्टगुणाः क्रमेण कर्त्तव्याः, तद्यथा परमाणुरष्टगुणः ऊर्ध्वरेणुः भवतीत्यर्थः, परमाणुश्चेह यः पूर्वगाथायामुपचारतः श्लक्ष्णश्लक्ष्णिकालक्षणः प्रोक्तः स द्रष्टव्यो न तु छेदनाद्यविषयः प्रमाणादिभूतो व्यावहारिक इति, तेनानन्तगुणेनान्तराल एव श्लक्ष्णश्लक्ष्णिकाद्यभिधानाद् अतिसूक्ष्मेण च तेनाष्टगुणेन बादरपरिणामस्योर्ध्वरेणोरघटनात्, तथाहि-वातायनादिषु रविरश्म्यादिव्यङ्ग्यः स्वतः परतो वा ऊर्ध्वाधस्तिर्यक्चलनधर्मा रेणुरूर्ध्वरेणुरुच्यते, स कथं तेनाष्टगुणेन निष्पद्येत?, तस्मात् सिद्धान्ताव्यभिचारि स्थितमिदं-यदुतोपचारतः पूर्वं व्यवहारपरमाणुतया प्रोक्ताभिरष्टाभिः श्लक्ष्णश्लक्ष्णिकाभिरेकः ऊर्ध्वरेणुर्भवतीति, त्र्यस्यति-पौरस्त्यादिवायुप्रेरितो गच्छति यो रेणुः स त्रसरेणुः, ऊर्ध्वरेणुः स्वतोऽपि चलति अयं तु पौरस्त्यादिवात प्रेरित एवेत्यस्मात् सोऽल्पप्रमाण इत्यतोऽष्टभिरूर्ध्वरेणुभिरेकः त्रसरेणुः सम्पद्यते, एवं च सति ऊर्ध्वरेणोरध्याहारो युक्तिसङ्गत एवावग-

॥ ९७ ॥

परमाणो-र्यवमध्या-न्तंमानं.

न्तव्यः, भ्रमद्रथचक्रोत्खातो रेणू रथरेणुः, पूर्वः पोरस्त्यादिवातेषु चलति अयं तु तत्सद्भावेऽपि रथचक्राद्युत्खननमन्तरेण न चलतीत्यस्मात् पूर्वोऽल्पप्रमाण इत्यतोऽष्टाभिस्त्रसरेणुभिरेको रथरेणुरापद्यते, इह च " परमाणू रहरेणू तसरेणू " इत्यादिरेव पाठो बहुषु सूत्रादर्शेषु दृश्यते स चासंगत एव लक्ष्यते, रथरेणुमाश्रित्य त्रसरेणोरष्टगुणत्वानुपपत्तेः उक्तन्यायेन विपर्ययस्यैव घटनादिति, यदपि संग्रहणिसूत्रकृता " परमाणू रहरेणू तसरेणु " रित्यादिरेव पाठो निर्दिष्ट इत्युच्यते तत्रापि समानः पन्थाः, तस्यापि घटमानकत्वस्य चिन्त्यत्वादागमेन सह विरोधाद् युक्त्यसंगतत्वाच्चेति, अष्टभी रथरेणुभिर्देवकुरूत्तरकुरुमनुष्याणां सम्बन्ध्येकं वालाग्रं जायते, तैरप्यष्टभिर्हरिवर्षरम्यकमानुषवालाग्रं भवति, एतैरष्टभिर्हैमवतैरण्यवतमनुष्यवालाग्रं सम्पद्यते, एतैस्त्वष्टाभिः पूर्वविदेहापरविदेहमनुजवालाग्रं भावनीयं, एतैः पुनरष्टाभिर्भरतैरवतनराणां वालाग्रं द्रष्टव्यम्, इह चैवं वालाग्राणां भेदे सत्यपि वालाग्रजातिसामान्यविवक्षया वालाग्रमिति सामान्येनैकमेव निर्दिष्टमिति, अष्टभिर्भरतैरवतमनुष्यवालाग्रैरेका प्रतीतस्वरूपैव लिक्षा जायते, ताभिरप्यष्टभिरेका यूका सम्पद्यते, एताभिरप्यष्टभिर्यवशब्दसूचितं यवमध्यमेकं निष्पद्यत इति गाथार्थः ॥ ९८ ॥ ततः किमित्याह—

**अट्ठेव य जवमज्झाणि अंगुलं च्च अंगुला पाओ । पाया य दो विहत्थी दो य विहत्थी भवे हत्थो ॥९९॥**

॥ ९८ ॥

अष्टौ च यवमध्यान्यंगुलं भवति, अनन्तरगाथोक्तस्वरूपेण यवमध्येनाष्टगुणेन प्रस्तुतमुत्सेधांगुलमभिजायत इत्यर्थः, एतानि च षडंगुलानि-अङ्गुलषट्कविस्तीर्णः पादस्य मध्यतलप्रदेशः पादैकदेशत्वात् पादो भवति, द्वौ च युग्मीकृतावेतौ पादौ द्वादशांगुलप्रमाणा वितास्तिर्भवति, द्वे च वितस्ती "अंगुल विहत्थी रयणी" त्यादि मूलगाथायां पर्यायशब्दत्वाद्रत्निशब्देनोक्तो हस्तो भवेद्, द्वौ

हस्तौ कुक्षिर्मानविशेषो भवति, अथ चास्यां गाथायामनुक्तोऽप्यध्याहृत्य द्रष्टव्य, मूलगाथायामत्रापि पूर्वमुपन्यस्तत्वादागमे चोक्तत्वादिति गाथार्थ ॥ ९९ ॥ अत पर किमित्याह–

चउहत्थ पुण धणुय दुन्नि सहस्साइ गाउय तेसिं । चत्तारि गाउया पुण जोयणमेग मुणेयव्व ॥ १०० ॥

चतुर्हस्त पुनर्धनुर्भवति, कुक्षिद्वयमान वा एतद्भवतीत्यपि समानार्थत्वाद् द्रष्टव्यम्, तेषा धनुषां द्वे सहस्रे गव्यूत भवति, चत्वारि पुन॰ गव्यूतानि योजनमेक मुणितव्य, एतच्च मूलगाथायामनुपन्यस्तमपि गव्यूतभणनेनोपलक्षितत्वादागमेऽप्युक्तत्वादुपयोगित्वाच्चेहोक्तमिति गाथार्थ ॥ १०० ॥ अत पर मूलगाथाया यद्यपि श्रेणीप्रतरादयोऽपि क्षेत्रप्रमाणप्रविभागा निर्दिष्टा सान्ति, तथाऽप्येतस्मिन्नुत्सेधागुलनिष्पन्नप्रमाणविचारे न व्याख्यायन्ते, अप्रस्तुतत्वात्, नारकाद्यवगाहनामानविषयत्वेनैव ह्येतदुत्सेधागुलप्रमाणमिहैव वक्ष्यते, तस्मिँश्च नरकाद्यवगाहनामाने योजनपर्यन्तमेव क्षेत्रप्रमाण व्याप्रियते, अत प्रस्तुतत्वादिह व्याख्यात, श्रेण्यादिक तु तत्राव्याप्रियमाणत्वेनेहाप्रस्तुतत्वान्न व्याख्यायते, उपरिष्टात्तु तदपि व्याख्यास्यत इति। तदेव निरूपितमुत्सेधागुल तन्निष्पन्नं च वितस्त्यादिक क्षेत्रप्रमाण, अथ क्रमप्राप्त प्रमाणागुल तन्निष्पन्न च वितस्त्यादिक क्षेत्रप्रमाणमभिधित्सुराह–

उस्सेहंगुलमेग हवइ पमाणगुल दुपचसय । ओसप्पिणीए पढमस्स अगुल चक्कवट्टिस्स ॥ १०१ ॥

अनन्तरोक्तस्वरूपमेकमुत्सेधांगुल द्विपञ्चशत एकदेशेन समुदायस्य गम्यमानत्वाद् द्विपञ्चशतगुणमित्यर्थ , किं भवतीत्याह प्रमाणांगुल भवति, एकमुत्सेधागुल सहस्रगुण सत् प्रमाणागुल सम्पद्यत इति भाव , इद चोत्सेधागुलात् सहस्रगुणित प्रमाणांगुलमस्यामवसर्पिण्यां

प्रथमस्य चक्रवर्तिनः सम्बन्ध्येकमेवांगुलं मन्तव्यं । आह-नन्वेवं सति भरतचक्रिणः सम्बन्ध्यंगुलं प्रमाणांगुलमित्युक्तं भवति, एवं च सत्युत्सेधांगुलात् प्रमाणांगुलं चतुःशतगुणमेव स्यान्न सहस्रगुणं, तथाहि-भरतश्चक्रवर्ती आत्मीयांगुलेन किल विंशं शतमंगुलानामनुयोगद्वारचूर्ण्यादिषु निर्णीतः, उत्सेधांगुलेन तु पञ्चधनुःशतमानत्वात् प्रतिधनुश्च षण्णवत्यंगुलस्वभावत्वादष्टचत्वारिंशत्सहस्राण्यंगुलानामसौ सम्पद्यते, एवं च सत्येकस्मिन् प्रमाणांगुले उत्सेधांगुलानां चत्वार्येव शतानि भवन्ति, विंशत्यधिकशतेन प्रमाणांगुलानामष्टचत्वारिंशत्सहस्रसङ्ख्यस्योत्सेधांगुलराशेर्भागापहारे एतावत एव भावात्, ततश्चैवं भरतसम्बन्ध्यंगुललक्षणं प्रमाणांगुलमुत्सेधांगुलाच्चतुःशतगुणमेव स्यान्न सहस्रगुणमिति, सत्यमुक्तं, किन्तु प्रमाणांगुलस्यार्द्धतृतीयोत्सेधांगुलरूपं पृथुत्वमस्ति, ततो यदा स्वकीयपृथुत्वेन वियुक्तं यथाऽवस्थितमेवेदं चिन्त्यते तदोत्सेधांगुलात् प्रमाणांगुलं चतुःशतगुणमेव भवति, यदा त्वर्द्धतृतीयोत्सेधांगुललक्षणेन विष्कम्भेन शतचतुष्टयलक्षणं प्रमाणांगुलदैर्घ्यं गुण्यते तदोत्सेधांगुलेनांगुलविष्कम्भा शतचतुष्टयदीर्घा च एका द्वितीयापि चैतावन्मानैव तृतीया तु दैर्घ्येण चतुःशतमानैव विष्कम्भतस्त्वर्द्धांगुलप्रमाणा, ततश्चैतस्या दैर्घ्याच्छतद्वयमपनीय विष्कम्भे योज्यते, तथा च सत्यंगुलशतद्वयदीर्घा अंगुलविष्कम्भा चेयमपि सम्पद्यते, ततस्तिसृणामप्येतासामुपर्युपरिव्यवस्थापने उत्सेधांगुलेनांगुलसहस्रदीर्घा अंगुलविष्कम्भा प्रमाणांगुलस्य सूचिः सिद्धा भवति, तत इमां सूचिमधिकृत्योत्सेधांगुलात् प्रमाणांगुलं सहस्रगुणमुक्तं, वस्तुतस्तु चतुःशतगुणमेव, अत एव पृथ्वीपर्वतद्वीपपयोराशिविमानादिमानान्यनेनैव चतुःशतगुणेनार्द्धतृतीयांगुललक्षणस्वविष्कम्भान्वितेनानुमीयन्ते, न तु सहस्रगुणया अंगुलविष्कम्भया सूच्या इति तावदस्माभिः शास्त्रान्तरदर्शनात् वृद्धसम्प्रदायाच्चावगतं, तत्त्वं तु केवलिनो विदन्तीति गाथार्थः ॥ १०१ ॥ एतानि च षट् प्रमाणांगुलानि भरतचक्रवर्त्तिनः पादो मध्यतलदेशरूपः, तौ च युग्मीकृतौ द्वौ पादौ वितस्तिः, ते च द्वे

वितस्ती हस्तः, तैश्चतुर्भिर्हस्तैर्धनु , तेषां च धनुषां द्वे सहस्रे गव्यूत, चत्वारि गव्यूतानि योजनमित्येतत् पूर्वोक्त सर्वमिहापि द्रष्टव्य, नन्वेवमपि सति योजनपर्यन्तमेव क्षेत्रप्रमाण व्याख्यात भवति, ये त्वन्येऽपि श्रेणिप्रतरादयो मूलगाथायां तद्भेदा प्रोक्तास्तेऽद्यापि न व्याख्याता इत्याशङ्क्य तद्व्याख्यानार्थमाह—

तेणगुलेण ज जोयण तु एत्तो असखगुणयारो । सेढी पयर लोगो लोगा णता अलोगो य ॥ १०२ ॥

तेन पूर्वोक्तप्रमाणागुलेन यदनन्तरोक्तक्रमेण योजन निष्पद्यते 'एत्तो'त्ति इत आरभ्य यथोत्तरमसङ्ख्येयराशिस्वरूपो गुणकारो दीयते, तत अनुयोगद्वारोक्तक्रमेण सवर्त्य घनीकृतसमचतुरस्रलोकस्यैका नभ प्रदेशश्रेणिर्भवति, तयाऽप्यसख्यातगुणया यथोक्तरूपस्यैव लोकस्यैकप्रदेशमात्रपिण्डोऽसख्येययोजनायामविष्कम्भो नभ प्रदेशप्रतरो भवति, तेनाप्यसख्यातगुणेन यथोक्तस्वरूपो लोक सम्पद्यते, "लोगाऽणता अलोगो य" त्ति, अलोक पुनर्लोकैरनन्तैरेव भवति, नासख्यातैर्निरवसानत्वात्तस्येत्यर्थ इति गाथार्थ ॥ १०२ ॥ तदेव निरूपित प्रमाणांगुल, तत्प्रसगतश्च पूर्वमव्याख्याता' श्रेण्यादयोऽपि व्याख्याता', अथात्मागुल प्रागुद्दिष्टक्रमप्राप्त व्याख्यातुमाह—

जे जम्मि जुगे पुरिसा अठ्ठसयगुलसमूसिया हुति । तेसि सयमगुल ज तय तु आयगुल होइ ॥ १०३ ॥

ये पुरुषाश्चक्रवर्त्तिवासुदेवादयो यस्मिन् युगे सुषमदुष्षमादिकाले निजांगुलैर्वाऽष्टोत्तर शतमगुलानामुच्छ्रिता-उच्चा भवन्ति, 'तेसि सयमगुल ज'ति तेषां स्वकीयागुलेनाष्टोत्तरागुलशतोच्चानां पुरुषाणां स्वकमात्मीयागुल तत् पुनरात्मांगुल पूर्वोद्दिष्टस्वरूप भवति,

||१०१||

अयमत्र भावार्थः- इहाष्टोत्तरांगुलशतोच्चत्वं लक्षणशास्त्रोक्तप्रमाणादिलक्षणयुक्तत्वस्योपलक्षणं, प्रमाणादिलक्षणसम्पन्ना हि पुरुषाः प्रायेणाष्टोत्तरांगुलशतोच्चा एवेति तदिहोपन्यस्तं, परमार्थतस्त्वष्टोत्तरांगुलशतमानाद्धीनाः समधिका वा ये यत्र युगे शास्त्रोक्तेन प्रमाणादिलक्षणेन युक्ताः पुरुषास्तेषां यदात्मीयं २ अंगुलं तदाऽऽत्मांगुलमिति विज्ञेयमिति गाथार्थः॥१३०॥आह-ननु निरूपितमेतद् उत्सेधांगुलादिभेदात् त्रिविधमंगुलं, किन्तु क्षेत्रप्रमाणभेदानां मध्येऽधीतत्वादिदं क्षेत्रप्रमाणत्वेन भवतामभिप्रेतं, तत्र किं तत् क्षेत्रमनेन प्रमीयते येन क्षेत्रप्रमाणताऽस्य भवेदित्याशङ्क्य त्रिविधस्याप्यंगुलस्य प्रत्येकं प्रमेयं क्षेत्रमुपदर्शयन्नाह—

देहस्स ऊसएण उ गिहसयणाई य आयमाणेणं । दीवुदहिभवणवासा खेत्तपमाणं पमाणेणं ॥ १०४ ॥

नारकादीनां 'देहस्य' शरीरस्य 'ऊसएण' उत्सेधांगुलेन प्रमाणं विज्ञायते, नारकतिर्यङ्नरामराणां सर्वेषामपि सम्बन्धिनः शरीरस्य 'सत्त धणु तिन्नि रयणी छच्चेव य अंगुलाइं रयणाए । मुणसु पमाणं भवधारणीयदेहस्स निरयाणं ॥ १ ॥ इत्यादिकं शास्त्रान्तरे यत् प्रमाणमुक्तं तदुत्सेधांगुलनिष्पन्नेनैव वितस्तिहस्तादिना प्रमाणेन द्रष्टव्यं, नान्येनेत्यर्थः, गृहशयनादीनां तु प्रमाणमात्मांगुलेन विज्ञेयं, ये यस्मिन् काले प्रमाणपुरुषाश्चक्रवर्त्तिवासुदेवादयः पृथ्वीमण्डलस्य भोक्तारो भवंति तेषां सम्बन्धीनि यानि शयनासनगृहनगरादीनि वास्तूनि तानि सर्वाण्यात्मांगुलनिष्पन्नेनैव वितस्तिहस्तादिना प्रमाणेन मीयंते, नान्येनेति भावः, "दीवुदहिभवणवासा खेत्तपमाणं" ति, 'वासा' इत्यत्र सकारस्य दीर्घत्वमलाक्षणिकं, ततश्च द्वीपोदधिभवनवर्षलक्षणस्य क्षेत्रस्य यत् प्रमाणं-मानं तत् प्रमाणेन-प्रमाणांगुलनिष्पन्नेनैव योजनपर्यन्तेन प्रमाणेन मीयते नापरेणेत्यर्थः, तत्र द्वीपोदधयः प्रतीता एव

भवनानि असुरकुमाराद्यावासा 'वर्षाणि' भरतहैमवतहरिवर्षमहाविदेहादीनि, एतच्च हिमवदादिवर्षधरविमाननरकावासपृथिव्याधन्तरालपातालकलशह्रदनद्यादीनामुपलक्षण, एतन्मानस्य प्रमाणाङ्गुलनिष्पन्नप्रमाणेनैव प्रमीयमानत्वादिति । अत्राह-नन्तूत्सेधाङ्गुलादीनां नारकशरीरादीनि प्रमेयत्वेनोक्तानि, तानि च द्रव्याण्येव, ततश्च द्रव्यप्रमाणमेवैतानि प्राप्नुवन्ति, तत् किमिति क्षेत्रप्रमाणमध्येऽधीतानि?, नैवमभिप्रायापरिज्ञानात्, नारकशरीरादिद्रव्यद्वारेण तदवगाढ क्षेत्रमेवात्र प्रमेयत्वेनोक्त द्रष्टव्यमिति नैषां क्षेत्रप्रमाणता विरुध्यते, यत्तु क्षेत्रमेव साक्षादिह तत्प्रमेयत्वने नोक्त तत्तस्यामूर्तत्वेन मुख्यतः प्रमातुमशक्यत्वादिति भावनीयमिति गाथार्थः ॥१०४॥ तदेव व्याख्यात सविषय त्रिविधमप्यङ्गुल, तद्व्याख्यानप्रसङ्गेन च व्याख्याता. सर्वेऽपि 'अङ्गुल विहत्थी रयणी कुच्छी' त्यादिमूलगाथोपन्यस्ता अलोकपर्यन्ता क्षेत्रप्रमाणप्रविभागाः, तद्व्याख्याने च विवृता सर्वाऽपि मूलगाथा, तद्विवरणे च समर्थित सर्वमपि प्रमाणद्वारस्य द्वितीयभेदरूप क्षेत्रप्रमाणमथ तृतीयभेदस्वरूप कालप्रमाण निरूपयितुमाह—

कालेत्ति य एगविहो कालविभागो य होइ णेगविहो । समयावलियाईओ अणतकालोत्ति णायव्वो ॥१०५॥

इह जिनवरेन्द्रशासने सर्वमपि वस्तु सामान्यविशेषात्मक, तत्र सामान्यरूपतया विवक्षित सर्वमप्येकरूपमेव, यथा वन, विशेषरूपतया तु विवक्षित सर्वमप्यनेकरूप, यथा तदेव वन धवखदिरपलाशसालतालतमालादिस्वगतभेदविवक्षायामनेकविधमिति । एव च सति न्यग्भूतसमयावलिकादिस्वगतानेकभेदजाल कालोऽपि पूर्वोक्तशब्दार्थ काल इति सामान्यविवक्षायामेकविध, एकप्रकार एवेत्यर्थ, यदा तु तस्यापि कालस्य विभागो भेदो विवक्ष्यते तदा स भवत्यनेकविध, कथ अनेकविधो भवतीत्याह-समयाश्राव-

लिका च समयावलिके ते आदौ यस्य प्राणुस्तोकलवादेरसौ समयावलिकादिरनन्तरवक्ष्यमाणलक्षणः, नन्वयं कालः सामान्येन किं सान्तोऽनन्तो वा इत्याशङ्क्याह-'अणंतकालोत्ति नायव्वोत्ति' अयं च कालः सामान्यरूपतया विवक्षितोऽनन्तः-अपर्यवसित उपलक्षणत्वादनादिश्च भवति, न ह्ययं कदाचिदपि पूर्वं नासत् नापि न भवति न चापि न भविष्यतीति गाथार्थः ॥ १०५ ॥

अथानेकविधत्वमेव कालस्य विवरीतुमाह—

**कालो परमनिरुद्धो अविभागी तं तु जाण समओत्ति । तेऽसंखा आवलिया ता संखेज्जा य ऊसासो ॥१०६॥**

सम्यक् तांस्तान् सर्वानप्यावलिकादीन् कालविशेपान् स्वप्रभवत्वेन एति-गच्छति व्याप्नोतीति समयः, अथवा सम्यग् गीयन्ते-परिच्छिद्यन्ते स्थितिविशिष्टत्वेन पदार्था अनेनेति समयः, स च समय इत्येवं जानीहि-अवगच्छ, त्वमिति शिष्यसम्बोधनं, यः किमित्याह-कालः-कालविशेषः, कथंभूतः?-'परमनिरुद्धः' परमसंक्षिप्तः सर्वाल्प इत्यर्थः, यस्मात्परतो नान्या-ऽल्पीयसी कालमात्राऽस्ति, किन्तु स एव सर्वाल्प इति भावः, अत एवाविभागी, परमनिरुद्धत्वादेव न विद्यते केवलिप्रज्ञाप्रच्छेदनेनापि छिद्यमानस्य विभागो-विभेदः अंशो यस्यासौ अविभागी, यदि पुनस्तस्यापि विभागः स्यात्तदा परमनिरुद्धत्वमेव न स्यादिति हृदयं, तस्मात् सर्वसूक्ष्मो निरंशः कालविशेषः समय इति स्थितं, एते च समया एकस्मिन्नप्यतीव कोमले उत्पलपत्रे तीक्ष्णसूच्या भिद्यमानेऽसंख्याताः समतिक्रामन्तीति मन्तव्यम्, पट्टसाटिकापाटनदृष्टान्तादिकं चेह बहु वक्तव्यं तच्चानुयोगद्वारेभ्योऽवसेयमिति, ते चासंख्याताः समया आवलिका भवति, असंख्यातं चासंख्येयैरेव भेदैरिहैवाभिधास्यते, तत्र यावत्परिमाणेनासंख्यातेनावलिकायामसंख्याताः

समया भवन्ति तदिहाप्युपरिष्टाद् वक्ष्याम , ताश्चावलिका सङ्ख्याता एक उच्छ्वास ऊर्ध्व श्वास उच्छ्वास', उपलक्षणत्वाच्चेह नीचैर-न्तर्मुख श्वसन निश्वास , सोऽपि सङ्ख्याता आवलिका इति द्रष्टव्य, उच्छ्वासोपलक्षितो नि श्वास उच्छ्वासनि श्वास इत्येतदुभयमपि सङ्ख्याता आवलिका इत्यपि मन्तव्यमिति गाथार्थ ॥ १०६ ॥ अय चोच्छ्वासनि श्वासोऽविशेषेण यस्य कस्यापि सम्बन्धी न गृह्यते अपितु विशिष्ट एव, प्राणुरिति चाय व्यपदिश्यत इति दर्शयन्नाह—

न गृह्यते अपितु विशिष्ट एव, प्राणुरिति चाय व्यपदिश्यत इति दर्शयन्नाह—

हट्ठऽणगल्लुस्सासो एसो पाणुत्ति सन्निओ एक्को । पाणू य सत्त थोवो थोवा सत्तेव लवमाहु ॥ १०७ ॥

'हृष्टस्य' प्रमुदितस्य 'अनवकल्पस्य' जरसाऽपीडितस्य निरुपक्लिष्टस्य व्याधिना प्राक् साम्प्रत चानभिभूतस्येत्यप्युपलक्षणत्वाद् द्रष्टव्य, एवभूतस्य प्राणिन सन्धी य एकदेशेन समुदायस्य गम्यमानत्वादुच्छ्वासनि श्वास एष एक प्राणुरिति सञ्ज्ञित प्राणुसञ्ज्ञया सर्वज्ञैर्व्यवहृत इत्यर्थ , उकारस्यालाक्षणिकत्वात् प्राण इत्यपरे, रोगजरादिभिरस्वस्थस्य जन्तोरुच्छ्वासनि श्वासस्त्वरितादिस्वरूपतयाऽस्वभावस्थो भवत्यतो हृष्टादिविशेषणोपादानमत्रेति भावनीय, एते च प्राणव प्राणा वा सप्त समुदिता स्तोक इत्युच्यते, स्तोकाश्च सप्त मिलिता लवमाहुस्तीर्थकरगणधरा इति गाथार्थ ॥ १०७ ॥ अपरञ्च—

अट्ठत्तीस तु लवा अद्धलवो चेव नालिया होइ । दो नालिया मुहुत्तो तीस मुहुत्ता अहोरत्ता ॥ १०८ ॥

अष्टत्रिंशल्लवास्तथाऽर्द्धलवश्च नाडिका भवति, सार्द्धरष्टत्रिंशल्लवैरेका घटिका भवतीत्यर्थ , द्वे तु नाडिके मुहूर्त', त्रिंशन्मुहूर्त्तास्त्वहोरात्रमिति गाथार्थ ॥ १०८ ॥ अथैकस्मिन् मुहूर्त्ते य उच्छ्वासनि श्वासा भवन्ति तानुपदर्शयन्नाह—

तिन्नि सहस्सा सत्त य सयाणि तेसत्तरी य उस्सासा । एकेकस्सेवइया हुति मुहुत्तस्स उस्सासा ॥ १०९ ॥

अनन्तरोक्तेन स्तोकलवादिक्रमेण त्रीणि सहस्राणि त्रिसप्तत्यधिकानि च सप्त शतानीत्येतावन्त उच्छ्वासा उपलक्षणत्वादुच्छ्वासनिःश्वासा एकैकस्य घटिकाद्वयलक्षणस्य मुहूर्तस्य भवन्ति, तथाहि—सप्तभिरुच्छ्वासनिःश्वासैरेकः स्तोको निर्दिष्टः, एवंभूताश्च स्तोका एकस्मिँल्लवे सप्त प्रोक्ताः, ततः सप्तभिः सप्त गुणिता इत्येकस्मिँल्लवे एकोनपञ्चाशदुच्छ्वासनिःश्वासाः सिद्धा भवन्ति, एकस्मिँश्च मुहूर्त्ते लवाः सप्तसप्ततिरुक्ता अत एकोनपञ्चाशत् सप्तसप्तत्या गुण्यते, ततो जायते यथोक्तं मानं, तद्यथा ३७७३ इति गाथार्थः ॥ १०९ ॥ अथाहोरात्रस्य परतोऽपि ये कालविशेषास्तानुपदर्शयन्नाह —

**पन्नरस अहोरत्ता पक्खो पक्खा य दो भवे मासो । दो मासा उउसन्ना तिन्नि य रियवो अयणमेगं ॥ ११० ॥**
**दो अयणाइं वरिसं तं दसगुणवड्ढियं भवे कमसो । दस य सयं च सहस्सं दस य सहस्सा सयसहस्सं ॥१११॥**
**वाससयसहस्सं पुण चुलसीइगुणं हवेज्ज पुव्वंगं । पुव्वंगसयसहस्सं चुलसीइगुणं भवे पुव्वं ॥ ११२ ॥**

पञ्चदशाहोरात्राणि पक्षः, द्वौ पक्षौ मासो भवेत्, द्वौ च मासौ ऋतुसंज्ञा, त्रयश्च ऋतवः षण्मासप्रमाणमेकमयनमिति गाथार्थः ॥ ११० ॥ द्वे अयने वर्षं, तच्च वर्षं दशलक्षणेन गुणकारेण यथोत्तरं क्रमेण वर्द्धितं भवेत् किमित्याह—दश १०, एतेऽपि दशभिर्गुणिता शतं भवेत् १००, तदपि दशभिर्गुणितं सहस्रं भवेत् १०००, इदमपि दशभिर्गुणितं दश सहस्राणि भवेयुः १००००, एतान्यपि दशभिर्गुणितानि शतसहस्रं-लक्षं भवेदित्यर्थः १०००००, इति गाथार्थः ॥ १११ ॥ एतदपि वर्षाणां लक्षं पुनश्चतुरशीत्या गुणितं चतुरशीतिवर्षलक्षात्मकं पूर्वाङ्गं भवेदिति, अस्यांकन्यासः ८४०००००, एषामपि पूर्वांगानां शतसहस्रं-लक्षं व्यवस्थाप्य चतुरशीत्या गुणितं पूर्वं भवेद्, इदमुक्तं भवति-पूर्वांगं लक्षेण गुण्यते तद्गुणे च यो राशिर्भवति सोऽपि चतुरशीत्या गुण्यते ततः पूर्वं

श्वासादि शीर्षप्रहेलिकान्त स्वरूपं.

॥१०६॥

सपद्यते, अथान्तरे तु पूर्वांगं पूर्वांगेन गुणितं पूर्वमित्युक्तं तत्राप्ययमेव वस्त्वर्थ इति न विरोधः, इह च योऽङ्कः सोऽनन्तरगाथायां दर्शयिष्यत इति २ इति गाथार्थः ॥ ११२ ॥ कियन्ति पुनः पूर्वोक्तेऽर्थेऽनुष्ठिते सत्येकस्मिन् पूर्वे वर्षाणि भवन्तीत्याह—

पुव्वस्स उ परिमाणं सयरिं खलु होंति कोडिलक्खाओ । छप्पन्नं च सहस्सा बोद्धव्वा वासकोडीणं ॥ ११३ ॥

पाठसिद्धैव, अङ्कस्थापना—७०५६०००००००००००, इदं च पूर्वं चतुरशीत्या लक्षैर्गुणितं नयुताङ्गं भवति ३, एतदपि चतुरशीत्या लक्षैस्ताडितं नयुतं ४, तदपि चतुरशीतिलक्षैरेव समाहतं नलिनाङ्गं सम्पद्यते ५, एतदप्यनेनैव गुणकारेण गुणितं नलिनं ६, एवं सर्वत्र पूर्वः पूर्वो राशिश्चतुरशीतिलक्षस्वरूपेण गुणकारेण गुणित उत्तरोत्तरराशिरूपतां प्रतिपद्यत इति प्रतिपत्तव्यं, तेषां चोत्तरोत्तरप्रवर्द्धमानराशीनां यथाक्रममेतानि नामानि प्रतिपत्तव्यानि, तद्यथा महानलिनाङ्गं ७, महानलिनं ८, पद्माङ्गं ९, पद्मं १०, कमलाङ्गं ११, कमलं १२, कुमुदाङ्गं १३, कुमुदं १४, त्रुटिताङ्गं १५, त्रुटितं १६, अटटाङ्गं १७, अटटं १८, अववाङ्गं १९, अववं २०, हुहुकाङ्गं २१, हुहुकं २२, अयुताङ्गं २३ अयुतं २४, प्रयुताङ्गं २५, प्रयुतं २६, शीर्षप्रहेलिकाङ्गं २७, एवमेते राशयश्चतुरशीतिलक्षस्वरूपेण गुणकारेण यथोत्तरं प्रवर्द्धमाना द्रष्टव्याः तावद्यावदिदमेव शीर्षप्रहेलिकाङ्गं चतुरशीत्या लक्षैर्गुणितं शीर्षप्रहेलिका भवति २८, अस्याश्च शीर्षप्रहेलिकाया स्वरूपमङ्कतोऽपि दर्श्यते, अङ्काश्चेह चतुर्नवत्यधिकं शतं भवति, तद्यथा ७५८२६३२५३०७३०१०२४११५७९७३५६९९७५६९६४०६२१८९६६८४८०८०१८३२९६, अग्रे चत्वारिंशं शून्यशतं, यथोक्तान्येव शीर्षप्रहेलिकापर्यन्तराशिनामानि सूत्रकारोऽप्याह—

पुव्वंगं पुव्वंपि य नउयंगं चेव होइ नउयं च । नलिणंगं नालिणंपि य महानलिणंगं महानलिणं ॥ ११४ ॥
पउमं कमलं कुमुयं तुडियमडडमववं हूहुयं चेव । अउयंग अउय पउयं तह सीसपहेलिया चेव ॥ ११५ ॥

इह प्रथमगाथायां पूर्वांगादीन्यष्टौ नामानि साक्षादुक्तानि, द्वितीयगाथायां तु साक्षादेकादशाभिहितानि, पद्मांगकमलांगकुमुदांगत्रुटितांगाटटांगाववांगहूहूकांगप्रयुतांगशीर्षप्रहेलिकांगलक्षणानि तु नव नामान्युपलक्षणव्याख्यानात् स्वयमेव द्रष्टव्यानीति सर्वाण्यप्यष्टाविंशतिः, एतेषां चाष्टाविंशतिनाम्नां व्याख्याप्रज्ञप्त्याद्युक्तापेक्षया क्वचित् क्रमभेदःक्वचित्तु सर्वथैव नामान्यत्वं दृश्यते, न चैतावता सम्मोहः कार्यः, संकेतानुसार्यभिधानभेदेऽप्यभिधेयतत्त्वस्याभेदाद् अत एव प्रस्तुतग्रंथसूत्रपुस्तिकास्वपि क्वचिद् वाचनाभेदं समीक्ष्य वाच्यार्थस्याभेदेऽनास्था न कर्त्तव्येति, तदेवं गणितविषयत्वं यावान् कालः समुपयाति तावानसौ शीर्षप्रहेलिकापर्यंतो दर्शितः, अतः परमेकं दश शतं सहस्रमित्यादिगणितसंख्याव्यवहारातीतत्वादसंख्येयोऽसावित्यनतिशयिना पल्याद्युपमयैव ज्ञातव्य इति दर्शयन्नाह—

एवं एसो कालो वासच्छेएण संखमुवयाइ । तेण परमसंखेज्जो कालो उवमाए नायव्वो ॥ ११६ ॥

एवमनन्तरोक्तक्रमेण वर्षाणामेकं दश शतं सहस्रमित्यादिगणितेन यश्छेद इयत्ता परिच्छेदलक्षणस्तेन वर्षच्छेदेन एष एव-शीर्षप्रहेलिकापर्यन्तः कालः संख्यामुपयाति, अतः परं पुनः पूर्वमुनिभिर्गणितसंख्ययाऽव्यनहृतत्वादसंख्यातः काल इत्युपमयैव ज्ञातव्य इति गाथार्थः ॥११६॥ यश्च पल्याद्युपमागम्यः कालः स द्विविधः-पल्योपमरूपः सागरोपमरूपश्च, तत्र पल्योपमनिर्णयार्थं तावदाह-

पलिओवम च तिविह उद्धारऽद्ध च खेत्तपलिय च । एक्केक्क पुण दुविह बायरसुहुम च नायव्व ॥ ११७ ॥

धान्यपल्यवत्पल्योऽनन्तरमेवाभिधित्सितस्वरूपस्तेनोपमा यत्र तत्पल्योपम, तच्च त्रिधा, तद्यथा-उद्धारपल्योपममद्धापल्योपमं क्षेत्रपल्योपम च, तत्र वक्ष्यमाणस्वरूपवालाग्राणा तत्खण्डानां वा तद्द्वारेण द्वीपसमुद्राणा वा उद्धरणम् अपहरणमुद्धारस्तद्विषय तत्प्रधान वा पल्योपममुद्धारपल्योपम, तथा ' अद्धे ' ति काल स चेह व्याख्यानाद्वक्ष्यमाणवालाग्राणां तत्खण्डाना वा प्रत्येक-वर्षशतलक्षण उद्धारकालो गृह्यते अथवा प्रस्तुताद्धापल्योपमपरिच्छेद्यो नारकाद्यायुष्कलक्षण कालोऽद्धा तत्प्रधान तद्विषय वा पल्योपममद्धापल्योपम, तथा ' क्षेत्र ' आकाश तदुद्धारविषय पल्योपम क्षेत्रपल्योपम, एषा च मध्ये पुनरेकैक द्विविध वक्ष्यमाणस्वरूप बादर सूक्ष्म चेति गाथार्थ ॥ ११७ ॥ क पुनरसौ पल्यो येन पल्योपमे उपमा विधीयत इत्याह—

ज जोयणाविच्छिण्ण त तिउण परिरएण सविसेस । त चेव य उव्विद्ध पल्ल पलिओवम नाम ॥ ११८ ॥

'नाम' इति शिष्यस्य कोमलामन्त्रणे 'पलिओवमम्मि' त्यत्र विभक्तिव्यत्ययात् सप्तमी 'पल्य' मित्यादावपि लिङ्गव्यत्ययात् पुस्त्व, ततश्च पल्योपमे पल्योपमविषये धान्यपल्यवत्पल्य. प्रागुद्दिष्ट' स विज्ञेयो, यः किमित्याह यो विस्तीर्ण , कियदित्याह-योजन, वृत्ताकारत्वाद्दैर्घ्येणापि योजनमिति द्रष्टव्य, तच्च योजन त्रिगुण सविशेष 'परिरयेण' परिक्षेपेण 'सर्व वृत्त स्वविष्कम्भादायामतो वा त्रिगुण साधिक भवती'ति वचनात् त्रीणि योजनानि साधिकानि भ्रमित्या यो भवतीत्यर्थः, 'उव्विद्ध' उच्चोऽपि तदेव योजनमित्यर्थ', दैर्घ्यविस्ताराभ्यां प्रत्येक योजनप्रमाण उच्चत्वेनापि योजनमानो भ्रमित्या तु किञ्चिन्न्यूनषड्भागाधिकयोजनत्रयमानो

य: पल्य: स इह पल्योपमाविषये 'निर्दिष्टो' विज्ञेय इति तात्पर्यमिति गाथार्थ: ॥ ११८ ॥ अथैष एव पल्यो यत्स्वरूपैर्वालाग्रैः पूर्यते तदेतान्निरूपयितुमाह—

**एगाहिय बेहिय तेहियाण उक्कोस सत्तरत्ताणं । सम्मट्ठं संनिचियं भरियं वालग्गकोडीणं ॥ ११९ ॥**

॥११०॥ एकेन अह्ना निर्वृत्ता एकाहिक्यो द्वाभ्यां त्रिभिश्चाहोभिर्निष्पन्ना द्व्याहिक्यस्त्र्याहिक्यश्च, तासामेकाहिकीद्व्याहिकीत्र्याहिकीनामेवं चतुराहिकीनां यावदुत्कृष्टतः सप्तरात्रप्ररूढानां वालानां वाला एवातिसूक्ष्मत्वादग्रकोटय इवाग्रकोटयो वालाग्रकोटयस्तासां भृतोऽसौ पल्योऽत्राधिक्रियते, तत्र मुण्डिते शिरस्येकेनाह्ना या वालाग्रकोटय उत्तिष्ठन्ति ता एकाहिक्य उच्यन्ते द्वाभ्यां तु या उत्तिष्ठन्ति ता द्व्याहिक्यः त्रिभिस्तु त्र्याहिक्यः एवं यावत् सप्तरात्रप्ररूढाः सप्तरात्रिक्य इति, कथं पुनस्तासां वालाग्रकोटीनां भृत इत्याह—सम्मृष्टः-आकर्णं पूरितः सन्निचितः-प्रचयविशेषान्निविडीकृत इति गाथार्थः ॥ ११९ ॥ ततः किमित्याह—

**तत्तो समए समए एक्केक्के अवहियम्मि जो कालो । संखेज्जा खलु समया बायरउद्धारपल्लंमि ॥१२० ॥**

ततो यथोक्तवालाग्रभृतपल्यात् प्रतिसमयमेकैकस्मिन् वालाग्रेऽपहियमाणे यावत्कालो लगति तद्बादरमुद्धारपल्योपममित्यावृत्त्या प्रथमान्ततयाऽप्यत्र सम्बध्यते,कियान् पुनरसौ काल इति कथ्यतामित्याह—'खलु' वधारणे सङ्ख्येया एव समया अस्मिन् बादरे उद्धारपल्योपमे भवन्ति, नासङ्ख्येयाः, वालाग्राणामप्यत्र संख्यातत्वात्तेषां च प्रतिसमयमपहारे संख्येयस्यैव समयराशेर्भावादिति, बादरता चेह सूक्ष्मखण्डाकरणेन वालाग्राणां बादरत्वाद्भावनीयेति गाथार्थः ॥ १२० ॥ अथ क्रमप्राप्तमेव सूक्ष्ममुद्धारपल्योपममभिधित्सुराह— ॥११०॥

पल्योपम सागरोपम-स्वरूपं

एक्केक्कमओ लोम कट्टुमसंखेज्जखंडमदिस्सं । समछेयाणंतपएसियाण पल्लं भरेज्जाहि ॥ १२१ ॥

अत गहनवालाग्रभृतपल्यादेकैक लोम असख्येयानि खण्डानि यत्र तदसख्येयखण्डमदृश्य, तावदसत्कल्पनया खण्डय-ते यावददृश्यस्वरूपमसख्येयखण्डरूपतामेकैक वालाग्र भजत इति भाव , एव च कृते एकैक खण्ड बादरपर्याप्तपृथिवीशरीरतुल्य भवतीति वृद्धा ,एव कृत्वा तत कि विधेयमित्यत्रोच्यते, ततोऽमीषा सर्वेषामपि समच्छेदाना-परस्परतुल्यखण्डीकृताना प्रत्येक गाथाप्यनन्तप्रादेशिकानामनन्तपरमाण्वात्मकाना तमेव पल्य विभृया बुद्धया परिपूर्ण कुर्यास्त्वमिति गाथार्थ ॥ १२१ ॥ एव च तस्मिन् भृते यत् कर्तव्य तदाह—

तत्तो समए समए एक्केक्के अवहियम्मि जो कालो । संखेज्जवासकोडी सुहुमे उद्धारपल्लम्मि ॥ १२२ ॥

तत सूक्ष्मखण्डीकृतवालाग्रभृतपल्यात् प्रतिसमयमेकैकस्मिन् सूक्ष्मवालाग्रखण्डेऽपह्रियमाणे यावान् कालो लगति तत्प्रमाण सूक्ष्ममुद्धारपल्योपम भवतीति पूर्ववदत्रापि सम्बन्ध , कियान् पुनरसौ कालो भवतीति निर्णेयतामित्याह सङ्ख्येया वर्षकोटय , सूक्ष्मे उद्धारपल्योपमे भवन्तीति ज्ञातव्य, वालाग्राणामिह प्रत्येकमसङ्ख्येयखण्डात्मकत्वादेकैकस्यापि वालाग्रस्य सम्बन्धिना खडानामपहारेऽ-सङ्ख्येयसमयराशिप्राप्तेः सर्ववालाग्रखण्डापहारे भवन्त्येव सङ्ख्याता वर्षकोटय , सूक्ष्मत्वमप्यस्य वालाग्राणा सूक्ष्मखण्डकरणाद् भावनीयामिति गाथार्थ ॥ १२२ ॥ तदेवमुक्त बादर सूक्ष्म चोद्धारपल्योपमम्,अथ तत्प्रभवमेव सागरोपम निरूपयितुमाह—

एएसिं पल्लाण कोडाकोडी हवेज्ज दसगुणिया । त सागरोवमस्स उ एक्कस्स भवे परीमाण ॥१२३ ॥

एतयोः पूर्वोक्तयोर्बादरसूक्ष्मभेदभिन्नयोरुद्धारपल्योपमयोर्या प्रत्येकं कोटिकोटिर्दशभिर्गुणिता दश कोटीकोटय इत्यर्थस्तदेतत् प्रत्येकमेकस्य बादरोद्धारसागरोपमस्य सूक्ष्मोद्धारसागरोपमस्य च परिमाणं भवेदिति, दशभिर्बादरोद्धारपल्योपमकोटीकोटिभिरेकं बादरोद्धारसागरोपमं भवति, दशभिश्च सूक्ष्मोद्धारपल्योपमकोटीकोटिभिरेकं सूक्ष्मोद्धारसागरोपमं भवतीत्यर्थः, तत्रातिमहत्त्व-साम्यात् सागरेण-समुद्रेणोपमीयत इति सागरोपमामिति गाथार्थः ॥ १२३ ॥ इह बादरे प्ररूपिते सूक्ष्मप्ररूपणा क्रमनिष्पन्नत्वात् सुखकर्तव्या सुखावसेया च भवतीत्येतावन्मात्रेणैव बादरोद्धारपल्योपमसागरोपमयोः प्ररूपणा कृता, न पुनराभ्यां सिद्धांते किंचित् प्रयोजनमस्ति, सूक्ष्माभ्यां त्वेताभ्यामागमे समस्त्येव प्रयोजनं तच्चोपदर्शयन्नाह—

**जावइओ उद्धारो अड्ढाइज्जाण सागराण भवे। तावइया खलु लोए हवंति दीवा समुद्दा य ॥ १२४ ॥**

अर्द्धतृतीयप्रमाणानां व्याख्यानात् सूक्ष्मोद्धारसागरोपमाणां यावानुद्धारो वालाग्रोद्धारसमयराशिरित्यर्थः, 'भवेत्' जायेत तावन्त एव लोके द्वीपाः समुद्राश्च भवंति, इदमुक्तं भवति-सार्द्धे सूक्ष्मोद्धारसागरोपमद्वये सूक्ष्मोद्धारपल्योपमानां पंचविंशतिकोटीकोटिरित्यर्थः, यावन्तो वालाग्रोद्धारविषयाः समया भवंति तावत्संख्यास्तिर्यग्लोके द्वीपसमुद्रा अपि सर्वे भवंतीत्यर्थः, इति सूक्ष्मोद्धारपल्योपमसागरोपमयोर्द्वीपसमुद्रसंख्यानयनं प्रयोजनत्वेनोक्तं भवतीति गाथार्थः ॥ १२४ ॥ अथ क्रमप्राप्तमद्धापल्योपमं निरूपयितुमाह—

**वाससए वाससए एक्केक्के बायरे अवहियम्मि। बायरअद्धापल्ले संखेज्जा वासकोडीओ ॥ १२५ ॥**

तत्रैव पूर्वोक्तस्वरूपे पल्ये सहजबादरवालाग्रपूरिते यदा प्रतिवर्षशतमेकैकं वालाग्रमपह्रियते तदा सर्वस्मिन्नपि तदपहारे यावान् कालो भवति तदेव बादरमद्धापल्योपमं विज्ञेयम्, तत्र च बादरेऽद्धापल्योपमे सङ्ख्येया वर्षकोट्यो भवतीति सुबोधमेवेति गाथार्थः ॥ १२५ ॥ सूक्ष्ममद्धापल्योपममाह—

वाससए वाससए एक्केक्के अवहियम्मि सुहुमम्मि । सुहुमे अद्धापल्ले हवंति वासा असंखेज्जा ॥ १२६ ॥

तस्मादेवासङ्ख्येयखण्डीकृतसूक्ष्मवालाग्रपरिपूर्णपल्यात् प्रतिवर्षशतमेकैकस्मिन् सूक्ष्मे वालाग्रखण्डेऽपह्रियमाणे यावान्काल सम्पद्यते तत् सूक्ष्ममद्धापल्योपमं बोद्धव्यम्, तत्र च सूक्ष्मेऽद्धापल्योपमेऽसङ्ख्येयानि वर्षाणि भवन्ति, असङ्ख्येया वर्षकोट्यो भवन्तीत्यर्थः ॥ १२६ ॥ उक्तं बादरं सूक्ष्मं चाद्धापल्योपममिदानीमेतन्मानप्रभवमेव बादरं सूक्ष्मं चाद्धासागरोपमं विवक्षुराह—

एएसिं पल्लाणं कोडाकोडी हवेज्ज दसगुणिया । तं सागरोवमस्स उ परिमाणं हवइ एक्कस्स ॥ १२७ ॥

एतयोः पूर्वोक्तबादरसूक्ष्मभेदाभिन्नयोरद्धापल्योपमयोर्या प्रत्येकं कोटाकोटीर्दशभिर्गुणिता दशकोटीकोट्य इत्यर्थः तदेतत् प्रत्येकमेकस्य बादराद्धासागरोपमस्य सूक्ष्माद्धासागरोपमस्य च प्रमाणं भवेत्, भावार्थस्तूद्धारसागरोपमवदिति गाथार्थः ॥ १२७ ॥ अत्राह ननु समयावलिकादिकालभेदा इह प्रतिपादयितुं प्रस्तुताः, ते च भवद्भिः सागरोपमपर्यन्ता एवाद्यापि निर्दिष्टाः, सिद्धान्ते तु "सायर उस्सप्पिणी परियट्टा" इत्यादिवचनादेव उत्सर्पिण्यादयोऽपि तद्भेदाः श्रूयन्त एव, तेऽत्र किमिति नाभिधीयन्त इत्याशङ्क्य तानप्युक्तशेषानवसर्पिण्यादीन् कालविशेषान् सूक्ष्माद्धासागरोपममाननिष्पाद्यत्वात् एतद्विचारप्रस्ताव एव प्रतिपादयन्नाह-

**दस सागरोवमाणं पुन्नाओ हुंति कोडिकोडीओ । ओसप्पिणीपमाणं तं चेवुस्सप्पिणीएवि ॥ १२८ ॥**
**उस्सप्पिणी अणंता पोग्गलपरियट्टओ मुणेयव्वो । तेऽणंता तीयऽद्धा अणागयद्धा अणंतगुणा ॥१२९॥**

सूक्ष्माद्धासागरोपमाणां सम्पूर्णा दश कोटीकोट्यो भवन्ति, किमित्याह-प्रमाणं, कस्याः-अरकपट्कोपेतकालविशेषरूपाया अवसर्पिण्याः, सूक्ष्माद्धासागरोपमाणां दशभिः कोटीकोटिभिर्निष्पन्नोऽवसर्पिणीलक्षणः कालविशेषो मन्तव्य इत्यर्थः, तथा अरकपट्कोपेताया उत्सर्पिण्या अप्येतदेव प्रमाणमिति । " **उस्सप्पिणी** " त्यादि, अवसर्प्पिण्या उपलक्षणत्वादेताश्च यथोक्तप्रमाणा अवसर्प्पिण्युत्सर्प्पिण्योऽनन्ताः समुदिताः पुद्गलपरावर्तो मुणितव्यः,ते च पुद्गलपरावर्ता अनंता अतीताद्धा, अनन्तपुद्गलपरावर्तात्मकोऽतीतः काल इत्यर्थः, अतीताद्धापेक्षया चानन्तगुणाऽनागताद्धा, भविष्यत्काल इत्यर्थः, वर्तमानैकसमयरूपा वर्तमानाद्धाऽप्यस्ति, सा च ' **कालो परमनिरुद्धो अविभागी तं तु जाण समउ** ' त्ति **समयप्ररूपणायां** प्रोक्तैव द्रष्टव्या, सामान्येन सर्वकालरूपा सर्वाद्धाऽपि पूर्वं " **कालोत्ति य एगविहो** " इति सामान्यकालभणनेन भणितैवावगन्तव्येति गाथार्थः ॥ १२९ ॥ तदेवं प्रोक्ताः सर्वेऽपि कालविशेषाः, प्रकृतमुच्यते-तत्र वादराद्धापल्योपमसागरोपमे निष्प्रयोजने अपि पूर्वोक्तकारणात् उपन्यस्ते, सूक्ष्माद्धापल्योपमसागरोपमयोस्तु प्रयोजनमस्ति तदुपदर्शनार्थमाह—=

**सुहुमेण य अद्धासागरस्स माणेण सव्वजीवाणं । कम्मठिई कायठिई भावट्ठिई यावि नायव्वा ॥१३०॥**

सूक्ष्माद्धासागरोपमस्य उपलक्षणत्वादद्धापल्योपमस्य च मानेन, सूक्ष्माद्धापल्योपमसागरोपमयोः प्रमाणेनेति तात्पर्यार्थः,

उत्सर्पिण्यादिः कालः

किं पुनरनयो' प्रमाणेन कर्तव्यमित्याह ज्ञातव्या, का इत्याह सर्वेषा नारकतिर्यगादिजीवाना कर्मस्थितिकायस्थितिभवस्थितय', तत्र कर्मस्थितौ ज्ञानावरणदर्शनावरणवेदनीयातरायलक्षणकर्मचतुष्टयस्य त्रिंशत् सागरोपमकोटीकोट्य उत्कृष्टा स्थिति, मोहनीयस्य तु सप्ततिः सागरोपमकोटीकोट्य आयुपस्त्रयस्त्रिंशत् सागरोपमाणि नामगोत्रयोर्विंशति सागरोपमकोटीकोट्य उत्कृष्टा स्थिति' काय पृथिव्यादिकायोऽत्राभिप्रेत., विवक्षितैकस्मिन् काये पुन' पुनस्तत्रैवोत्पत्त्या स्थिति कायस्थिति, तत्र पृथिवीकाये विवक्षितैकजीव पुन पुनर्मृत्वा तत्रैवोत्पद्यमानोऽसख्येयोत्सर्पिण्यवसर्पिणीर्यावतिष्ठते, एवमप्कायतेजस्कायवायुकायेष्वपि प्रत्येकमसख्येया उत्सर्पिण्यवसर्पिण्यः कायस्थितिर्वाच्या, वनस्पतिकाये त्वनन्ता उत्सर्पिण्यवसर्पिण्य, त्रसकाये तु सातिरेके द्वे सागरोपमसहस्रे उत्कृष्टा कायस्थिति । भवो- नारकाद्येकजीवस्य विवक्षितमेकमेव जन्म तत्र भवे स्थितिर्भवस्थिति', तत्र नारकेष्वेकस्यैव जीवस्यैकस्मिन्नेव भवे त्रयस्त्रिंशत्सागरोपमाण्युत्कृष्टा भवस्थिति, एव देवेष्वपि, तिर्यङ्मनुष्येपु तु प्रत्येक त्रीणि पल्योपमानि, एवमेता' कर्मकायभवस्थितय सूक्ष्माद्धापल्योपमसागरोपमप्रमाणेनैव ज्ञातव्या । एवमन्यदप्यनयो प्रयोजन समयानुसारेण वाच्यमिति गाथार्थ. १३० ॥

अथ क्षेत्रपल्योपम निरूपयन्नाह

वायरसुहुमागासे खेत्तपएसाण समयमवहारे । वायरसुहुमं खेत्त उस्सप्पिणीओ असंखेज्जा ॥ १३१ ॥

बादराणि च सूक्ष्माणि च बादरसूक्ष्माणि पूर्वोक्तपल्यगतानि सहजान्यसख्येयखण्डीकृतानि च यानि यानि वालाग्राणीत्यर्थ. तेषामवगाढत्वसम्बन्धेन सम्बन्धि यदाकाश तत्र ये क्षेत्रप्रदेशा निरशनभोविभागरूपास्तेषा प्रतिसमयमेकैकापहारे

अद्धाप्रयोजन क्षेत्रपल्योपमसागरोपमे च

क्रियमाणे यावान् कालो लगति तदात्मकं यथाक्रममेव बादरं सूक्ष्मं च क्षेत्रपल्योपमं भवति, तच्चैकैकं प्रत्येकमसंख्येयोत्सर्पिण्यात्मकं मन्तव्यं, इदमत्र हृदयं-बादरवालाग्रपूरिते पल्ये एकैकवालाग्रेण यदवगाढमाकाशं तत्र प्रत्येकमसङ्ख्येयाः क्षेत्रप्रदेशाः संति, वालाग्राणां बादरत्वान्नभःप्रदेशानां त्वतिसूक्ष्मत्वादेकैकस्य वालाग्रस्य प्रत्येकमसंख्येयेष्वेव क्षेत्रप्रदेशेष्ववगाहस्य घटनादिति भावः, एतेषां सर्वेषामपि सर्ववालाग्रावगाढक्षेत्रप्रदेशानां प्रतिसमयमेकैकापहारे यः कालो भवति तदात्मकं बादरक्षेत्रपल्योपमं द्रष्टव्यं, एतच्चासंख्येयोत्सर्पिण्यवसर्पिणीमानं, यत एकैकवालाग्रावगाढक्षेत्रप्रदेशानामपि प्रतिसमयमेकैकापहारे " अंगुलअसंखभागे ओसप्पिणिओ असंखेज्जा " इति वचनादसंख्येया उत्सर्पिण्यवसर्पिण्यो लगन्ति, किं पुनः सर्ववालाग्रावगाढक्षेत्रप्रदेशापहार इति, असंख्येयखण्डीकृतसूक्ष्मवालाग्रपूरिते तु पल्ये एकैकसूक्ष्मवालाग्रखण्डेन यदवगाढमाकाशं तत्रापि प्रत्येकमसंख्येयाः प्रदेशा विद्यंत एव, सूक्ष्मस्यापि वालाग्रखण्डस्य नभःप्रदेशापेक्षया स्थूलत्वाद् असंख्येयांस्तत्प्रदेशानन्तरेणावगाहस्यासम्भवादिति, एतेषां च सर्वेषां सर्ववालाग्रखण्डावगाढक्षेत्रप्रदेशानां प्रतिसमयमेकैकापहारे यः कालस्तदात्मकं सूक्ष्मक्षेत्रपल्योपममिति ज्ञातव्यम्, इदमप्यसंख्येयोत्सर्पिण्यवसर्प्पिणीमानमेव, केवलं पूर्वस्मादसङ्ख्येयगुणं, वालाग्राणामसंख्यातगुणत्वादिति, अथवा ये तत्र पल्येऽसङ्ख्येयखण्डीकृतवालाग्रैः स्पृष्टा अस्पृष्टाश्चाकाशप्रदेशास्ते सर्वेऽपीह गृह्यन्ते, तेषां च प्रतिसमयमेकैकापहारे यः कालस्तदात्मकं सूक्ष्मं क्षेत्रपल्योपममवगन्तव्यं, आह-ननु सूक्ष्मखण्डीकृतवालाग्रैर्निरन्तरं पूरिते पल्ये किमद्यापि केचित्तैरस्पृष्टा नभःप्रदेशाः सन्ति येनैवं द्वितीयमपि व्याख्यानं विधीयते, अत्रोच्यते, सूक्ष्मवालाग्रखण्डस्पृष्टनभःप्रदेशेभ्यो विद्यन्ते ते तत्रास्पृष्टा असङ्ख्यातगुणाः, शिलास्तम्भकपाटपर्वतादयो ह्यर्थाः स्वाक्रान्तमाकाशं व्याप्य स्थिताश्छद्मस्थैर्लक्ष्यन्ते अथ च स्वाक्रान्तक्षेत्रस्य ये प्रदेशास्तैः स्पृष्टास्तेभ्यो-

क्षेत्रपल्य-सागरोपमे

ऽसख्यातगुणास्तत्रैवास्पृष्टा अपि विद्यन्ते, पश्चादुपर्यास्फालिताय कीलकनिभियान्त प्रविष्टवृक्षमूलाद्यवकाशान्यथाऽनुपपत्ते', एवमत्रापि सूक्ष्मवालाग्रखण्डनिचितेऽपि पल्ये तत्स्पृष्टेभ्यस्तदस्पृष्टा नभ प्रदेशा सन्त्येवासङ्ख्येयगुणा , अत एवानन्तरोक्तप्रकारेणाभिहितसूक्ष्मक्षेत्रपल्योपमादिदमसङ्ख्यातगुण, इदमेव चाद्यकालीनसिद्धान्तेऽधिक्रियते, आह-यद्येव पल्यस्य सूक्ष्मवालाग्रखण्डपूरणेन किं प्रयोजन? यदा हि तत्स्पृष्टास्तदस्पृष्टाश्च नभ प्रदेशा गृह्यन्ते तदित्थमेवाभिधातुमुचित-तत्र पल्ये ये क्षेत्रप्रदेशास्तेषा प्रतिसमयमेकैकापहारे य कालस्तदात्मक सूक्ष्मक्षेत्रपल्योपममिति, किं वालाग्रखण्डपूरणेन?, नैतदेव, तत्पूरण विना प्रथमप्रकारोक्तसूक्ष्मक्षेत्रपल्योपमस्य प्ररूपयितुमशक्यत्वादिति, तेनापि किं प्रयोजन? द्वितीयप्रकारस्यैवेहाधिकृतत्वादितिचेत् सत्य, किन्तु प्रस्तुतपल्योपमेन दृष्टिवादे द्रव्याणि मीयन्ते, तानि च कानिचित् सूक्ष्मवालाग्रखण्डस्पृष्टैरेव नभ प्रदेशैर्मीयन्ते, कानिचित्तु तत्स्पृष्टास्पृष्टैरित्येव प्रथमप्रकारस्यापि दृष्टिवादोक्तद्रव्यमानोपयोगित्वाद्वालाग्रखण्डपूरणमपि नासगतमिति गाथार्थ ॥ १३१ ॥ उक्त बादर सूक्ष्म च क्षेत्रपल्योपममिदानीं तत्प्रमाणक्रमनिष्पन्न क्षेत्रसागरोपममाह–

एएसिं पल्लाण कोडाकोडी हवज्ज दसगुणिया । त सागरोवमस्स उ एक्कस्स भवे परीमाण ॥ १३२ ॥

बादरक्षेत्रपल्योपमाना दशभि कोटीकोटिभिर्बादर क्षेत्रसागरोपम सूक्ष्मक्षेत्रपल्योपमाना तु दशभि कोटीकोटिभि सूक्ष्म क्षेत्रसागरोपममिति तात्पर्यार्थोऽक्षरार्थस्तु पूर्ववदेवेति गाथार्थ ॥ १३२ ॥ अत्रापि बादरे क्षेत्रपल्योपमसागरोपमे निष्प्रयोजने अपि पूर्वोक्तकारणादुपन्यस्ते, सूक्ष्माभ्यां त्वाभ्यामस्ति प्रयोजन, तदुपदर्शयन्नाह—

क्षेत्रपल्यादिप्रयोजनं

एएण खेत्तसागरउवमाणेणं हवेज्ज नायव्वं । पुढविदगअगणिमारुयहरियतसाणं च परिमाणं ॥ १३३ ॥

एतेन सूक्ष्मक्षेत्रसागरोपमस्योपलक्षणत्वात् सूक्ष्मक्षेत्रपल्योपमस्य चोपमानेन प्रमाणेन ज्ञातव्यं, किमित्याह–'परिमाणं' सङ्ख्यानं केषां?-पृथिव्युदकाग्निवायुवनस्पतित्रसजीवानाम्, एतच्च किञ्चिदिहैव वक्ष्यते, किञ्चित्तु दृष्टिवादगम्यमिति गाथार्थः ॥१३३॥ तदेवं व्याख्यातं "पलिओवमं च तिविहं उद्धारऽद्धं चे" त्यादि, तद्व्याख्याने चोद्धारपल्योपमनिरूपणप्रस्तावे प्रोक्ताः सर्वेऽपि सर्वाद्धापर्यन्ताः कालविभागास्तद्भणने च व्याख्यातं सभावार्थं 'कालविभागो य होइऽणेगविहो' इत्यादि, तद्व्याख्याने च व्याख्यातं प्रमाणद्वारस्य तृतीयभेदस्वरूपं कालप्रमाणमथ तच्चतुर्थभेदस्वरूपं भावप्रमाणं निरूपयितुमाह–

गुणनोगुणानिप्फन्नं गुणानिप्फन्नं तु वन्नमाईयं । नोगुणानिप्फन्नं पुण संखाणं नो य संखाणं ॥ १३४ ॥

भवनं भावो-वस्तुनः परिणामो ज्ञानादिर्वर्णादिश्च, प्रमितिः प्रमीयतेऽनेन प्रमीयते वा स इति प्रमाणं, भाव एव प्रमाणं भावप्रमाणं, तच्च द्विविधं-गुणनिष्पन्नं नोगुणनिष्पन्नं च, गुणस्वरूपं नोगुणस्वरूपं चेत्यर्थः, तत्र गुणा रूपरसगन्धस्पर्शसंस्थानरूपास्तत्स्वरूपमेकं भावप्रमाणं, ते हि वस्तुपरिणामत्वाद् भावास्तैश्च कृत्वा वस्तु प्रमीयते-परिच्छिद्यते एतेऽपि वा स्वस्वरूपेण प्रमीयन्ते-परिच्छिद्यन्त इत्यमीषां प्रमाणता, एवमन्यत्रापि भावप्रमाणता सर्वत्राभ्यूह्या, नोगुणस्तु-गुणनिषेधरूपस्तत्स्वरूपं तु भावप्रमाणं द्वितीयं, इदं पुनरपि द्विधा-संख्यानं–संख्यास्वरूपं नोसंख्यानं च–तन्निषेधस्वरूपमिति गाथार्थः ॥ १३४ ॥ संख्यानं पुनर्द्विधेति दर्शयन्नाह–

सखाणं पुण दुविहं सुयसंखाणं च गणणसंखाणं । अक्खरपयमाईयं कालियमुक्का (३०००) लिय च सुयं ॥१३५॥

सख्यानं पुनरपि द्विधा, श्रुतसख्यानं गणनसख्यानं च, तत्र श्रुतसख्यानमक्षरपदादिकं, आदिशब्दात्पर्यायसङ्घातपाद-गाथादिपरिग्रहः, तदुक्तं-" सुयपरिमाणसंखा अणेगविहा पण्णत्ता, तंजहा-पज्जवसखा अक्खरसखा संघायसखा पयसखा पायसंखा गाहासंखा सिलोगसंखा वेढयसंखा निज्जुत्तिसंखा अणुओगदारसंखा उद्देससंखा अज्झयणसंखा सुयखंधसखा अंगसखात्ति " तत्र पर्यवाः पर्याया धर्मा इत्यनर्थान्तरं तद्रूपा च सख्या श्रुतस्यानन्ता द्रष्टव्या, एकैकस्याप्यकाराद्यक्षरस्य तदभिधेयस्य च जीवादि-वस्तुनः प्रत्येकमनन्तपर्यायत्वात्, एवमन्यत्रापि सख्यायोजना भावनीया, नवरं सख्येयानि श्रुते अकारककारादीन्यक्षराणि द्व्याद्यक्षर-संयोगरूपाः सङ्घाताः, सख्याता सुप्तिङन्तानि समयप्रसिद्धानि वा सख्येयानि पदानि गाथादिचतुर्थांशरूपाः सख्येयाः पादाः सख्येया गाथाः सख्येयाश्च श्लोकाः प्रतीता एव, छन्दोविशेषरूपाः सख्येया वेष्टकाः निक्षेपनिर्युक्त्युपोद्घातनिर्युक्तिसूत्रस्पर्शिकनिर्युक्ति-रूपा त्रिविधा च निर्युक्तिः व्याख्यानोपायभूतानि सत्पदप्ररूपणादीन्युपक्रमादीनि वा सख्येयान्यनुयोगद्वाराणि, सख्येया उद्देशाः सख्येयान्यध्ययनानि सख्येयाः श्रुतस्कन्धाः सख्येयान्याचारादीन्यङ्गानि । किं पुनस्तच्छ्रुतं यत्रेयमक्षरपदादिका सख्येत्याह-कालिकम्-आचारोत्तराध्ययनादिकमुत्कालिकं चन्दशवैकालिकावश्यकजीवाभिगमप्रज्ञापनादृष्टिवादादिकं तच्छ्रुतं यत्रेयमक्षरपदादिका प्रत्येकं सख्येति, नवरमुत्कालिके अङ्गं एकमेव दृष्टिवादलक्षणं नान्यदिति गाथार्थः ॥ १३५ ॥ उक्तं श्रुतसख्यानमथ गणन-सख्यानमुपदर्शयन्नाह—

**संखेज्जमसंखेज्जं अणंतयं चेव गणणसंखाणं । संखेज्जं पुण तिविहं जहण्णयं मज्झिमुक्कोसं ॥ १३६ ॥**

वक्ष्यमाणस्वरूपं सङ्ख्येयकमसङ्ख्येयकमनन्तकं चेत्येवं त्रिविधं गणनसङ्ख्यानं, सङ्ख्येयकं पुनरपि त्रिविधं जघन्यमध्यमोत्कृष्टभेदादिति गाथार्थः ॥ १३६ ॥ असङ्ख्येयकं पुनर्नवविधमिति दर्शयन्नाह–

गणन संख्याने संख्येयादि भेदाः

**तिविहमसंखेज्जं पुण परित्तजुत्तं असंखयासंखं । एक्केक्कं पुण तिविहं जहण्णयं मज्झिमुक्कोसं ॥ १३७ ॥**

असङ्ख्येयकं त्रिधा, तद्यथा-परीतासङ्ख्येयकं युक्तासङ्ख्येयकं असङ्ख्येयासंख्येयकं चेति, पुनः प्रत्येकमेकैकं जघन्यमध्यमोत्कृष्टभेदात् त्रिधेत्येवं नवविधमसंख्येयकमिति गाथार्थः ॥ १३७ ॥ अनन्तकं त्वष्टविधमित्यादर्शयन्नाह –

**तिविहमणंतंपि तहा परित्त जुत्तं अणंतयाणंतं । एक्केक्कंपिय तिविहं जहण्णयं मज्झिमुक्कोसं ॥ १३८ ॥**

तथाऽनन्तकमपि त्रिविधं, तद्यथा- परीतानन्तकं युक्तानन्तकं अनन्तानन्तकं चेति जघन्यमध्यमोत्कृष्टभेदात् पुनरेकैकं त्रिविधमित्येवं सूत्रेऽविशेषोक्तावपि व्याख्यानतो विशेषप्रतिपत्तेराद्यभेदद्वय एव प्रत्येकं त्रैविध्यमवगन्तव्यं, तृतीयभेदस्तु द्विप्रकार एव, तद्यथा-जघन्यमनन्तानन्तकं मध्यमं चानन्तानन्तकमिति, उत्कृष्टं त्वनन्तानन्तकं क्वचिदपि वस्तुनि न सम्भवतीति न तत् प्ररूप्यते, अतोऽनन्तकमष्टविधमिति गाथार्थः ॥ १३८ ॥ तदेवं सामान्यमात्रेण व्याख्यातं संख्येयकादिस्वरूपमथ विशेषतः सभावार्थं तद् व्याख्यातुमाह–

**जंबुद्दीवो सरिसवपुण्णो ससलागपडिमहसलागाहिं । जावइअं पडिपूरे तावइअं होइ संखेज्जं ॥ १३९ ॥**

अस्या गाथाया भावार्थं व्याख्याय पश्चादक्षरार्थं व्याख्यास्याम', तत्र चेह सख्येयकादिस्वरूपज्ञापनप्रस्तावे जम्बूद्वीपसमान आयामविष्कम्भाभ्यां प्रत्येक योजनलक्षप्रमाणो योजनसहस्रमवगाढो, रत्नप्रभापृथिव्या योजनसहस्रमान प्रथम रत्नकाण्ड भित्त्वा द्वितीये वज्रकाण्डे प्रतिष्ठित इत्यर्थ, वृत्ताकारत्वाच्च प्रमित्या " परिही तिलक्ख सोलससहस्स दो य सय सत्तवीसहिया । कोस तिय अट्ठवीस धणु सय तेरगुलद्धहिय ॥१॥ " इति गाथाप्रतिपादितप्रमाणयुक्तो धान्यपल्यवत्पल्य कल्प्यते, स चैवप्रमाण पल्यो बुद्धिकल्पनया सर्षपाणा तावद् भ्रियते यावज्जम्बूद्वीपवेदिकाया उपर्यपि सम्पूर्णशिख सम्पद्यते, ते चैतद्गता सर्षपा किलासत्कल्पनया देवादिना केनचिदुत्क्षिप्यैको द्वीपे एक समुद्र इत्येव क्रमेण सर्वेऽपि प्रक्षिप्यन्ते, एव चैते प्रक्षिप्यमाणा यत्र क्वापि द्वीपे समुद्रे वा निष्ठा यान्ति एतावत्पर्यवसानो जम्बूद्वीपादिरनवस्थितपल्यनामा पल्य परिकल्प्यते, स च सर्षपाणा वेदिकाया उपर्यपि सप्रशिख' पूर्यते. शलाकापल्ये चैकसर्षपरूपा शलाका प्रक्षिप्यते, कोऽय शलाकापल्य इति चेदुच्यते, सहस्रयोजनावगाढो योजनलक्षविस्तर सातिरेकयोजनलक्षत्रयपरिधिपरिकलितो जम्बूद्वीपवेदिकापर्यन्तोच्चैस्त्वसमन्वित पल्यो यादृश पूर्वं परिकल्पितस्तादृशस्त्रयोऽन्येऽपि परिकल्प्यन्ते इति सर्वेऽप्यमी चत्वार पल्या भवन्ति, तत्र प्रथम क्रमेण परिवर्द्धमानमूर्त्तित्वादवस्थितरूपाभावादनवस्थित पल्य उच्यते, द्वितीयस्तु शलाकाभिर्भ्रियमाणत्वाच्छलाकापल्यो व्यपदिश्यते, तृतीयस्तु प्रतिशलाकाभिरापूर्यमाणत्वात् प्रतिशलाकापल्य इष्यते, चतुर्थस्तु महाशलाकापूरणीयत्वान्महाशलाकापल्योऽभिधीयत इति, अथ प्रकृतमुच्यते, य पूर्वमनवस्थितपल्य सर्षपाणा भृतो मुक्त', तत्सर्षपा अपि पुनरुत्क्षिप्यन्ते, ततश्चैको द्वीपे एकश्च समुद्र इत्येव प्रक्षिप्यमाणा यदा निष्ठा ॥१२१॥
यान्ति तदा शलाकापल्ये द्वितीया शलाका प्रक्षिप्यते, सर्षपाश्च यत्र द्वीपे समुद्रे वा निष्ठितास्तत्पर्यवसान. पूर्वेण सह बृहत्तरोऽनव-

स्थितपल्यः सर्षपभृतः परिकल्प्यते, पुनः पुनः सोऽप्युत्क्षिप्य एकैकसर्षपप्रक्षेपक्रमेण द्वीपसमुद्रेषु प्रक्षिप्यते, शलाकापल्ये च तृतीयशलाका प्रक्षिप्यते, ते च सर्षपाः प्रक्षिप्यमाणाः यत्र द्वीपे समुद्रे वा निष्ठिताः तत्पर्यन्तः पूर्वेण सह बृहत्तमोऽनवस्थितपल्यस्तथैव सर्षपभृतः परिकल्प्यते पुनः सोऽप्युत्क्षिप्य तेनैव क्रमेण द्वीपसमुद्रेषु प्रक्षिप्यते शलाकापल्ये च चतुर्थी शलाका क्षिप्यते, एवं यथोत्तरं वृद्धस्यानवस्थितपल्यस्य भरणरिक्तीकरणक्रमेण तावद्वाच्यं यावदेकैकशलाकाप्रक्षेपेण शलाकापल्यो वेदिकाया उपर्यपि सप्रशिखो भ्रियतेऽपरां शलाकां न प्रतीच्छति, ततोऽनवस्थितपल्यः सर्षपभृतोऽपि नोत्क्षिप्यते किन्तु शलाकापल्य एवोध्रियते, अयमप्यनवस्थितपल्याक्रान्तक्षेत्रात् परत एकैकसर्षपक्रमेण द्वीपसमुद्रेषु प्रक्षिप्यते, यदा च निष्ठितो भवति तदा प्रतिशलाकापल्यलक्षणे तृतीये पल्ये एकसर्षपरूपा प्रथमा प्रतिशलाका प्रक्षिप्यते, ततोऽनवस्थितं समुद्धृत्य शलाकापल्यनिष्ठास्थानात् परतस्तेनैव क्रमेण प्रक्षिप्यते, निष्ठिते च तस्मिन् शलाकापल्ये शलाका क्षिप्यते, इत्थं पुनरप्यनवस्थितपल्यपूरणरेचनक्रमेण पूर्ववत् शलाकापल्यः शलाकानां भ्रियते, ततोऽनवस्थितशलाकापल्ययोर्भृतयोः शलाकापल्य एवोत्पाट्य अनवस्थितपल्यनिष्ठास्थानात् परतः पूर्वोक्तक्रमेणैव प्रक्षिप्यते, ततः प्रतिशलाकापल्ये द्वितीया प्रतिशलाका प्रक्षिप्यते, ततोऽनवास्थितपल्यं समुधृत्य शलाकापल्यनिष्ठास्थानात् परतस्तेनैव क्रमेण प्रक्षिप्यते, शलाकापल्ये च शलाका क्षिप्यते, एवमनवस्थितपल्योत्क्षेपप्रक्षेपक्रमेण शलाकापल्यः पुनरपि शलाकाभिः पूर्यते, शलाकापल्यस्य चोत्पाटननिक्षेपणाभ्यां पूर्वोक्तन्यायेन प्रतिशलाकापल्ये तावत् प्रतिशलाकाः प्रक्षिप्यन्ते यावत् स ताभिः सप्रशिखः पूर्यते, यदा चैवं प्रतिशलाकापल्यः शलाकापल्योऽनवस्थितपल्यश्चेत्येते त्रयोऽपि सप्रशिखाः पूरिता भवन्ति तदा प्रतिशलाकापल्य एवोत्पाट्य द्वीपसमुद्रेषु तथैवैकैकसर्षपक्रमेण प्रक्षिप्यते, निष्ठिते च तस्मिन् महाशलाकापल्ये

प्रथमा एकसर्पपरूपा महाशलाका प्रक्षिप्यते, ततः शलाकापल्य उत्पाट्य तथैव द्वीपसमुद्रेषु प्रक्षिप्यते, प्रतिशलाकापल्ये च प्रतिशलाका प्रक्षिप्यते, ततोऽनवस्थितपल्य उत्क्षिप्य तथैव द्वीपादिषु क्षिप्यते, शलाकापल्ये च शलाका निक्षिप्यते, एवमनवस्थितपल्योत्पाटनक्षेपणक्रमेण शलाकापल्य शलाकानां भरणीय. शलाकापल्योद्धरणविकिरणक्रमेण तु प्रतिशलाकापल्य प्रतिशलाकाभि पूरणीय' प्रतिशलाकाप ल्योत्पाटनप्रक्षेपणाभ्या तु महाशलाकापल्यो महाशलाकाभि पूरयितव्य, यदा तु चत्वारोऽपीत्थ परिपूर्णा भवन्ति तदोत्कृष्ट सख्येयक रूपाधिक भवति, इदमत्र तात्पर्य–यथोक्तेषु चतुर्षु पल्येषु भृतेषु ये सर्षपा ये चानवस्थितपल्यशलाकापल्यप्रतिशलाकापल्योत्क्षेपप्रक्षेपक्रमेण द्वीपसमुद्रा सर्षपैर्व्याप्तास्तावत्सख्यमुत्कृष्ट सख्येकमेकेन सर्षपरूपेण समधिक भवति, इद च तावदुत्कृष्ट सख्येयक, जघन्य तु द्वौ, न त्वेक., सख्याव्यवहारे तस्यानधिकृतत्वादिति, जघन्योत्कृष्टयोस्त्वन्तराले यानि त्र्यादीनि सख्यास्थानानि तत् सर्वं मध्यम सख्यात, आगमे च यत्र क्वचिदविशेषित सख्येयकग्रहण करोति तत्र सर्वत्र मध्यममेव द्रष्टव्यमिति अभिहित जघन्यमध्यमोत्कृष्टभेदभिन्न त्रिविध सख्येयक, अथ नवविधमसख्येयक प्रागुद्दिष्ट निरूप्यते-इहोत्कृष्टसख्येयक येनैकन सर्षपरूपेणाधिकमुक्त तयदा तस्मिन्नेवोत्कृष्टसख्यातराशौ प्रक्षिप्यते तदा जघन्य परीतासख्येयक भवति, तत परमस्यैव परीतासख्येयकस्य मध्यमानि स्थानानि भवन्ति तावद्यावदिदमेवोत्कृष्ट परीतासख्येयक, कियत्प्रमाण पुनरुत्कृष्ट परीतासख्यातमिति चेद्, उच्यते, अस्मिन्नेव जघन्यपरीतासख्येयके यावन्ति रूपाणि भवन्ति तावत्सख्या प्रत्येक जघन्यपरीतासख्येयकस्वरूपा राशयो न्यस्थाप्यन्ते, तत परस्पर गुण्यते, तैश्च परस्पर गुणितैर्यो राशिर्भवति स एकेन रूपेण हीन उत्कृष्ट परीतासख्येयक भवति, अत्र विनेयानां सुखप्रतिपत्त्यर्थमुदाहरणमात्र किञ्चिदुच्यते, तत्र जघन्यपरीतासख्येयके सद्भावतोऽसख्येय-

रूपात्मकेऽप्यसत्कल्पनया किल पञ्च रूपाणि सम्प्रधार्यन्ते, ततः पंचैव वाराः पञ्च पंच व्यवस्थाप्यंते, तद्यथा--५। ५। ५। ५। ५।, अत्राद्यःपंचप्रमाणो राशिरुत्तरेण पंचप्रमाणेन राशिना गुणितो जाता पंचविंशतिः, सा च पंचभिराहता जातं पंचविंशं शतमित्यादिक्रमेणामीषां राशीनां परस्पराभ्यासे जातानि पंचविंशत्यधिकान्येकत्रिंशच्छतानि ३१२५, एप कल्पनया एतावन्मानः सद्भावतस्त्वसंख्यातस्वरूपो राशिरेकेन रूपेण हीन उत्कृष्टं परीतासंख्येयकं सम्पद्यते, यदा तु येन रूपेणोनः प्रतिपादितोऽयं राशिस्तदपि तु रूपं गण्यते तदा जघन्ययुक्तासंख्येयकं जायते, अस्मिंश्च जघन्ये युक्तासंख्येयके यावन्ति रूपाणि प्राप्यन्ते पूर्वोक्तायां आवलिकायामपि तावन्तः समया भवन्तीति प्रतिपत्तव्यं, अतः सूत्रे यत्र क्वचिदावलिका गृह्यते तत्र सर्वत्र जघन्ययुक्ताऽसंख्येयकतुल्यसमयराशिमानाऽसौ द्रष्टव्या, इतश्च जघन्ययुक्ताऽसंख्येयकराशेः परत एकोत्तरया च वृद्ध्या यानि संख्यास्थानानि तत् सर्वं मध्यमं युक्ताऽसंख्येयकमवसेयं तावद्यावदुत्कृष्टं युक्ताऽसंख्येयकं न प्राप्नोति, कियत् पुनरुत्कृष्टं युक्ताऽसंख्येयकं भवतीत्युच्यते, जघन्यकयुक्तासंख्येयकराशिस्तेनैव राशिना गुणित एकेन रूपेणोन उत्कृष्टं युक्ताऽसंख्येयकं भवति, यदि पुनस्तदपि रूपं गण्यते तदा जघन्यमसंख्येयासंख्येयकं भवति, ततः परमेकोत्तरया वृद्ध्या यानि संख्यास्थानानि तत् समस्तं मध्यममसंख्येयासङ्ख्येयकं बोद्धव्यं, यावदुत्कृष्टमसंख्येयासंख्येयकं न प्राप्नोति, कियत् पुनस्तदुत्कृष्टमसंख्येयासंख्येयकं स्याद्?,उच्यते, जघन्ये असंख्येयासंख्येयके यावन्ति रूपाणि लभ्यन्ते तावत्संख्याः प्रत्येकं जघन्या असङ्ख्येयाऽसङ्ख्येयात्मका एव राशयो व्यवस्थाप्यन्ते, एते च राशयः पूर्ववत् परस्परं गुणिता यं राशिमुत्पादयन्ति स एकेन रूपेण हीन उत्कृष्टमसंख्येयासंख्येयकं भवति, उदाहरणं चात्राप्युत्कृष्टपरीतासंख्येयकोक्तानुसारेण वाच्यम्, समानन्यायत्वात्, केवलं तत्राभ्यस्तराशिभ्योऽत्र महान्तो राशयः परस्परं गुणनीया इत्येतावन्मात्रकृतो विशेषः, यदा च तदपि रूप-

सम्मिश्र राशौ क्षिप्यते तदा जघन्य परीतानन्तकं सम्पद्यते, एवमेकीयाचार्यमतं तावद्दर्शितं, अन्ये त्वाचार्या उत्कृष्टमसंख्येया संख्येयकमन्यथा प्ररूपयन्ति, तथाहि तद्वच 'जघन्यासंख्येयासंख्येयकराशेर्वर्गः' क्रियते, तस्यापि वर्गराशेः पुनर्वर्गो विधीयते, तस्यापि च वर्गवर्गराशेः पुनरपि वर्गो निष्पाद्यते, एवं च वारत्रयं वर्गे कृतेऽन्येऽपि प्रत्येकमसंख्येयस्वरूपा दश राशयस्तत्र प्रक्षिप्यन्ते, तद्यथा—" लोगागासपएसा धम्माधम्मेगजीवदेसा य । दव्वट्ठिया निओया पत्तेया चेव बोद्धव्वा ॥ १ ॥ ठिइबंधज्झवसाणे अणुभागा जोगछेयपलिभागा । दुण्ह य समाण समया असंखपक्खेवया दस उ ॥ २ ॥ " अयमर्थः,—लोकाकाशस्य सर्वस्यापि यावन्तः प्रदेशाः तथा धर्मास्तिकायस्याधर्मास्तिकायस्यैकस्य च जीवस्य यावन्तः प्रदेशाः "दव्वट्ठिया निओय" त्ति सूक्ष्माणां बादराणां चानन्तकायिकवनस्पतिजीवानां शरीराणीत्यर्थः, ' पत्तेया चेव ' त्ति पृथिव्यप्तेजोवायुप्रत्येकवनस्पतिद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपञ्चेन्द्रियलक्षणाः सर्वेऽपि प्रत्येकशरीरिणो जीवा इत्यर्थः, 'ठिइबंधज्झवसाण' त्ति, ज्ञानावरणादिकर्मणां स्थितिबन्धस्य कारणभूतान्यध्यवसायस्थानानि स्थितिबन्धाध्यवसायस्थानानि तान्यपि सर्वाणि, अत्राह ननु नासंख्येयकविचारे प्रस्तुतेऽसंख्यातस्वरूपा एव राशयः प्रक्षेपेऽधिक्रियन्ते न संख्यातात्मकाः, तेषामल्पत्वेनेहाकिञ्चित्करत्वात्, नाप्यनन्ता अनन्तानामसंख्येयकेऽनुप्रवेशायोगात् तत् कथमेतानि स्थितिबन्धाध्यवसायस्थानान्यसंख्येयानि येनेहाधिक्रियन्ते?, उच्यते, एवमेतत्, तथाहि-ज्ञानावरणीये जघन्याऽन्तर्मुहूर्तप्रमाणः स्थितिबन्धः, उत्कृष्टस्तु त्रिंशत्सागरोपमकोटीकोटिप्रमाणः, मध्यमपदे त्वेकद्वित्रिचतुरादिसमयाधिकान्तर्मुहूर्तादौ स्वयमसंख्येयभेदः, एषां च स्थितिविशेषाणां निर्वर्त्तकान्यध्यवसायस्थानानि प्रत्येकं भिन्नान्येव, एवं सत्येकस्मिन्नपि ज्ञानावरणेऽसंख्येयानि स्थितिबन्धाध्यवसायस्थानानि लभ्यन्ते, एवं दर्शनावरणादिष्वपि वाच्यमिति, असंख्येयत्वमत्रमीषां व्यक्तमेव, 'अणुभाग' त्ति अनुभागा ज्ञानावर-

णादिकर्मणां स्थितिबन्धे जघन्यमध्यमादिभेदभिन्ना रसविशेषाः असंख्येया एव, एतेषां चानुभागविशेषाणां निर्वर्त्तकान्यसंख्येयलोकाकाशप्रदेश प्रमाणान्यध्यवसायस्थानानि भवन्ति, अतोऽध्यवसायस्थानकारणभूतानामसंख्येयत्वात्तत्कार्यभूता अनुभागविशेषा अप्येतावन्तो द्रष्टव्याः, कारणभेदाश्रितत्वात् कार्यभेदानां, "जोगच्छेयपलिभाग" त्ति, योगो मनोवाक्कायविषयं वीर्यं तस्य केवलिप्रज्ञाछेदेन छिद्यमानस्य अतिविशिष्टा निर्विभागा भागा योगच्छेदप्रतिभागास्ते च निगोदादीनां संज्ञिपंचेन्द्रियपर्यन्तानां जीवानामाश्रिता जघन्यादिभेदभिन्ना असंख्येया मन्तव्याः, 'दुण्ह य समाण समयत्ति' द्वयोश्च समयोः-उत्सर्पिण्यवसर्पिणीकाललक्षणयोः समया असंख्येयस्वरूपाः, एवमेते प्रत्येकमसंख्येयस्वरूपा दश क्षेपाः पूर्वोक्ते वारत्रयवर्गिते राशौ प्रक्षिप्यन्ते, इत्थं च यो राशिः पिण्डितः सम्पद्यते स पुनरपि पूर्ववद्वारत्रयं वर्ग्यते, एवं च यो राशिर्भवति तत एकस्मिन् रूपे पातिते उत्कृष्टमसंख्येयासंख्येयकं भवति ॥ उक्तं नवविधमप्यसंख्येयकं, साम्प्रतं प्रागुद्दिष्टमष्टविधमनन्तकमभिधीयते, तत्रोत्कृष्टासंख्येयासंख्येयकभणने यद्रूपं पातितं तद्यदा तस्मिन्नेव राशौ प्रक्षिप्यते तदा जघन्यं परीतानन्तकं भवति, ततः परमेकोत्तरया वृद्ध्या यानि संख्यास्थानानि तत् सर्वं मध्यमं तानन्तकं यावद् उत्कृष्टं परीतानंतकं न प्राप्नोति, कियत् पुनरुत्कृष्टं परीतानन्तकं भवतीति,उच्यते,जघन्ये परीतानन्तके यावन्ति रूपाणि भवन्ति तावत्संख्याः प्रत्येकं जघन्यपरीतानन्तकप्रमाणा राशयो व्यवस्थाप्यन्ते, पूर्ववच्च ते परस्परं गुणिताः सन्तो यं राशिमुत्पादयन्ति स एकेन रूपेणोन उत्कृष्टं परीतानन्तकं भवत्युदाहरणभावनाऽत्रापि पूर्ववदिति, येन च रूपेणोनोऽसौ राशिर्यदा तदपि गण्यते तदा जघन्यं युक्तानन्तकं भवति, एतज्जघन्ययुक्तानन्तकराशिप्रमाणश्चाभव्यराशिः केवलिभिर्दृष्ट इति प्रतिपत्तव्यं, अतः परमेकोत्तरवृद्ध्या यानि संख्यास्थानानि तत् सर्वं मध्यमं युक्तानन्तकमवसेयं यावदुत्कृष्टं युक्तानन्तकं न प्राप्नोति, कियत् पुनरुत्कृष्टं

युक्तानन्तकं स्यादिति, तदुच्यते, यदा जघन्ययुक्तानन्तकराशिस्तेनैव राशिना गुण्यते रूपं चैकं ततः पात्यते तदोत्कृष्टं युक्तानन्तकं भवति, यदा च तदपि पातितं रूपं गण्यते तदा जघन्यमनन्तानन्तकं सम्पद्यते, ततः परमेकोत्तरवृद्ध्या सङ्ख्यास्थानानि मध्यममनन्तानन्तकं, उत्कृष्टं त्वनन्तानन्तकं नास्त्येवेति भावः, अन्ये त्वाचार्याः प्रतिपादयन्ति-जघन्यमनन्तानन्तकं पूर्ववद्वारात्रयं वर्ग्यते, ततस्तस्मिन्नेव राशौ एते षडनन्तकप्रक्षेपाः प्रक्षिप्यन्ते, तद्यथा-" सिद्धा निगोयजीवा वणस्सई काल पोग्गला चेव। सव्वमलोगागासं छप्पेते णंतपक्खेवा ॥ १ ॥ अयमर्थः-सर्वे सिद्धाः सर्वेऽपि सूक्ष्मबादरनिगोदजीवाः प्रत्येकसाधारणभेदभिन्नाः सर्वे च वनस्पतयः सर्वोऽपि चातीतानागतवर्त्तमानकालसमयराशिः सर्वलोकवर्त्ती च सर्वः पुद्गलसमूहः लोकालोकस्वरूपस्य च सर्वस्याप्याकाशस्य प्रदेशाः, एते षडप्यनन्तानन्तकविचारेऽत्र प्रस्तुते स्वयमनन्तस्वरूपाः प्रक्षेपकाः प्रस्तुतराशौ प्रक्षिप्यन्ते, आह-अनन्तकविचारस्यात्र प्रस्तुतत्वादनन्तात्मका एव राशयः प्रक्षेप्तव्याः, सङ्ख्यातासङ्ख्यातराश्योः स्वल्पत्वेनाकिञ्चित्करत्वात्, तत्र च वनस्पतिग्रहणे प्रत्येकवनस्पतयः एवाधिकाः प्राप्यन्ते, साधारणानां 'निगोयजीवा' इत्यनेन पूर्वमेव गृहीतत्वात्, प्रत्येकवनस्पतिभिश्च प्राप्तैरपि न कश्चिदुपयोगः, स्वल्पत्वादिति, नैतदेवमभिप्रायापरिज्ञानाद्, एतदेव हि निगोदजीवानन्तकं प्रत्येकजीवाधिक्यविशेषितं राशेर्वृद्ध्यापादनार्थं वनस्पतिग्रहणेन द्वितीयवारं प्रक्षिप्तं, इह हि पौनरुक्त्यचिन्ता नोपयोगिनी राशिवृद्ध्यापादनस्यैव साध्यत्वात्तथैकस्यापि राशेर्वारद्वयप्रक्षेपेण सम्पद्यत एवेत्यलं विस्तरेण, एतैश्च षड्भिरप्यनन्तकप्रक्षेपैः पूर्वराशौ प्रक्षिप्तैर्यो राशिरापद्यते स पुनरपि पूर्ववद्वारात्रयं वर्ग्यते, तथाऽप्युत्कृष्टमनन्तानन्तकं न भवति, ततश्च केवलज्ञानं केवलदर्शनं च ज्ञेयादिभेदात् प्रत्येकमनन्तभेदभिन्नं प्रक्षिप्यते, ततश्चोत्कृष्टमनन्तानन्तकं भवतीति प्रस्तुतप्रकरणचूर्ण्यामुक्तं, सर्वस्यैव वस्तुजातस्य सङ्गृहीतत्वाद्, अतः परं

वस्तुतत्त्वस्यैव संख्याविषयस्याभावादिति भावः, अनुयोगद्वारसूत्राभिप्रायस्तु इत्थमप्युत्कृष्टमनन्तानन्तकं न प्राप्यते, अजघन्योत्कृष्टस्थानानामेव तत्र प्रतिपादितत्वादतस्तन्मतेनेहानन्तकस्याष्टविधत्वमुच्यते, तत्त्वं तु केवलिनो विदन्तीति, सूत्रे च यत्र क्वचिदनन्तानन्तकं गृह्यते तत्र सर्वत्राजघन्योत्कृष्टं द्रष्टव्यमिति ॥ प्ररूपितं संख्यातमसंख्यातमनन्तं च सप्रभेदं, तत्प्ररूपणे च " जंबुद्दीवो सरिसवपुण्णो " इत्यादिगाथायाः कथितो भावार्थः, इदानीमक्षरार्थ उच्यते—तत्र जम्बूद्वीपग्रहणेन जम्बूद्वीपसमानस्य प्रथमं व्यवस्थापितत्वात्तदुपलक्षितोऽनवस्थितपल्यो गृह्यते, शलाकाप्रतिशलाकाशब्दाभ्यामपि शलाकाप्रतिशलाकापल्यौ गृहीतौ, एतौ चोपलक्षणं महाशलाकापल्यस्य, ततश्च जम्बूद्वीपः-अनवस्थितपल्यो यो वर्त्तते सर्षपपूर्णः, कथं ?, सह, कैः ?–शलाकाप्रतिशलाकामहाशलाकापल्यैः, स किमित्याह– " जावइयं पडिपूरि " त्ति आर्षत्वाद्यावता सर्षपसमूहेन प्रतिपूर्येत—पूर्वोक्तविस्तरक्रमेण सप्रशिखतया निरन्तरं भ्रियेत, तावत् सर्षपनिकुरुम्बं सर्षपाक्रान्तद्वीपसमुद्रसंख्यया सह रूपोनकमुत्कृष्टं संख्यातं भवति, तद्रूपप्रक्षेपे तु जघन्यं परीतासंख्येयकं सञ्जायत इत्यादि स्वयमेव द्रष्टव्यं, सूत्रकारेण तु नोक्तं, संख्यातस्वरूपे प्रोक्ते तस्य सुखावसेयत्वादिति गाथार्थः ॥ १३९ ॥ तदेवमुक्तं श्रुतसंख्यानगणनसंख्यानभेदभिन्नं संख्यानमथ तन्निषेधस्वरूपं नोसंख्यानमभिधित्सुराह—

**नोसंखाणं नाणं दंसण चरणं नयप्पमाणं च । पंच चउ पंच पंच य जहाणुपुव्वीए नायव्वा ॥ १४० ॥**

'नोसंख्यानं' संख्यानिषेधरूपं तल्लक्षणं यत् प्रमाणं भावप्रमाणमित्यर्थः, तदिह ज्ञानदर्शनचारित्रनयभेदात् चतुर्विध-

मवसेयम्, एतेऽपि च नानादयोऽर्थाश्चत्वारोऽपि ' यथाऽऽनुपूर्व्या ' यथासङ्ख्य पञ्चचतु पञ्चपञ्चस्वरूपा ज्ञातव्या , तत्राभिनिबोधिकश्रुतावधिमन पर्यायकेवलज्ञानभेदात् ज्ञानस्य पञ्च भेदा पूर्वं ज्ञानद्वारे, दर्शनस्य तु चक्षुरचक्षुरवधिकेवलदर्शनभेदाच्चत्वारो भेदा दर्शनद्वारे चारित्रस्य तु सामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिकसूक्ष्मसम्परायययथाख्यातचारित्रभेदात् पञ्च भेदाः संयमद्वारे विस्तरेण व्याख्याता एव, नयभेदा. पुनर्नैगमसङ्ग्रहव्यवहारर्जुसूत्रशब्दलक्षणा' पञ्च, तत्र नयन्त्येकांशेन वस्त्ववबोधगोचर प्रापयन्तीति नया , नीयते एकांशवस्त्ववबोधविषय प्राप्यतेऽमीभिरिति वा नया , नीतयो वा वस्त्वेकांशपरिच्छेदस्वरूपा नयाः, अनन्तधर्मात्मके वस्तुन्येकांशाध्यवसायात्मका नया इत्यर्थ', ते च नैगमादयस्तदुक्तम्–" नेगमसगहववहार उज्जुसुए चेव होइ नोद्धव्वे। सद्दे य समभिरूढे एवभूए य मूलनया ॥ १ ॥ " तत्र सामान्य चास्ति विशेषाश्च सन्तीत्यादिप्रकारेण परस्परनिरपेक्षसामान्यविशेषाद्यभ्युपगमरूपा नैकेऽपि तु बहवो गमा वस्तुपरिच्छेदा यस्यासौ निरुक्तविधिना ककारलोपान्नैगम', सामान्यविशेषात्मकत्वेन अनुयोगद्वारोक्तनिलयनप्रस्थकग्रामोदाहरणाद्यभिहितप्रकारैर्वा बहुरूपवस्त्वभ्युपगमपरो वा नयो नैगम इत्यर्थ., सर्वमपि भुवनत्रयान्तर्वर्ति वस्तुनिकुरुम्ब सगृह्णाति–सामान्यरूपतया एकत्वेनाध्यवस्यतीति सग्रह', केवलसामान्याभ्युपगमपरो नय सग्रह इत्यर्थ , व्यवहरण व्यवहारो लौकिकप्रवृत्तिरूपस्तदभ्युपगमपरो नयोऽपि व्यवहार , अथवा व्यवह्रियते लौकिको व्यवहार' सर्वोऽपि प्रवर्त्यतेऽनेनेति व्यवहार., प्राय केवलविशेषाभ्युपगमपरो नयो व्यवहार इत्यर्थ , जलाहरणव्रणपिण्डीप्रदानादिके हि लोकव्यवहारे घटनिंबादयो विशेषा एवोपकुर्वाणा दृश्यन्ते, न पुनस्तदतिरिक्त घटादिसामान्यमिति विशेषानेव सत्त्वेनासौ मन्यते न सामान्य, प्रायो लोकव्यवहारानुपकारित्वाद्विशेषव्यतिरेकेणानुपलभ्यमानत्वाच्चेति विशेषवादयमुच्यत इति, ऋज्वतीतानागत-

परकीयपरिहारेण प्रांजलं वस्तु सूत्रयति-अभ्युपगच्छतीति ऋजुसूत्रः, वर्त्तमानकालभावि स्वकीयमेव च यो वस्त्वभ्युपगच्छति स नय ऋजुसूत्र इत्यर्थः, 'शप् आक्रोशे' शब्द्यते-प्रोच्यतेऽर्थोऽनेनेति शब्दः-अर्थवाचको ध्वनिस्तत्प्रधानो नयोऽपि शब्दः, अयं हि शब्दमेव-प्रधानमिच्छत्यर्थं तु गौणं, शब्दवशेनैवार्थप्रतिपत्तेः, संज्ञाशब्दविकलस्यार्थस्य क्वाप्यप्रतीतेः शब्द एव प्रधानं न त्वर्थ इति भावः, अपरं चायं शब्दनयः पूर्वनयेभ्यो विशुद्धत्वान्नामस्थापनाद्रव्येन्द्रा न सन्त्येवेति मन्यते, इन्द्रकार्याकरणात् खपुष्पवादिति, भावेन्द्र-मेव च सन्तमभ्युपगच्छति इन्द्रकार्यकरणादिति, तटस्तटी तटं दाराः कलत्रं भार्येत्यादयो भिन्नलिंगाः शब्दाः वृक्षो वृक्षौ वृक्षाः इत्यादयो भिन्नवचनाश्च ध्वनय एकार्था इति च न मन्यते, लिंगवचनभेदात्, स्त्रीपुरुषादिशब्दवदिति। इन्द्रः शक्रः पुरन्दर इत्या-दींस्तु समानलिङ्गवचनान् शब्दानेकार्थान् प्रतिपद्यते वक्ष्यमाणनयाऽपेक्षया अविशुद्धत्वादिति । इन्द्रः शक्रः पुरन्दर इत्यादीनां पर्यायशब्दतया रूढानामपि पृथक् पृथक् भिन्नानर्थान् समभिरोहति–समभिश्रयतीति समभिरूढः, अयं हि नयः शब्दप्रधानोऽपि पूर्वस्माद्विशुद्धत्वादित्थं मन्यते-इंद्रशक्रादयः पर्यायशब्दा नैकार्था भिन्ननिमित्तत्वाद् घटपटादिशब्दवत्, तथाहि-इन्दनात् इंद्रः शकना-च्छक्रः पूर्दारणात् पुरन्दर इत्यादीनां भिन्नान्येव निमित्तानि, तथा 'घट चेष्टाया' मिति विशिष्टचेष्टावानर्थो घट उच्यते 'कुट कौटिल्य' इति कौटिल्ययोगात्तु कुटः 'उभ उंभ पूरण' इति कुस्थितपूरणाच्च कुम्भ इत्यादिपर्यायाणामिति भिन्नान्येव निमित्तानि, यदि च निमित्तभेदेऽपि ध्वनीनामेकार्थत्वमभ्युपगम्यते तदाऽतिव्याप्तिर्घटवृक्षादिशब्दानामप्येकार्थत्वप्रसंगादिति, वक्ष्यमाणनयापेक्षया चासौ नयोऽविशुद्धत्वाद् घटनादिकोऽर्थः स्ववाचकघटादिशब्दाभिधेयं चेष्टादिकमर्थमकुर्वाणोऽपि तद्योग्यतया घटादिशब्दवाच्यो भवति

घटादिशब्दश्च तद्वाचको भवतीति मन्यत इति, यथा शब्दो व्यवस्थितस्तथैव चार्थो यथा चार्थस्तथैव शब्द इत्येवंस्वरूप प्रकार भूतः- प्राप्त एवभूतो नय', इदमुक्त भवति-अयमपि नयः शब्दप्रधानो घटकुटकुम्भादिपर्यायध्वनीनां च भिन्नार्थत्वमुपगच्छति, केवल पूर्वस्मादिविशुद्धत्वादय विशेषो द्रष्टव्यः-यो घटादिशब्दवाच्यत्वेनोक्तोऽर्थ स यदा जलाहरणादिक्रियावस्थासु योषिन्मस्तकाधारूढ स्वाभिधायकध्वनिवाच्य चेष्टादिकमर्थं करोति तदैव घटादिस्तदैव च घटादिशब्दवाच्यो नान्यदा, प्रमाणयति चात्राय प्रस्तुत नय -स्थानस्थितो निश्चेष्टो घटो न भवत्येव घट', चेष्टालक्षणस्य घटशब्दवाच्यार्थस्याभावात्पर्वतादिवदिति, घटशब्दोऽपि निश्चेष्टावस्थाया घटस्य वाचकत्वेन नैव प्रवर्त्तते, स्वाभिधेयस्याभावात् पटादिशब्दवदित्येव कुटकुम्भेन्द्रशक्रादावपि भावना कार्येत्यत्र बहु वक्तव्य नतु नोच्यते, ग्रन्थविस्तरभयात्, स्वस्थाने विशेषावश्यकादौ प्रपञ्चेनोक्तत्वाच्चेति। एते नैगमादय' सप्त मूलभेदरूपा नया उत्तरभेदापेक्षया त्वमी समयेऽनेकविधा प्रोक्ता, 'एक्केक्को य सयविहो सत्त नयसया हवंति एमेव' इत्यादिवचनादिति, आह-ननु यद्यमी आगमेऽनेकविधा• प्रोक्ता', तत् किमत्र स्वल्पभेदाभिधान, मूलनया एवेह विवक्षिता इति चेन्ननु तेऽपि सप्तोक्ताः, किमितीह पञ्चाभिधीयन्ते, सत्यमुक्त, किन्तु शब्दसमभिरूढैवंभूतलक्षणास्त्रयो नया यथोत्तरविशुद्धत्वेनाभ्युपगमभेदेऽपि शब्दप्रधानत्वसामान्य न व्यभिचरतीत्येकशब्दनयत्वेन विवक्षिता, ततो नैगमसग्रहव्यवहारर्जुसूत्रलक्षणाश्चत्वारो मूलनया, पञ्चमस्तु शब्दनय इत्यदोष इति गाथार्थ' ॥ १४० ॥ ज्ञानप्रमाण मतिश्रुतज्ञानादिभेदात् पंचधा प्रोक्तमेतच्च प्रत्यक्षपरोक्षभेदात् सक्षेपतो द्विविधमपि भवतीति दर्शयन्नाह—

प्रत्यक्षपरोक्षभेदौ

**पच्चक्खं च परोक्खं नाणपमाणं समासओ दुविहं । पच्चक्खमोहिमणकेवलं च पारोक्ख मइसुत्ते ॥ १४१ ॥**

ज्ञानप्रमाणं समासतः-संक्षेपतो द्विविधमेव, तद्यथा-प्रत्यक्षं परोक्षं च, तत्र 'अशु व्याप्तौ'वित्यस्य धातोरश्नुते ज्ञानात्मनाऽर्थान् व्याप्नोतीत्यक्षो-जीवः 'अश भोजने' इत्यस्य वा अश्नाति भुंक्ते पालयति वा सर्वार्थानित्यक्षो-जीव एव, प्रतिगतमाश्रितमक्षं प्रत्यक्षमिति 'अत्यादयः क्रान्ताद्यर्थे द्वितीयये' ति द्वितीयातत्पुरुषः समासः, अन्ये त्वक्षमक्षं प्रति वर्त्तत इत्यव्ययीभावसमासं विदधति, तच्च न युज्यते, अव्ययीभावस्य नपुंसकलिङ्गत्वेन प्रत्यक्षशब्दस्य त्रिलिङ्गतार्थानुपपत्तेः, दृश्यते चेयं, प्रत्यक्षा बुद्धिः प्रत्यक्षो बोधः प्रत्यक्षं ज्ञानमिति दर्शनात् तस्माद्यथादर्शिततत्पुरुप एवायं, इन्द्रियनिरपेक्षस्यैवात्मनः साक्षादर्थं यद्दर्शयति तज्ज्ञानं प्रत्यक्षमित्यर्थः, तच्चावधिमनःपर्यायकेवलस्वरूपमेव, अस्यैवेन्द्रियनिरपेक्षतयाऽर्थपरिच्छेदकत्वसम्भवादिति, इदं चागमे नोइन्द्रियप्रत्यक्षत्वेनोक्तं, नोशब्दस्य सर्वनिषेधवचनत्वाद्यत्रेन्द्रियं सर्वथैव न व्याप्रियते किन्तु जीव एव साक्षादर्थं पश्यति तन्नोइन्द्रियप्रत्यक्षमवधिमनःपर्यायकेवलात्मकमेवेत्येकार्थत्वान्न कश्चिद्विरोधः, अक्षस्य-जीवस्य परं इंद्रियादिभिर्व्यवहितमिति परोक्षं, तच्च मतिज्ञानश्रुतज्ञानभेदतो द्विविधमेतज्ज्ञानद्वयस्यैवेंद्रियसापेक्षस्यार्थपरिच्छेदादिति गाथार्थः ॥ १४१ ॥ मतिश्रुते अपि विशेषतो निरूपयितुमाह—

**इंदियपच्चक्खंपि य अणुमाणं उवमयं च मइनाणं । केवलिभासियअत्थाण आगमो होइ सुयनाणं ॥ १४२ ॥**

परोक्षतया यदुक्तमनन्तरं मतिज्ञानं तद् द्विविधं, इन्द्रियप्रत्यक्षमपिशब्दादिन्द्रियपरोक्षं चेत्यपि द्रष्टव्यं, तत्रेन्द्रियैः स्पर्शनरसनघ्राणचक्षुःश्रोत्रलक्षणैः सहकारिकारणभूतैरक्षं-जीवं प्रति गतमिन्द्रियप्रत्यक्षं, यत्रेन्द्रियाण्येव साक्षाद्वस्तु पश्यन्ति न तु जीवस्तच्छ्रो-

॥१३२॥

गादीन्द्रियद्वारेणोत्पन्नत्वादिन्द्रियाणां साक्षाद्भूत जीवस्य तु परोक्ष लोके प्रत्यक्षतया रूढ शब्दरूपरसगन्धस्पर्शविषय मतिज्ञानमिन्द्रियप्रत्यक्षमुच्यत इत्यर्थ , यत्र त्विन्द्रियाण्यपि धूमलिङ्गादिद्वारेणाग्न्यादिक वस्तु गृह्णन्ति न साक्षात्तदिन्द्रियाणामपि परोक्षत्वादिन्द्रियपरोक्षमुच्यते, तच्च किं तदिति सूत्रकार एव दर्शयति अनुमानमौपम्य चेति, अनु लिंगग्रहणसम्बन्धस्मरणाभ्यां पश्चान्मीयतेपरिच्छिद्यते वस्त्वनेनेत्यनुमान, तच्च कृतकत्वधूमवत्त्वादिलिंगेभ्य शब्दपर्वतादिष्वनित्यत्वाग्निमत्त्वादिसाध्यवस्तुनिश्चयरूप द्रष्टव्य, औपम्य सादृश्य, क्वचिदिन्द्रियानिश्चये वस्तुनि तत सादृश्यात्तन्निश्चयो भवति, यथा गोसदृशो गवयो भवतीति पूर्वगृहीतसङ्केतस्य प्रमातु कदाचिदटव्यां गतस्य गोसादृश्यदर्शनाद् गवयनिश्चय , तदेतद् द्विविधमपि ज्ञान कृतकत्वादिभि सादृश्येण च व्यवधानादिन्द्रियपरोक्षमुच्यते, अभावार्थापत्तिलक्षणमपि प्रमाणद्वयमिन्द्रियपरोक्षमस्ति, केवलमनुमानेऽन्तर्भावादिह पृथक् नोक्त, शब्दरूप तु श्रुतज्ञान वक्ष्यते, प्रत्यक्ष त्विन्द्रियप्रत्यक्षतया प्रोक्तमिति प्रमाणषट्कसग्रह । तदेवमिन्द्रियप्रत्यक्षमिन्द्रियपरोक्ष चेति भेदद्वयरूपतया निरूपित मतिज्ञानम्, अथ श्रुतज्ञानस्वरूपमाह 'केवलभासिये' त्यादि, केवल-केवलज्ञान तेन भासिता प्रकटिता येऽर्थास्तेषां प्रतिपादकत्वेन सम्बन्धी य आगमो-द्वादशांगीरूपस्तच्छ्रुतज्ञान शब्दप्रमाणरूप भवति, अत्रापीन्द्रियाणां शब्दस्य च व्यवधायकत्वात् पूर्वगाथोक्तपरोक्षताऽस्त्येवेति गाथार्थ ॥१४२॥ उक्त ज्ञानप्रमाणमथ चक्षुर्दर्शनादिभेदात् यत् चतुर्विध दर्शनप्रमाण सामायिकादिभेदात् पञ्चविध चारित्रप्रमाण नैगमसग्रहादिभेदत पञ्चविध नयप्रमाणमिति दर्शयन्नाह—

चक्खुअचक्खूओहीकेवलदसण चरण च सामइयमाई । नेगमसगहववहारुज्जुसुए चेव सद्द नया ॥ १४३ ॥

पूर्वं व्याख्यातार्थैवेयं ॥ इह च ज्ञानदर्शनादीनामपि गुणत्वात् किमिति गुणप्रमाणात् पृथगुक्तानि ज्ञानदर्शनादिप्रमाणानीति न प्रेर्यं, शिष्यमतिव्युत्पादनफलत्वाद्विस्तरस्येति गाथार्थः ॥१४३॥ तदेवं प्रतिपादितं सर्वमपि भावप्रमाणं, तत्र च प्रतिपादिते प्रोक्तं द्रव्यक्षेत्रकालभावभेदाच्चतुर्विधमपि प्रमाणं, अनेन च द्रव्याणि प्रमीयन्ते अत एव द्रव्याणां प्रमाणं द्रव्यप्रमाणमितिव्युत्पत्तेर्द्रव्यप्रमाणद्वारामिदमुच्यते, इह च मिथ्यादृष्टिसास्वादनादिचतुर्दशजीवसमासलक्षणानि जीवद्रव्याणि प्रस्तुतानि वर्त्तन्ते, अतस्तान्येवानेन चतुर्विधप्रमाणेन प्रमीयमाणानि प्रत्येकं यावन्ति भवन्ति तदेतद्दर्शयितुमाह—

**मिच्छादव्वमणंता कालेणोसप्पिणी अणंताओ । खेत्तेण मिज्जमाणा हवंति लोगा अणंताओ ॥ १४४ ॥**

इह द्रव्यतो मिथ्यादृष्टिजीवद्रव्याण्यनन्तानि भवन्ति,कालेन-कालप्रमाणेन पुनर्मीयमानानि तान्येव मिथ्यादृष्टिजीवद्रव्याण्यनन्ता उत्सर्पिण्यवसर्पिण्यो भवन्ति, किमुक्तं भवति?-अनन्तासूत्सर्पिण्यवसर्पिणीषु यावन्तः समयाः प्राप्यन्ते सर्वलोकवर्त्तीन्येकेन्द्रियादिमिथ्यादृष्टिजीवद्रव्याण्यपि सर्वाणि तावन्ति भवन्तीति, क्षेत्रेण-पुनः क्षेत्रप्रमाणेन मीयमानानि तान्येव मिथ्यादृष्टिजीवद्रव्याण्यनन्ता लोका भवन्ति, अनन्तेषु लोकाकाशेषु यावन्तः प्रदेशास्तावन्ति भवन्तीत्यर्थः, भावप्रमाणेनेह मानं नोक्तं, तस्य द्रव्यक्षेत्रकालप्रमाणान्तर्गतस्यापि प्रमाणत्वेन व्यापारात्, तथाहि-संख्यातासंख्यातानन्तस्वरूपा संख्या भावप्रमाणेऽधीता, संख्ययैव चानया मुख्यतो द्रव्याणि मीयन्ते, द्रव्यक्षेत्रकालास्तु सङ्ख्येया एवोपाधित्वेन वर्तमाना गुणभूता एव, तस्मान्मुख्यतः सर्वत्रान्तर्गतेन भावप्रमाणेनैव द्रव्याणि मीयन्ते इति न तदिह पृथगुक्तमित्येवमन्यत्रापि भावनीयमिति गाथार्थः ॥ १४४ ॥ अथ सास्वादनसम्यग्मिथ्यादृष्टिविषयं प्रमाणमाह—

एगाईया भज्जा सासायण तहय सम्ममिच्छा य। उक्कोसेण तुणहवि पल्लस्स असंखभागो उ ॥ १४५ ॥

सास्वादना सम्यग्मिथ्यादृष्टयश्चाध्रुवत्वाल्लोके कदाचिद् भवन्ति कदाचित्तु न भवन्ति, यदि भवन्ति तदेकादयो भाज्या-विकल्पनीया', प्रत्येकमेको वा द्वौ वा त्रयो वा भवन्ति यावदुत्कृष्टतो द्वयोरपि राश्योः प्रत्येकममीषां क्षेत्रपल्योपमासङ्ख्येयभागः प्राप्यते, भावार्थस्त्वयं—क्षेत्रपल्योपमस्यासङ्ख्येयभागे यावन्तः क्षेत्रप्रदेशास्तावत्प्रमाणा प्रत्येकं सास्वादनसम्यग्दृष्टयः सम्यग्मिथ्यादृष्टयश्चोत्कृष्टतः कदाचिद्भवन्तीति भाव इति गाथार्थ' ॥ १४५ ॥ अथाविरतसम्यग्दृष्ट्यादीनां प्रमाणमाह—

पल्लाऽसंखियभागो अविरयसम्मा य देसविरया य। कोडिसहस्सपुहुत्तं पमत्त इयरे उ संखेज्जा ॥ १४६ ॥

इहाविरतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्तराशीनां ध्रुवत्वात् सामान्यत' सर्वलोकमाश्रित्य न कदाचित् व्यवच्छेदोऽत एतदिह चिंत्यते विवक्षितकाले प्रत्येकमेते कियन्तः प्राप्यन्ते?, तत्राविरतसम्यग्दृष्टयो जघन्यत' क्षेत्रपल्योपमासङ्ख्येयभागवर्तिप्रदेशराशिप्रमाणा लभ्यन्ते, उत्कृष्टतोऽप्येतावन्त एव, केवलमसंख्यातस्यासंख्यातभेदत्वाज्जघन्यादुत्कृष्टमसंख्यातगुणं द्रष्टव्यम्, देशविरता अप्येतावत्प्रमाणा एव, केवलं सोऽपि पल्योपमासंख्येयभागोऽविरतसम्यग्दृष्टीनां बृहत्तरोऽमीषां तु लघुतर इति द्रष्टव्यमिति, 'कोडिसहस्सपुहत्त पमत्त' त्ति प्रमत्ता'-पूर्वोक्तशब्दार्था , प्रमत्तसंयता इत्यर्थ', ते सामान्येन पञ्चदशस्वपि कर्मभूमिषु जघन्यत' कोटिसहस्रपृथक्त्वमुत्कृष्टतोऽपि कोटिसहस्रपृथक्त्वं भवन्ति, द्विप्रभृत्या नवभ्यः पृथक्त्वमिति सामयिकी संज्ञा, ततश्च जघन्यतोऽपि कोटिसहस्रद्वयादुपरि उत्कृष्टतोऽपि नव कोटिसहस्राणि यावत् प्रमत्तसंयताः प्राप्यन्त इत्युक्तं भवति, इतरे तु पूर्वाभिहित-

शब्दार्थी एवाप्रमत्तसंयताः संख्याता लभ्यन्ते, अमत्तसंयतेभ्यः स्तोकतरा इत्यभिप्राय इति गाथार्थः ॥ १४६ ॥ अथापूर्वकरणानिवृत्तिबादरसूक्ष्मसम्परायलक्षणेषु त्रिषु गुणस्थानकेषु मोहनीयकर्मण उपशमकाः क्षपका एव च प्राप्यन्ते, नान्ये, उपशान्तमोहगुणस्थाने तूपशान्तमोहनीयकर्माण एव क्षीणमोहगुणस्थाने पुनः क्षीणमोहा एव लभ्यन्ते नापर इति पूर्वं गुणस्थानकविचारे निर्णीतं, अत इहापूर्वकरणादिक्षीणमोहगुणस्थानकान्तेषु पञ्चसु गुणस्थानकेषु यानि जीवद्रव्याणि तेषां मोहोपशमकोपशान्तमोहमोहक्षपकक्षीणमोहप्रमाणद्वारेणैव प्रमाणं चिनिन्तयिषुर्मोहोपशमकानामुपशान्तमोहानां च तावत् प्रमाणमाह—

**एगाइय भयणिज्जा पवेसणेणं तु जाव चउपन्ना । उवसामगोवसंता अद्धं पइ जाव संखेज्जा ॥ १४७ ॥**

इह मोहनीयस्य कर्मण उपशमका उपशान्तमोहाश्च कदाचिद् भवन्ति कदाचित्तु न भवन्ति, उपशमश्रेणेरन्तरस्यापि सम्भवात्, तत्र यदा भवन्त्यमी तदैकादयो भाज्या मोहोपशमका उपशान्तमोहाश्च, प्रत्येकमेको वा द्वौ वा त्रयो वा यावदुत्कृष्टतश्चतुःपंचाशतः प्राप्यन्ते, केनेत्याह-प्रवेशनेन, उपशमश्रेण्यामेकसमये युगपत् प्रवेशमङ्गीकृत्येत्यर्थः,एकादयश्चतुःपंचाशदन्ता एव जीवा एकस्मिन् समये उपशमश्रेणिं प्रतिपद्यन्ते नाधिका इति सिद्धान्तनियमादिति, एते चापूर्वकरणानिवृत्तिबादरसूक्ष्मसम्परायगुणस्थानकेषूपशमका उच्यन्ते, उपशान्तमोहस्थानकं तु प्राप्ता उपशांतमोहा इत्यर्थ,ः तदेवमेते चतुःपञ्चाशदेकसमये युगपत् प्रवेशमङ्गीकृत्योक्ताः, नानासमयप्रविष्टांस्त्वधिकृत्याह--' अद्धं पइ जाव संखेज्ज ' त्ति, अद्धाशब्देन प्रारम्भात् परिसमाप्तिं यावदुपशमश्रेणिकालो विवक्षितः, स चासङ्ख्येयसमयात्मकोऽन्तर्मुहूर्त्तमानो मन्तव्यः, उपशमश्रेणेरन्तर्मुहूर्त्तात् परतो निरन्तरमसंभवात्, ततश्चैतामन्तर्मुहूर्त्त-

लक्षणामुपशमश्रेण्यद्धां प्रति चिन्त्यमाना उपशमका उपशान्ताश्च अन्यान्यसमयप्रविष्टास्तावद् भवन्ति यावदुत्कृष्टतः सङ्ख्याता, इदमुक्तं भवति-अन्तर्मुहूर्त्तलक्षणे उपशमश्रेणिकाले एकस्मिन् समये युगपदेवैकादयो यावदुत्कृष्टतश्चतु पञ्चाशत्प्रविष्टाः, अन्यस्मिन्नपि समये एतावन्तोऽपरस्मिन्नपि समये एतावन्त प्रविष्टा, एव ना ना समयप्रविष्टान् सर्वानप्यङ्गीकृत्य सर्वेस्मिन्नप्यन्तर्मुहूर्त्तमाने उपशमश्रेणिकाले पञ्चदशस्वपि कर्मभूमिषु कदाचिदुत्कृष्टत सख्याता उपशमका सख्याताश्चोपशाता प्राप्यन्ते, तत परमुपशमश्रेणेर्निरन्तरमभावु, आह--नन्वन्तर्मुहूर्त्तमानेऽप्युपशमश्रेणिकालेऽसख्याता. समया. प्राप्यन्ते, तत्र च प्रतिसमय यद्येकैकः प्रविशति तथाऽप्यसख्ये भवन्ति, किं पुनश्चतु पञ्चाशत्प्रवेश इति, अत्रोच्यते, स्यादेव यदि प्रतिसमयमसख्यातेष्वपि समयेष्वेव तत्प्रवेश स्यादेतच्च नास्ति, केषुचिदेव समयेष्वेव तत्प्रवेशसम्भवात्तथैवातिशयिभिर्दृष्टत्वात् गर्भजमनुष्याणामपि चासख्यातानामसम्भवाद् विशेषतस्तु चारित्रिणां, न च गर्भजमनुष्य चारित्रिण विहायान्य उपशश्रेणिं प्रतिपद्यत इत्यल विस्तरेण। तस्मादिहैतत् स्थितम् अपूर्वकरणानिवृत्तिबादरसूक्ष्मसम्परायलक्षणेषु त्रिषु गुणस्थानेषु प्रत्येक युगपदेकसमयप्रविष्टानङ्गीकृत्य जघन्यत एकादय उत्कृष्टतस्तु चतुष्पचाशन्मोहस्योपशमका कदाचित् प्राप्यन्ते, नानासमयप्रविष्टास्त्वाश्रित्योत्कृष्टत सख्याता. त एव कदाचिल्लभ्यन्ते, उपशान्तमोहगुणस्थानकेष्वेवमेव द्रष्टव्य, नवरमुपशमस्थाने उपशान्ता वाच्या इति गाथार्थ ॥ १४७ ॥ अथ मोहक्षपकानां क्षीणमोहानां च प्रमाणमाह—

खवगा उ खीणमोहा जिणा उ पविसन्ति जाव अट्ठसय। अद्धाए सयपुहुत्त कोडिपुहुत्त सजोगीण ॥१४८॥

अत्रापि मोहस्य क्षपका क्षीणमोहाश्च कदाचिद् भवन्ति कदाचिन्न भवन्ति, क्षपकश्रेणेरपि निरन्तरमसम्भवात्, ततो यदा

भवन्ति तदा क्षपका रागादिजेतृत्वेन क्षीणमोहलक्षणा जिनाश्च क्षपकश्रेण्यां युगपदेकसमयप्रवेशमङ्गीकृत्य जघन्यत एकादय उत्कृष्टतस्त्वष्टोत्तरं शतं, प्राप्यन्त इति वाक्यशेषः, एते चापूर्वकरणानिवृत्तिबादरसूक्ष्मसम्परायगुणस्थानकेषु वर्त्तमानाः क्षपका उच्यन्ते, श्रेणिमस्तकप्राप्तास्तु क्षीणमोहगुणस्थाने क्षीणमोहा इत्याख्यायन्ते, कुतः पुनरेकसमयप्रवेशमंगीकृत्यैतावन्त एवैते लभ्यन्ते नाधिका इत्याह—' पविसंति जाव अट्ठसयं ' ति, यतः कारणाद्युगपद्-एकसमये क्षपकश्रेण्यां जघन्यत एकादय उत्कृष्टतो यावदष्टोत्तर-शतप्रमाणा एव प्रविशन्ति नाधिका इति सिद्धान्तनियम इति भावः, तदेतद्युगपदेकसमयप्रविष्टानंगीकृत्य प्रमाणमुक्तं, अथ नाना-समयप्रविष्टानंगीकृत्याह—'अद्धाए सयपुहुत्तं' ति, अद्धा-क्षपकश्रेणिकालः, सोऽपि चासंख्येयसमयात्मकोऽन्तर्मुहूर्त्तमानो द्रष्टव्यः, तस्यां चोक्तस्वरूपायामद्धायामुत्कृष्टतः प्रत्येकं शतपृथक्त्वं क्षपकाणां क्षीणमोहानां च लभ्यते, इदमुक्तं भवति-अन्तर्मुहूर्त्तस्वरूपे क्षपक-श्रेणिकाले एकस्मिन् समये युगपदेवैकादयो यावदुत्कृष्टतोऽष्टोत्तरशतप्रमाणा जन्तवो मोहक्षपणाय प्रविष्टाः, एवमपरापरसमयेष्वन्ये-षामपि बहूनां प्रवेशसम्भवान्नानासमयप्रविष्टान् सर्वानप्यङ्गीकृत्य सर्वस्मिन्नप्यन्तर्मुहूर्त्तप्रमाणे क्षपकश्रेणिकाले सामान्येन सर्व-स्मिन्नपि मनुष्यक्षेत्रे कदाचिच्छतपृथक्त्वं क्षपकाणां शतपृथक्त्वं च क्षीणमोहानां प्राप्यते, ततः परं क्षपकश्रेणेरपि निरन्तरमभावा-दिति, असंख्येयाः कथममी न प्राप्यन्त इत्याक्षेपपरिहारौ पूर्ववद्वाच्याविति, तस्मादिदमिह स्थितम्-अपूर्वकरणानिवृत्तिबादरसूक्ष्म-सम्परायलक्षणेषु त्रिषु गुणस्थानकेषु प्रत्येकं युगपदेकसमयप्रविष्टानाश्रित्य जघन्यत एकादय उत्कृष्टतस्त्वष्टोत्तरं शतं क्षपकाणां कदाचिल्लभ्यन्ते, नानासमयप्रविष्टांस्त्वङ्गीकृत्योत्कृष्टतः पूर्वाभिहितशब्दार्थशतपृथक्त्वप्रमाणास्त एव कदाचित् प्राप्यन्ते, क्षीणमोहगुणस्थानकेऽप्येनमेव वक्तव्यं, नवरं क्षपकस्थाने क्षीणमोहा वाच्याः, तदेवं पूर्वगाथोक्तान् मोहोपशमकान् प्रस्तुतगाथोक्तान्

मोहक्षपकांश्च मीलयित्वाऽपूर्वकरणानिवृत्तिबादरसूक्ष्मसम्परायगुणस्थानकवर्त्तिजीवद्रव्याणां सर्वसंख्या परिभावनीया, अस्यैव राशिद्वयस्य यथोक्तगुणस्थानत्रये वर्त्तनाद्, उपशान्तमोहगुणस्थाने तूपशान्तमोहजीवद्रव्याण्येव, क्षीणमोहगुणस्थाने तु क्षीणमोहजीवद्रव्याण्येव वर्त्तन्त इति निर्णीतमेवेति, उक्तं क्षीणमोहपर्यन्तगुणस्थानवर्त्तिजीवद्रव्यप्रमाणम्, अथ सयोगिगुणस्थानवर्त्तिसयोगिकेवलिजीवद्रव्यमानमाह–'कोडिपुहुत्त सजोगीण' त्ति, सयोगिकेवलिनां सम्बन्धी राशिरवस्थित सर्वदैव, नतु व्यवच्छिद्यते, स च सामान्येन पञ्चदशस्वपि कर्मभूमिषु जघन्यत कोटिपृथक्त्वप्रमाण उत्कृष्टतोऽपि कोटिपृथक्त्वमानो भवति, अयोगिकेवलिनस्तु कदाचिद्भवन्ति कदाचित्तु न भवन्ति, यदि भवन्ति तदा जघन्यत एको वा द्वौ वा उत्कृष्टतस्तु सङ्ख्याता भवन्तीत्येतत् सूत्रकृता सुगमत्वादिकारणादनुक्तमपि स्वयमेव द्रष्टव्यमिति गाथार्थ ॥ १४८ ॥ तदेव प्रतिपादितं सामान्येन प्रस्तुतचतुर्दशजीवसमासवर्त्तिजीवद्रव्यप्रमाणम्, अथ नरकादिगतिविशेषितं तदेवाभिधित्सु नरकगतौ तावदाह–

पढमाए असंखेज्जा सेढीओ सेसियासु पुढवीसु । सेढीअसंखभागो हवंति मिच्छा उ नेरइया ॥ १४९ ॥

मिथ्यादृष्टयो नारका प्रथमायां–रत्नप्रभानरकपृथिव्यामसंख्येया श्रेणयो भवन्ति, सवर्त्ये घनीकृतलोकस्यासंख्याता स्वाकाशश्रेणिषु यावन्त आकाशप्रदेशास्तावत्प्रमाणाः प्रथमनरकपृथिव्यां मिथ्यादृष्टिनारकाः सर्वेऽपि भवन्तीत्यर्थ, 'सेसियासु'त्यादि, शेषासु–शर्कराप्रभादिषु षट्सु नरकपृथिवीषु प्रत्येकं घनीकृतलोकस्यैकस्या अपि नभःश्रेणेरसंख्येयतमे भागे यावन्त प्रदेशास्तावन्तो मिथ्यादृष्टिनारका भवति, अत्र च द्वितीयपृथिव्यां ये श्रेण्यसंख्येयभागवर्त्तिनो नारकास्तेभ्यस्तृतीयपृथ्व्यां-

नारकाः श्रेण्यसंख्येयभागवर्त्तित्वे तुल्येऽप्यसंख्याततमे भागे द्रष्टव्याः, असंख्यातस्यासंख्यातभेदत्वाद्, एवं तृतीयपृथ्वीनारकेभ्योऽपि चतुर्थपृथ्वीनारका असंख्याततमे भागे एव यावत् षष्ठपृथ्वीनारकेभ्यः सप्तमपृथ्वीनारका असंख्याततमे भागे वर्त्तन्त इति। असंज्ञिनो हि मत्स्यादयः प्रथमपृथिव्यामेवोत्पद्यन्ते न परत इति तस्यामेव नारकप्राचुर्यं, संज्ञिनोऽपि बहुबहुतरबहुतमादिसंक्लेशयुक्ता द्वितीयादिनरकपृथिव्युत्पादयोग्याः क्रमेण हीना इति तासु क्रमशो नारकहीनता भावनीयेत्युक्तं मिथ्यादृष्टिनारकप्रमाणं, सास्वादनाः सम्यग्मिथ्यादृष्टयश्च सप्तस्वपि पृथ्वीषु कदाचिद् भवन्ति कदाचित्तु न भवन्ति, यदि भवन्ति तदा चतसृष्वपि गतिषु सामान्येन पूर्वममी क्षेत्रपल्योपमासंख्येयभागप्रमाणाः प्रत्येकमुत्कृष्टतः प्रोक्तास्तदनुसारतोऽत्राप्येकस्यां नरकगतौ स्वल्पतराः केचिद् बोद्धव्याः, अविरतसम्यग्दृष्टयस्तु सप्तस्वपि पृथ्वीषु प्रत्येकमसंख्याताः सर्वदैवाव्यवच्छिन्नाः प्राप्यन्ते, असंख्यातं च क्षेत्रपल्योपमासंख्येयभागवर्त्तिनोऽमी सामान्येन चतसृष्वपि गतिषु पूर्वं निर्णीताः, तदनुसारेणात्रापि स्वल्पं किमपि द्रष्टव्यम्, देशविरतादयस्तु नरकगतौ न सम्भवन्त्येवेति प्रागेव निर्णीतमिति गाथार्थः ॥ १४९ ॥ अथ चतुर्दशजीवसमासगतमिथ्यादृष्ट्यादिजीवद्रव्याणामेव तिर्यग्गतिविशेषितं प्रमाणमाह—

**तिरिया हुंति अणंता पयरं पंचिंदिया अवहरंति। देवावहारकाला असंखगुणहीण कालेणं ॥ १५० ॥**

मिथ्यादृष्टय इति पूर्वगाथासूत्रादधिकृतं वर्त्तते, ततश्च मिथ्यादृष्टयस्तिर्यंचः सामान्येनैकेन्द्रियादयोऽनन्ता भवन्ति, विशेषचिन्तायां तु क्रियमाणायां पर्याप्तापर्याप्तस्वरूपाः सामान्येन पंचेन्द्रियतिर्यञ्चो मिथ्यादृष्टयः संवर्त्तितघनीकृतस्यासंख्येयप्रतरा-

मिथ्यादृष्टितिर्यग्मानम्

रमकस्य लोकस्य सम्बन्धिन सप्तरज्ज्वायामविष्कम्भ एकप्रदेशमात्रपिण्डं सर्वात्मना त्वसख्येयनभ प्रदेशप्रमाणं उपर्युपरिव्यवस्थापितप्रभूतमण्डकाना मध्यादेकमण्डकमिव प्रतरमपहरन्ति, कियता कालेनेत्याह—देवापहारकालादसख्येयगुणहीनेन कालेन, इदमत्र हृदय—एते पचेन्द्रियतिर्यंच सामान्येन यथोक्तप्रतरासख्येयभागेऽसख्येययोजनकोटीकोटिवर्त्तिनीषु नभ प्रदेशश्रेणिषु यावन्त. प्रदेशास्तत्प्रमाणा सिद्धान्ते क्षेत्रत प्रतिपादिता, कालतस्त्वसख्येयोत्सर्प्पिण्यवसर्पिणीसमयराशितुल्या, उक्त च- 'पचेंदियतिरिक्खजोणिया ण भते! केवइया पण्णत्ता?, गोयमा! असखेज्जा कालओ असखेज्जाहिं उस्सप्पिणीओसप्पिणीहिं अवहीरति, खेत्तओ असखेज्जाओ सेढीओ पयरस्सासखेज्जइभागो, तासिण सेढीण विक्खभसूई असखेज्जाओ जोयणकोडाकोडीओ" इत्यादि, अत प्रतरासख्येयभागवर्त्त्यसख्येययोजनकोटीकोटिगतनभ.श्रेणिश्रितप्रदेशराशितुल्या. सामान्येन पचेन्द्रियतिर्यंचो जीवा इत्युक्त भवति, एते च सर्वे प्रतिसमय प्रत्येकमेकैक प्रदेश गृह्णन्तो देवापहारकालादसख्येयगुणहीनेन कालेन सर्वं प्रतरमपहरन्ति, देवा हि सर्वेऽपि पचेन्द्रियतिर्यग्भ्योऽसख्येयगुणहीना, पचेन्द्रियतिर्यंचस्तु तेभ्योऽसख्येयगुणा प्रज्ञापनामहादण्डके निर्दिष्टा, ततश्च सर्वेऽपि देवा प्रतिसमय प्रत्येकमेकैक प्रदेश गृह्णन्त पचेन्द्रियतिर्यग्भ्योऽसख्येयगुणहीनत्वेन स्वल्पा इति पचेन्द्रियतिर्यगपहारकालादसख्येयगुणेन कालेन सर्वं प्रतरमपहरन्ति, पचेन्द्रियतिर्यंचस्तु देवेभ्योऽसख्येयगुणत्वेन बहव इति देवापहारकालात् सामर्थ्यत एवासख्यातगुणहीनतायुक्तेन स्वल्पेनैव कालेन सर्वं प्रतरमित्थमपहरति, अगुलासख्येयभागरूप तु प्रतरखण्ड यदि प्रत्येक सर्वेऽपि गृह्णन्ति तदा सर्वेऽपि पचेन्द्रियतिर्यंच एकहेलयैव सर्वं प्रतरमपहरन्तीति द्रष्टव्यमिति गाथार्थ ॥ १५१ ॥ अथ मिथ्यादृष्टितिरश्चामेव वैक्रियलब्धिमता प्रमाणमाह—

पढमंगुलमूलस्सासंखतमो सूइसेढिआयामो । उत्तरविउव्वियाणं पज्जत्तयसन्नितिरियाणं ॥ १५२ ॥

अनन्तरोक्तसामान्यपंचेन्द्रियतिर्यक्षु मध्ये पर्याप्तसंज्ञिनां पर्याप्तगर्भजानां पंचेन्द्रियतिरश्चां वैक्रियलब्धिमतामेतत् प्रमाणं भवति, किमित्याह–' पढमंगुले ' त्यादि, एते हि तावत् पर्याप्तगर्भजपंचेन्द्रियतिर्यंचो वैक्रियशरीरिणः कालतोऽसंख्येयोत्सर्पिण्यवसर्पिणी-समयराशितुल्याः क्षेत्रतस्तु प्रतरासंख्येयभागवर्त्यसंख्येयश्रेणीनां यः प्रदेशराशिस्तत्समानाः सिद्धान्ते प्रतिपादिताः, यदाह– " पंचिंदियतिरिक्खजोणियाणं भंते! केवतिया वेउव्वियसरीरा पण्णत्ता? गोयमा! असंखेज्जा कालओ असंखिज्जाहिं ओसप्पिणी-उस्सप्पिणीहिं अवहीरंति, खेत्तओ पयरस्स असंखेज्जइभागो असंखेज्जाओ सेढीओ " त्ति, आह-ननु प्रतरासंख्येयभागे असंख्येयाः श्रेणयोऽसंख्यातयोजनकोटीकोटीगता अपि भवन्ति तत् किं तावद्विस्तरा अपि ता इह गृह्यन्ते उतान्यथेत्याशंक्यागमेऽपि " असंखेज्जाओ सेढीओ " इत्यस्यानन्तरमुक्तम्-" तासिणं सेढीणं विक्खंभसूई अंगुलपढमवग्गमूलस्स असंखेज्जइभागो " तासामसंख्यातश्रेणीनां विष्कम्भसूचिस्तिर्यग्विस्तारिणी प्रदेशपंक्तिरिति हृदयं, सा ज्ञेयेति वाक्यशेषः, कियतीत्याह–'अंगुलपढमे'-त्यादि, एतत्संवादकं चेह गाथायां सूत्रकारेणोक्तं ' पढमंगुले ' त्यादि, तस्मादयमर्थः-' अंगुलस्य ' अंगुलप्रमाणस्य प्रतर-क्षेत्रस्य यन्मूलं-वर्गमूलं तदंगुलमूलं प्रथमं च तदंगुलमूलं च प्रथमांगुलमूलं तस्य प्रथमांगुलमूलस्यासंख्येयतमो यो भागस्तत्प्रमाणा सूचिरिह श्रेणीनामायामो-विस्तरो बोद्धव्यः, इदमत्र तात्पर्य-अंगुलप्रमाणे प्रतरक्षेत्रे यः श्रेणिराशिस्तत्र किलासंख्येयानि वर्गमूला-न्युत्तिष्ठन्ति, तेषु मध्ये प्रथमे वर्गमूले याः श्रेणयस्तासामसंख्येयतमे भागे यावत्यः श्रेणयस्तत्प्रमाणा सूचिः श्रेणीनां विस्तरोऽत्र

वैक्रिय तिर्यग्मानं

गृह्यते, तत्र चाङ्गुलप्रमाणेऽपि प्रतरक्षेत्रेऽसङ्ख्येया श्रेणयो भवन्ति, प्रथमवर्गमूलमपि च तासामसङ्ख्येयश्रेण्यात्मकं, तदसङ्ख्येयभागेऽपि चासङ्ख्येया श्रेणयः, तासु च मध्ये एकैकाऽपि श्रेणिरसङ्ख्येयप्रदेशात्मकैव, अतः सर्वास्वप्येतासु येऽसङ्ख्याताः प्रदेशास्तावत्प्रमाणा उत्तरवैक्रियशरीरलब्धिसम्पन्नाः पर्याप्तसञ्ज्ञिपञ्चेन्द्रियतिर्यञ्चोऽसङ्ख्येयेषु द्वीपादिषु गजमत्स्यहंसादयो भवन्तीति प्रतिपत्तव्यम्, अत्र विनेयजनानुग्रहार्थं कल्पनया कश्चिद्भावार्थः कथ्यते, तत्राङ्गुलप्रमाणे प्रतरक्षेत्रेऽसङ्ख्येयश्रेण्यात्मकेऽपि पञ्चषष्टिः सहस्राणि पञ्च शतानि षट्त्रिंशदधिकानि श्रेणीनां कल्प्यन्ते, तद्यथा–६५५३६, अस्य राशेः प्रथमं वर्गमूलं षट्पञ्चाशदधिके द्वे शते २५६ द्वितीयं तु षोडश १६ तृतीयं चत्वारि ४ चतुर्थं द्वौ २ एतानि सद्भावतोऽसङ्ख्येयानि प्रत्येकं चासङ्ख्येयश्रेण्यात्मकानि ज्ञातव्यानि, तत्र षट्पञ्चाशदधिकशतद्वयलक्षणस्य प्रथमवर्गमूलस्यासङ्ख्येयतमे भागे द्वात्रिंशच्छ्रेणयः कल्प्यन्ते, ताश्च प्रत्येकं सद्भावतोऽसङ्ख्येयप्रदेशात्मिका अप्यसत्कल्पनया दशप्रदेशात्मिकाः परिभावनीयाः, ततो विंशत्यधिकशतत्रयप्रमाणाः पर्याप्तसञ्ज्ञिपञ्चेन्द्रियतिर्यञ्चो वैक्रियलब्धिमन्तो विज्ञेयाः, सद्भावतस्त्वसङ्ख्येयाः । अपर्याप्तानामसञ्ज्ञिनां च वैक्रियलब्धिर्न भवत्येवेति पर्याप्तसञ्ज्ञिविशेषणमिति गाथार्थः ॥ १५२ ॥ तदेवं मिथ्यादृशामेकेन्द्रियादिस्वरूपाणां सामान्येन तिरश्चां प्रथमं प्रमाणमुक्तं, ततः पर्याप्तापर्याप्तस्वरूपाणां सामान्येन पञ्चेन्द्रियतिरश्चां ततोऽप्युत्तरवैक्रियलब्धिमत्पञ्चेन्द्रियतिरश्चां, साम्प्रतं पुनः पूर्वोक्तपर्याप्तापर्याप्तपञ्चेन्द्रियतिर्यग्भ्यो निर्द्धार्य विशेषतः पर्याप्तानामेव स्त्रीपुनपुंसकस्वरूपाणां पञ्चेन्द्रियतिरश्चां प्रमाणमाह—

संखेज्जहीणकालेण होइ पज्जत्ततिरिय अवहारो । संखेज्जगुणेण तओ कालेण तिरिक्ख अवहारो ॥१५३॥

प्रतिसमयं प्रत्येकमेकैकं प्रदेशमपहरन्तो यावता कालेन देवाः प्रतरमपहरन्ति ततः कालात् संख्येयगुणहीनेन कालेन पर्याप्तपञ्चेन्द्रियतिरश्चां प्रतरापहारो भवति, भावना चेह सामान्येन पूर्वोक्तपञ्चेन्द्रियतिर्यग्वदेव कार्या, नवरमयं विशेषः- सामान्येन पर्याप्तापर्याप्तस्वरूपाः पञ्चेन्द्रियतिर्यञ्चो देवेभ्योऽसंख्यातगुणा इति देवापहारकालात्तदपहारकालोऽसंख्येयगुणहीनः पूर्वमुक्तः, इह तु पर्याप्ताः पञ्चेन्द्रियतिर्यञ्चः किल देवेभ्यः संख्यातगुणा एवेति देवापहारकालात् तदपहारकालः संख्यातगुणेनैव हीनो न पुनरसंख्यातगुणेनेति तावत् प्रस्तुतग्रन्थाभिप्रायः, प्रज्ञापनाऽभिप्रायतस्तु पर्याप्ता अपि पञ्चेन्द्रियतिर्यञ्चो देवेभ्योऽसंख्यातगुणा एवेति देवापहारकालादेतदपहारकालोऽप्यसंख्येयगुणेनैव हीनो न संख्येयगुणेनेति ज्ञायते, तथा हि बुहुपु स्थानेष्वत्रैव प्रकरणेऽन्यत्रापि चातीवोपयोगित्वात् प्रज्ञापनाऽभिहितो महादण्डकपाठ एव लिख्यते, तद्यथा—“ अह भंते ! सव्वजीवऽप्पबहुमहादण्डयं कित्तइस्सामि, सव्वत्थोवा गब्भवक्कंतियमणुस्सा, मणुस्सीओ संखेज्जगुणाओ, बायरतेउकाइया पज्जत्तया असंखेज्जगुणा, अणुत्तरोववाइया देवा असंखेज्जगुणा, उवरिमगेवेज्जगा देवा संखेज्जगुणा, मज्झिमगेवेज्जगा देवा संखेज्जगुणा, हिट्ठिमगेवेज्जगा देवा संखेज्जगुणा, अच्चुए कप्पे देवा संखेज्जगुणा, आरणे कप्पे देवा संखेज्जगुणा, पाणए कप्पे देवा संखेज्जगुणा, आणए कप्पे देवा संखेज्जगुणा, अहे सत्तमाए पुढवीए नेरइया असंखेज्जगुणा, छट्ठाए तमाए पुढवीए नेरइया असंखेज्जगुणा, सहस्सारे कप्पे देवा असंखेज्जगुणा, महासुक्के कप्पे देवा असंखेज्जगुणा, पंचमाए धूमप्पभाए पुढवीए नेरइया असंखेज्जगुणा, लंतए कप्पे देवा असंखेज्जगुणा, चउत्थीए पंकप्पभाए पुढवीए नेरइया असंखेज्जगुणा, बंभलोए कप्पे देवा असंखेज्जगुणा, तच्चाए वालुयप्पभाए पुढवीए नेरइया असंखेज्जगुणा, माहिंदे कप्पे देवा असंखेज्जगुणा, सणंकुमारे कप्पे देवा असंखेज्जगुणा, दोच्चाए

सक्करप्पभाए पुढवीए नेरइया असखेज्जगुणा, संमुच्छिममणुस्सा असखेज्जगुणा, ईसाणे कप्पे देवा असखेज्जगुणा, ईसाणे कप्पे देवीओ सखेज्जगुणाओ, सोहम्मे कप्पे देवा सखेज्जगुणा, सोहम्मकप्पे देवीओ सखेज्जगुणाओ, भवणवासी देवा असखेज्जगुणा, भवणवासिणीओ देवीओ सखेज्जगुणाओ, इमीसे रयणप्पभाए पुढवीए नेरइया असखेज्जगुणा, खहयरपंचिंदियतिरिक्खजोणिया पुरिसा असखेज्जगुणा, खहयरपंचिंदियतिरिक्खजोणीओ सखेज्जगुणाओ थलयरपंचिंदियतिरिक्खजोणिया पुरिसा सखेज्जगुणा, थलयर पंचिंदियतिरिक्खजोणीओ सखेज्जगुणाओ, जलयरपंचिंदियतिरिक्खजोणिया पुरिसा सखेज्जगुणा, जलयरपंचिंदियतिरिक्खजोणिणीओ सखेज्जगुणाओ, वाणमंतरा देवा सखेज्जगुणा, वाणमंतरीओ देवीओ सखेज्जगुणाओ, जोइसिया देवा सखेज्जगुणा, जोइसिणीओ देवीओ सखेज्जगुणाओ, खहयरपंचिंदियतिरिक्खजोणिया नपुंसया असखेज्जगुणा, थलयरपंचिंदियतिरिक्खजोणिया नपुंसया सखेज्जगुणा, जलयरपंचिंदियतिरिक्खजोणिया नपुंसया सखेज्जगुणा, चउरिंदिया पज्जत्तया सखेज्जगुणा, पंचिंदिया पज्जत्तया विसेसाहिया, बेइंदिया पज्जत्तया विसेसाहिया, तेइंदियपज्जत्तया विसेसाहिया, पंचिंदियाऽपज्जत्तया असखेज्जगुणा, चतुरिंदियअपजत्तया विसेसाहिया, तेइंदियापज्जत्तया विसेसाहिया, बेइंदिया अपज्जत्तया विसेसाहिया, पत्तेयसरीरबायरवणप्फइकाइया पज्जत्तगा असंखेज्जगुणा, बायरनिगोया पज्जत्तगा असखेज्जगुणा, बायरपुढविकाइया पज्जत्तगा असंखेज्जगुणा, बायरआउकाइया पज्जत्तगा असंखेज्जगुणा, बायरवाउकाइया पज्जत्तगा असंखेज्जगुणा, बायरतेउकाइया अपज्जत्तगा असखेज्जगुणा, पत्तेयसरीरबायरवणप्फइकाइया अपज्जत्तगा असंखेज्जगुणा, बायरनिगोया अपज्जत्तगा असखेज्जगुणा, बायरपुढविकाइया अपज्जत्तगा असंखेज्जगुणा, बायरआउकाइया अपज्जत्तगा असखेज्जगुणा, बायर-

वाउकाइया अपज्जत्तगा असंखेज्जगुणा, सुहुमतेउकाइया अपज्जत्तगा असंखेज्जगुणा, सुहुमपुढविकाइया अपज्जत्तगा विसेसाहिया, सुहुमआउकाइया अपज्जत्तगा विसेसाहिया, सुहुमवाउकाइया अपज्जत्तगा विसेसाहिया, सुहुमतेउकाइया पज्जत्तगा संखेज्जगुणा, सुहुमपुढविकाइया पज्जत्तगा विसेसाहिया, सुहुमआउकाइया पज्जत्तगा विसेसाहिया, सुहुमवाउकाइया पज्जत्तगा विसेसाहिया, सुहुमनिगोयअपज्जत्तगा असंखेज्जगुणा, सुहुमनिओया पज्जत्तगा संखेज्जगुणा, अभवसिद्धिया अणंतगुणा, परिवडियसम्मदिट्ठी अणंतगुणा सिद्धा अणंतगुणा, बायरवणस्सइकाइया पज्जत्तगा अणंतगुणा, बायरपज्जत्तगा विसेसाहिया, बायरवणस्सइकाइया अपज्जत्तया असंखेज्जगुणा, बायरा अपज्जत्तगा विसेसाहिया, बायरा विसेसाहिया, सुहुमवणप्फइकाइया अपज्जत्तगा असंखेज्जगुणा, सुहुमअपज्जत्तया विसेसाहिया, सुहुमवणस्सइकाइया पज्जत्तगा संखेज्जगुणा, सुहुमपज्जत्तगा विसेसाहिया, सुहुमा विसेसाहिया, [तिरिक्खजोणिया विसेसाहिया,] भवसिद्धिया विसेसाहिया, निगोयजीवा विसेसाहिया, वणप्फइजीवा विसेसाहिया, एगिंदिया विसेसाहिया, निगोयजीवा विसेसाहिया, वणप्फइजीवा विसेसाहिया, एगिंदिया विसेसाहिया, तिरिक्खजोणिया विसेसाहिया, मिच्छदिट्ठी विसेसाहिया, अविरया विसेसाहिया, सकसाई विसेसाहिया, छउमत्था विसेसाहिया, सजोगी विसेसाहिया, संसारत्था विसेसाहिया सव्वजीवा विसेसाहियत्ति।" तदेवमत्र **प्रज्ञापना**महादण्डके ये नपुंसकखचरपञ्चेन्द्रियतिर्यगादिराशयो ज्योतिष्कपर्यन्तदेवेभ्योऽसंख्येयगुणादिस्वरूपा उक्ताः तेषामपि राशीनामुपर्येवाग्रतः पर्याप्ताः पंचेन्द्रिया विशेषाधिकत्वेन पठिता इति कथं पर्याप्ताः पंचेन्द्रियतिर्यंचो देवेभ्योऽसंख्येयगुणा न भवेयुः?। अथ महादण्डके पर्याप्तपञ्चेन्द्रियग्रहणेन चतुर्गतिका अपि सामान्यतः पर्याप्तपञ्चेन्द्रिया गृहीता इति बहुत्वाद्देवेभ्यस्ते युज्यन्त एवासंख्यातगुणाः, नतु प्रस्तुतग्रन्थगाथोक्ताः पर्याप्तपञ्चेन्द्रिय-

तिर्यञ्च , तेषा तिर्यग्गतिलक्षणैकगतिविषयत्वेन स्तोकत्वादिति चेत्तदयुक्त, यतो महादण्डके सामान्यपर्याप्तपञ्चेन्द्रियग्रहणेऽपि पर्याप्तपञ्चेन्द्रियास्तिर्यञ्च एवावशिष्यन्ते, नारकमनुष्यपञ्चेन्द्रिया हि स्वल्पत्वेन ज्योतिष्कदेवादिभ्योऽप्यधस्ताद् दूरेऽसख्येयभागवृत्तित्वेनाधीता इति तैर्गृहीतैरप्यत्र न किञ्चिद् वर्द्धते, तस्मात् पर्याप्तचतुरिन्द्रियेभ्योऽपि विशेषाधिकत्वभणनादिहापि पर्याप्तपञ्चेन्द्रियास्तिर्यञ्च एव परमार्थतो विवक्षिता इति, अत पर्याप्तानामपि पञ्चेन्द्रियतिरश्चा प्रज्ञापनाऽभिप्रायतो देवेभ्योऽसख्येयगुणताऽवगम्यते, तथा च सति देवप्रतरापहारकालात्तेषामपि तदपहारकाल पूर्ववदसख्येयगुणहीन एव युज्यते, नतु सख्येयगुणेन हीन इति तावद्वयमवगच्छाम , सुधीभि पुनर्यदि घटते तदाऽन्यथाऽप्यविरोधेन गमनीयमित्यल प्रसङ्गेन, तदेवमभिहित विशेषत पर्याप्तानामपि पञ्चेन्द्रियतिरश्चा प्रमाणम्, अथोत्तरार्द्धेनैतेषामपि मध्यान्निर्द्धार्य तिर्यग्योषिता प्रमाणमाह—'सखेज्जगुणेण तओ' इत्यादि, ततो देवसम्बन्धिन प्रतरापहारकालात् सख्यातगुणेन कालेन तिरश्चीना प्रतरस्यापहारो मन्तव्य , सवदति चेद महादण्डकेन, यतस्तत्र व्यन्तरादिदेवेभ्योऽधस्तात् सख्यातभागवृत्तित्वेन तिरश्च्योऽधीता , व्यन्तरादिदेवास्तु ताभ्य सख्यातगुणा पठिता इति, अतो बहुत्वादमी तिरश्चीप्रतरापहारकालात् सख्यातगुणहीनेनापि कालेन प्रागभिहितनीत्या प्रतरमपहरन्ति, तिरश्च्यो देवेभ्य सख्यातगुणहीनत्वात् स्वल्पा इति तदपहारकालात् सख्यातगुणेन कालेन प्रतरमपहरन्तीति युक्तियुक्तमेवेति, एतच्च सर्वं तिर्यग्गतौ मिथ्यादृशा प्रमाणमुक्त, सास्वादनमिश्राविरतदेशविरताना तु सामान्येन गतिचतुष्टयमगीकृत्यौघिक यत्प्रमाणमुक्त तदनुसारेण विभागतोऽत्राप्यभ्यूह्य किंचित् स्वयमेव बोद्धव्यम्, प्रमत्तादयस्तु तिर्यग्गतौ न सम्भवन्तीति प्रागेव निर्णीतमिति गाथार्थ ॥१५३॥

तदेवं तिर्यग्गतौ सामान्येन तिरश्चां प्रमाणमुक्तम्, ततः सामान्यतो विशेपतश्च पंचेन्द्रियतिरश्चां पृथिव्यादीनां तु प्रमाणं विशेषतो भणनीयमप्युल्लंध्य पंचेन्द्रियसामान्यान्मनुष्यगतौ मनुष्याणां तावत् प्रमाणमाह—

**संखेज्जा पज्जत्ता मणुयाऽपज्जत्तया सिया नत्थि । उक्कोसेण जइ भवे सेढीएँ असंखभागो उ ॥ १५४ ॥**

मनुष्यास्तावद् द्विविधाः-स्त्रीगर्भसंभूता गर्भजाः, मनुष्यवातपित्तादिजन्मानो विस्तरेण पूर्वाभिहितस्वरूपाः सम्मूर्च्छजाश्च, तत्र गर्भजाः पर्याप्ता अपर्याप्ताश्च भवन्ति, सम्मूर्च्छजास्त्वन्तर्मुहूर्त्तायुपोऽपर्याप्ता एव म्रियन्ते, अतस्ते पर्याप्ता न भवन्त्येवेत्यपि प्रागेवोक्तम्, तदिह पर्याप्तग्रहणेन गर्भजा एव पर्याप्ता मन्तव्याः, अपर्याप्तस्वीकारेण तु गर्भजा अपर्याप्ताः सम्मूर्च्छजाश्चापर्याप्ताः स्वीकृता बोद्धव्याः, तत्र चैवं सति ये गर्भजाः पर्याप्तास्तावत्ते ध्रुवराशित्वात् सर्वदैव संख्येया भवन्ति, ननु संख्यातं संख्यातभेदमेव भवति, तदिह कतमेन संख्यातेन संख्याता एते मन्तव्याः?, अत्रोच्यते, पष्ठवर्गे पञ्चमवर्गेण गुणिते यत् संख्यातं भवति तत्प्रमाणा एवामी समधिगन्तव्याः, अथ वर्ग इति किमुच्यते? किंस्वरूपश्चासौ पंचमः कथंभूतश्च पष्ठ इति?, अत्राभिधीयते, यत्र विवक्षितः कश्चिद्राशिस्तेनैव राशिना गुण्यते स तावद् वर्ग इत्युच्यते, तत्रैकस्य वर्ग एक एव भवति, अतो वृद्धिरहितत्वादेप वर्ग एव न गण्यते, द्वयोस्तु वर्गश्चत्वारो भवन्तीत्येप प्रथमो वर्गः ४, चतुर्णां तु वर्गः पोडशेति द्वितीयो वर्गः १६, पोडशानां तु वर्गो द्वे शते पट्पंचाशदधिके इति तृतीयो वर्गः २५६, अस्य तु राशेर्वर्गः पंचपष्टिः सहस्राणि पंच शतानि पट्त्रिंशदधिकानीति चतुर्थो वर्गः ६५५३६, अस्य च राशेर्वर्गः सार्द्धगाथया प्रोच्यते, तद्यथा—" चत्तारि य कोडिसया अउणत्तीसं च होंति कोडीओ । अउणावन्नं

लक्खा सत्ताहिं चेव य सहस्सा ॥ १ ॥ दो य सया छण्णउया पचम वग्गो इमो विणिद्दिट्ठो " अङ्कतोऽप्येष दर्श्यते ४२९४९६-७२९६, अस्यापि राशेर्गाथात्रयेण वर्ग प्रतिपाद्यते, तद्यथा—" लक्ख कोडाकोडी पच चउरासीई भवे सहस्साइ । चत्तारि य सत्तट्ठा हुति सया कोडिकोडीण ॥ १ ॥ चोयाल लक्खाइ कोडीण सत्त चेव य सहस्सा । तिन्नि य सया य सयरा कोडीण हुति नायव्वा ॥ २ ॥ पचाणउइ लक्खा एगावन्न भवे सहस्साइ । छस्सोलसोत्तरसया एसो छट्ठो हवइ वग्गो ॥ ३ ॥ " अङ्कतोऽपि दर्श्यते १८४४६७४४०७३७०९५५१६१६, तदय पष्ठवर्ग पूर्वोक्तेन पञ्चमवर्गेण गुण्यते, तथा च सति या सङ्ख्या भवति तस्या जघन्यतोऽपि पर्याप्तगर्भजमनुष्या वर्त्तन्ते, सा चेय सङ्ख्या–७९२२८१६२५१४२६४३३७५९३५४३९५०३३६, अय च राशि कोटीकोट्यादिप्रकारेण केनाप्यभिधातु न शक्यते, अत पर्यन्तादारभ्याङ्कसग्रहमात्र गाथाद्वयेनाभिधीयते, तद्यथा—छ तिन्नि २ सुन्न पचेव य नव य तिन्नि चत्तारि । पचेव तिन्नि नव पच सत्त तिण्णेव तिण्णेव ॥ १ ॥ चउ छद्दो चउ एक्को पण दो छक्केक्कगो य अट्ठेव । दो दो नव सत्तेव य अकट्ठाणा इगुणतीस ॥ २ ॥ तदेव यथोक्तैकोनत्रिंशदङ्कस्थानलक्षणेन सङ्ख्यातेन सङ्ख्याता जघन्यतोऽपि पर्याप्ता गर्भजमनुष्या भवन्तीति स्थित, ' अपज्जत्तया सिय नत्थि ' त्ति, ये तु मनुष्या गर्भजा अप्यपर्याप्तका सम्मूर्च्छजलक्षणाश्च येऽपर्याप्तकास्ते उभयेऽपि कदाचिद्भवन्ति स्यात्-कदाचित्तु न भवन्त्येव, जघन्यत समयस्योत्कृष्टतस्तु द्वादशमुहूर्त्ताना गर्भजमनुष्योत्पत्तिविरहकालस्यागमे प्रतिपादितत्वात्, सम्मूर्च्छजमनुष्योत्पादविरहकालस्यापि जघन्यत समयस्योत्कृष्टत श्चतुर्विंशतिमुहूर्त्ताना तत्रैवाभिहितत्वात्, पूर्वोपपन्नाना चान्तर्मुहूर्त्तायुष्कत्वेनैव तत्पर्यन्ते सर्वेषा निर्लेपनादिति, तस्माद् द्वयेऽप्यमी अध्रुवत्वात् कदाचिद्भवन्ति कदाचित्तु न भवन्ति, यदि पुनर्भवेयु तदा एतेऽपर्याप्ता पूर्वोक्ताश्च पर्याप्ताः सर्वेऽपि समुदिता मनुष्या

उत्कृष्टतः श्रेण्यसङ्ख्येयभागप्रमाणा भवन्ति, संवर्त्तितघनीकृतलोकस्यैकस्याः श्रेणेः-प्रदेशपंक्तेरसंख्येयतमे भागे यावन्तः प्रदेशास्तावत्प्रमाणाः सर्वेऽपि मनुष्या उत्कृष्टपदे भवन्तीत्यर्थ इति गाथार्थः ॥ १५३ ॥ तदेवमेकश्रेण्यसंख्येयतमभागप्रदेशराशिप्रमाणत्वेन उत्कृष्टतो निरूपितानपि समस्तमनुष्यान् प्रकारान्तरेण निरूपयितुमाह—

प्रकारान्तरेण मनुष्य मानं

**उक्कोसेणं मणुया सेढिं च हरंति रूवपक्खित्ता । अंगुलपढमयतियवग्गमूलसंवग्गपलिभागा ॥ १५४ ॥**

चकारः पक्षान्तरसूचकः, स चेत्थं योज्यते-न केवलं श्रेण्यसंख्येयभागप्रदेशराशिप्रमाणाः समस्तमनुष्याः, किन्तु श्रेणिं च-प्रदेशपंक्तितरूपां सर्वां तेऽपहरन्ति, कथंभूताः सन्त इत्याह—रूपस्य-एकमनुष्यलक्षणस्य उत्कृष्टपदप्राप्तेष्वपि तेष्वविद्यमानस्य बुद्धिविकल्पनया प्रक्षिप्त-प्रक्षेपो येषु ते रूपप्रक्षिप्ताः, असत्कल्पनया प्रक्षिप्तैकमनुष्यरूपाः सन्त इत्यर्थः, किं प्रत्येकमेकैकप्रदेशापहारेण ते श्रेणिमपहरन्ति ?, नेत्याह—'अंगुलपढमये' त्यादि, तस्याः श्रेणेरंगुलप्रमाणे क्षेत्रे प्रथमकं वर्गमूलं गृह्यते, ततोऽपि पूर्वोक्तयुक्त्या द्वितीयं पुनस्तृतीयमिति, तत्रांगुलप्रमाणश्रेणिक्षेत्रस्य प्रथमकं यद्वर्गमूलं तस्य 'तियवग्गमूल' त्ति तृतीयवर्गमूलेन यः संवर्गो-गुणनं तेन हेतुभूतेन यः प्रतिनियतो भागः-श्रेणिखण्डरूपस्तस्मात्-तमाश्रित्य ते सर्वां श्रेणिमपहरन्तीत्यर्थः, इदमुक्तं भवति-अंगुलप्रथमवर्गमूलप्रदेशराशौ तृतीयवर्गमूलप्रदेशराशिना गुणिते यः प्रदेशराशिर्भवति तत्प्रमाणं क्षेत्रखण्डं यद्येकैको मनुष्यः श्रेणेर्मध्यादपहरति तदोत्कृष्टपदवर्तिभिः सर्वैरेव मनुष्यैर्युगपदेव सैका लोकप्रदेशश्रेणिः सर्वाऽप्यपह्रियते यद्येकं मनुष्यरूपं मनुष्यराशौ क्षिप्यते, तच्च नास्ति, उत्कृष्टतोऽपि तेनैकरूपेणोनस्वरूपाणामेव मनुष्याणां परमगुरुभिर्दृष्टत्वाद्, एवं च सति

यथोक्तप्रमाणानि क्षेत्रखण्डान्येकस्या लोकप्रदेशश्रेणौ यावन्ति भवन्ति तावन्तो रूपे प्रक्षिप्ते उत्कृष्टतो मनुष्या सर्वेऽपि भवन्तीति सामर्थ्यादुक्त भवति, इत्थ च पूर्वगाथोक्त श्रेण्यसख्येयभागवर्त्तित्व न विरुध्यत एव, एकैको हि मनुष्य स्वापहृतयथोक्तक्षेत्रखण्डप्रदेशानामसख्येयभागे वर्त्तते, अतः समस्तप्रस्तुतक्षेत्रखण्डात्मिकाया सर्वस्या श्रेणे सर्वेऽपि मनुष्या असख्येयभागे वर्त्तन्त इति प्रतीतमेवेत्यल विस्तरेण, तदेव जघन्यत उत्कृष्टतश्चोक्त मनुष्यपचेन्द्रियप्रमाण, इह च मनुष्यगतौ मिथ्यादृष्ट्यादयोऽयोगिपर्यन्ताश्चतुर्दशापि जीवसमासा सम्भवन्ति, तत्र सम्मूर्च्छजमनुष्यास्तावत् सर्वेऽपि मिथ्यादृष्टयो, गर्भजा अपि बहवो मिथ्यादृष्टय एव, शेषेषु तु तेषु सास्वादनाद्योऽयोगिपर्यन्ता ओघोक्तप्रमाणाद्यनुसारेण स्वयमेव परिभावनीया इति गाथार्थ. ॥ १५४ ॥ साम्प्रत पचेन्द्रियप्रक्रमत एव देवगतौ भवनपतिव्यन्तरज्योतिष्काणामेकगाथयैव प्रमाणमभिधित्सुराह—

सेढीओ असखेज्जा भवणे वणजोइसाण पयरस्स । सखेज्जजोयणगुलदोसयछप्पन्नपलिभागो ॥ १५५ ॥

' सेढीओ असखेज्जा भवणे ' त्ति विभक्तिव्यत्ययादेकदेशेन च समुदायस्य गम्यमानत्वाद्भवनपतयो देवा प्रतरासख्येयभागवर्तिनीषु श्रेणिषु यावन्त प्रदेशास्तत्प्रमाणा भवन्ति, तासां च श्रेणीना विस्तरमान पुरस्ताद् वक्ष्यते, ' वण जोइसाण '- त्ति, व्यन्तराणा ज्योतिष्काणा च यथासख्य सख्येययोजनप्रमाणा एकप्रादेशिकी पक्ति षट्पचाशदधिकागुलशतद्वयप्रमाणा चैकप्रादेशिकी पक्ति प्रतरस्य पूर्वोक्तस्वरूपस्य प्रतिभागो भागहारो द्रष्टव्य, इदमुक्त भवति—सख्येययोजनप्रमाणायामेकप्रादेशिक्या पक्तौ यावन्तो नभःप्रदेशा भवन्ति तै. सव प्रतरप्रदेशराशेर्भागो ह्रियते, अमुना च भागहारेण यावत्प्रमाण प्रतरक्षे-

त्रखण्डं लभ्यते तत्र ये नभःप्रदेशास्तावत्प्रमाणाः सर्वेऽपि व्यन्तरा देवा भवन्तीति, अथवा यथोक्तभागहारप्रमाणं प्रतरक्षेत्रखण्डं यद्येकैको व्यन्तरदेवोऽपहरति तदा सर्वोऽपि प्रतरस्तैर्व्यन्तरदेवैरेकहेलयैवापह्रियते इत्येक एवार्थः । तथा षट्पञ्चाशदधिकाङ्गुलशतद्वयप्रमाणायामेकप्रादेशिक्यां पङ्क्तौ यावन्तो नभःप्रदेशा भवन्ति तैः सर्वैः प्रतरप्रदेशराशेर्भागो ह्रियते, अनेन च भागहारेण यावत्प्रमाणं प्रतरक्षेत्रखण्डं लभ्यते तत्र ये नभःप्रदेशास्तावत्प्रमाणाः सर्वेऽपि ज्योतिष्कदेवा भवन्ति, अथवा यथोक्तभागहारप्रमाणं प्रतरक्षेत्रखण्डं यद्येकैको ज्योतिष्कदेवोऽपहरति तदा सर्वोऽपि प्रतरस्तैर्ज्योतिष्कदेवैर्युगपदेवापह्रियत इत्यत्राप्येक एवार्थः, ज्योतिष्कदेवाश्च व्यन्तरेभ्यः सङ्ख्यातगुणा महादण्डके पठिता इति इह व्यन्तरेभ्यः सङ्ख्येयगुणहीनः प्रतरप्रतिभागस्तेषामुक्त इति गाथार्थः ॥ १५५ ॥ अथ देवगतावेव वैमानिकानां प्रमाणमाह–

**सक्कीसाणे सेढीअसंख उवरिं असंखभागो उ । आणयपाणयमाई पल्लस्स असंखभागो उ ॥ १५६ ॥**

'शक्रः' सौधर्मेन्द्रस्तदुपलक्षितश्चेह सौधर्मदेवलोक एव गृह्यते, ततश्च सौधर्मे कल्पे सर्वेऽपि देवाः पूर्वोक्तस्वरूपस्य घनीकृतलोकप्रतरस्यासङ्ख्येयाः श्रेणयो भवन्ति, प्रतरासङ्ख्येयभागवर्तिनीष्वसङ्ख्येयासु श्रेणिषु यावन्तः क्षेत्रप्रदेशास्तत्प्रमाणाः सौधर्मदेवलोके सर्वेऽपि देवा भवन्तीत्यर्थः, ईशानदेवलोकेऽपि देवानां प्रमाणमित्थमेव प्रतरासङ्ख्येयभागवर्त्यसङ्ख्येयश्रेणिप्रदेशराशितुल्यत्वेन वक्तव्यम्, केवलं सौधर्मदेवेभ्य एते सङ्ख्येयगुणहीनाः, एतेभ्यस्तु सौधर्मदेवाः सङ्ख्येयगुणा इति द्रष्टव्यम्, इत्थमेव महादण्डके पठितत्वादिति । 'उवरिं असंखभागो उ' त्ति सौधर्मेशानाभ्यामुपरिष्टात् सनत्कुमारमाहेन्द्रब्रह्मलोकलान्तकमहाशुक्रसहस्रार-

लक्षणेषु पञ्चसु देवलोकेषु घनसमचतुरस्रीकृतलोकस्यैकस्या प्रदेशश्रेणेरसङ्ख्येयतमे भागे यावन्त प्रदेशास्तत्प्रमाणा, प्रत्येक देवा सर्वदैव प्राप्यन्त इत्यर्थः, परस्परमल्पबहुत्व महादण्डकोक्तमवगन्तव्यम् । आनतप्राणतारणाच्युतेदवलोकेषु अधस्तनमध्यमोपरितनग्रैवेयकेषु अनुत्तरविमानेषु च प्रत्येक क्षेत्रपल्योपमासङ्ख्येयभागे यावन्तः प्रदेशास्तावन्तो देवा' सर्वदैव लभ्यन्ते, परस्पराल्पबहुत्व तु महादण्डकोक्तमेवेति गाथार्थ ॥ १५६ ॥ अत्रान्तरे आह कश्चित्-ननु भवनपतयो रत्नप्रभापृथ्वीनारका सौधर्मेशानदेवाश्च प्रतरासङ्ख्येयभागवर्त्यसङ्ख्येयश्रेणिप्रदेशराशिप्रमाणात्मकत्वेन सामान्यतः प्रागुक्ता भवद्भि , पर ताः प्रतरासङ्ख्येयभागवर्त्तिन्योऽसङ्ख्याता श्रेणयोऽसङ्ख्येययोजनकोटिकोटिगता अपि भवन्ति, अत एतद्विस्तरा अपि तास्तत्र प्रतीतव्या उतान्यथेत्याशक्य भवनपत्यादिश्रेणीना प्रतिनियत विस्तरसूचिमान दर्शयितुमाह—

सेढीसूइपमाण भवणे घम्मे तहेव सोहम्मे । अगुलपढम बियतियसमणतरवग्गमूलगुण ॥ १५७ ॥

ऊर्ध्वगामिन्यस्तावत् प्रतरे किल पूर्वोक्ता असङ्ख्येया' श्रेणयो विवक्ष्यन्ते, तिर्यग्विस्तारिणी च तासा सूचिरिहोच्यते, ततश्च पूर्वोक्ताना श्रेणीना सप्तरज्जुदीर्घाणा ऊर्ध्वगामिनीनां प्रदेशपङ्क्तीना तिर्यग्विस्ताररूपा सूचि श्रेणीसूचिस्तस्या प्रमाण श्रेणीसूचिप्रमाण, तद्भवति कियदित्याह—'अगुले' त्यादि, केषां पुनरिद श्रेणीसूचिप्रमाण भवतीत्याह— 'भवणे' त्यादि, यथासङ्ख्य भवनपतीनां ' घर्मा ' रत्नप्रभापृथ्वी तन्नारकाणा सौधर्मकल्पदेवानां चेत्यक्षरयोजना, भावार्थस्तूच्यते—समनन्तरवर्गमूलगुणित तावदिह सर्वत्र योज्यते, ततोऽङ्गुलप्रथमवर्गमूललक्षणेन समनन्तरवर्गमूलेन गुणित भवनपतीना श्रेणिविस्तररूपा सूचिर्भवति, तदपि

प्रथमवर्गमूलं द्वितीयवर्गमूलस्वरूपेण समनन्तरवर्गमूलेन गुणितं रत्नप्रभानारकाणां श्रेणिविस्तरात्मिका सूचिर्भवति, इदमपि द्वितीयवर्गमूलं तृतीयवर्गमूलात्मकेन समनन्तरवर्गमूलेन गुणितं सौधर्मदेवानां श्रेणिविस्तरलक्षणा सूचिर्भवति, इदमुक्तं भवति-प्रतरस्यांगुलप्रमाणं यत् क्षेत्रं तत् सद्भावतस्तावदसंख्याताः श्रेणयो भवन्ति, याश्च विनेयजनस्य सुखावगमार्थं षट्पञ्चाशदधिकशतद्वयप्रमाणाः परिकल्प्यन्ते, अस्य च राशेः प्रथमं द्वितीयं तृतीयं च वर्गमूलं गृह्यते, एतान्यपि च प्रत्येकमसंख्येयश्रेण्यात्मकान्येव, तथापि पूर्वोक्तहेतोरेव प्रथमे वर्गमूले षोडश श्रेणयो द्वितीये चतस्रः तृतीये तु द्वे परिकल्प्यन्ते, एवं च सति सद्भावतोऽसंख्येयश्रेण्यात्मकं कल्पनया तु षट्पञ्चाशदधिकश्रेणिशतद्वयात्मकमंगुलप्रमाणं प्रतरक्षेत्रं सद्भावतोऽसंख्येयश्रेण्यात्मकेन कल्पनया तु षोडशश्रेणिस्वरूपेण प्रथमवर्गमूललक्षणेन समनन्तरवर्गमूलेन गुणितं सद्भावतोऽसंख्येयश्रेणिविस्तरात्मिका कल्पनया तु षण्णवत्यधिकश्रेणिसहस्रचतुष्टयविस्तारस्वरूपा भवनपतीनां विष्कम्भसूचिर्भवति, अङ्कतोऽपि दर्श्यते यथा ४०९६, एतावतीषु प्रतरश्रेणिषु यावन्त आकाशप्रदेशास्तावन्तो भवनपतयो भवन्तीति भावार्थः, एवमुत्तरत्रापि भावार्थो वाच्य इति, यत्तु प्रथमं वर्गमूलं तद् द्वितीयवर्गमूललक्षणेन समनन्तरवर्गमूलेन गुणितं रत्नप्रभानारकाणां विष्कम्भसूचिर्भवति, इयमपि सद्भावतोऽसंख्येयश्रेण्यात्मिका कल्पनया तु चतुःषष्टिश्रेण्यात्मिका भवति ६४, यत् पुनर्द्वितीयवर्गमूलं तत्तृतीयवर्गमूललक्षणेन समनन्तरवर्गमूलेन गुणितं सौधर्मदेवानां विष्कम्भसूचिर्भवति, इयमपि सद्भावतोऽसंख्येयश्रेण्यात्मिका कल्पनया त्वष्टश्रेण्यात्मिका सिद्धा भवतीत्येष तावत् प्रस्तुतग्रन्थगाथाभिप्रायः। अयं च प्रज्ञापनामहादण्डकानुयोगद्वारादिभिः सह विसंवदति, तथाहि—प्रज्ञापनामहादण्डके भवनपतिभ्यो रत्नप्रभानारका असंख्यातगुणाः पठिताः, प्रस्तुतग्रन्थगाथायां तु रत्नप्रभाविष्कम्भसूचेः सकाशाद्भवनपतिसूचेरसंख्यातगुणेन बृहत्त्वाभि-

घानाद्रत्नप्रभानारकेभ्यो भवनपतय एवासंख्यातगुणा' आप्ता इति व्यक्त मेव दृश्य, अनुयोगद्वारेष्वपि रत्नप्रभानारकसंख्याविचारे—"तासि ण सेढीण विक्खम्भसूई अंगुलपढमवग्गमूलं बीयवग्गमूलपडुप्पन्नं" प्रत्युत्पन्न गुणितमित्यर्थः, इति वचनाद् भवनपतिसङ्ख्याविचारे च 'तासि णं सेढीणं विक्खंभसूई अंगुलपढमवग्गमूलस्स असंखज्जइभागो' इति वचनाद्रत्नप्रभानारकविष्कम्भसूचेर्भवनपतिविष्कम्भसूचिरसङ्ख्याततमे भागे व्यक्तमेवायातेति प्रतीता प्रस्तुतग्रन्थेन सह विसंवादता, तस्मादिह 'घम्मे भवणे तहेव सोहम्मे' इति व्यत्ययपाठे कृते भवति कोऽपि कियानपि संवाद, परं सूत्रप्रतिषु क्वापि नैव दृश्यत इत्यलं विस्तरेणेति । अत्र ऐशानदेवानां विष्कम्भसूचिर्नाभिहिता, किन्त्वेतेभ्य सौधर्मदेवा महादण्डके संख्यातगुणा पठिता, तदनुसारेण विष्कम्भसूचिरपि स्वयमभ्यूह्येति गाथार्थ ॥१५७॥ अथ शर्कराप्रभादिपृथ्वीनारकाणां सनत्कुमारादिदेवानां च विशेषिततरं प्रमाणमभिधित्सुराह—

बारस दस अट्ठेव य मूलाइ छत्ति दुन्नि नरएसु । एक्कारस नव सत्त य पणग चउक्क च देवेसु ॥ १५८ ॥

एतद्गाथाव्याख्यायामर्वाचीनटीकाकार प्राह, तद्यथा- मूलटीकायां न व्याख्याता, अस्माकं स्वयमर्थ प्रतिभासते—घनीकृतलोकस्यैकस्यां प्रदेशश्रेण्यामसंख्येयानि तावद्वर्गमूलान्युत्तिष्ठन्ति, तत्र द्वादशे श्रेणिवर्गमूले यावन्तो नभःप्रदेशास्तावन्त' सप्तमपृथिव्या नारका प्राप्यन्ते, षष्ठपृथिव्या तु दशमवर्गमूलप्रदेशप्रमाणा पञ्चमपृथिव्या त्वष्टमवर्गमूलप्रदेशप्रमाणाः चतुर्थपृथिव्या तु षष्ठवर्गमूलप्रदेशप्रमाणा, तृतीयपृथिव्या तु तृतीयवर्गमूलप्रदेशप्रमाणा द्वितीयपृथिव्या पुन श्रेणिद्वितीयवर्गमूलप्रदेशराशिपरिमाणा नारका लभ्यन्त इति, प्रथमपृथ्वीनारकाणां तु 'सेढीअसंखइपमाण भवणे घम्मे' इत्यादौ विशेषिततरमपि

प्रमाणमनन्तरमभिहितमिति तदिह नोक्तमिति । अथ वैमानिकदेवानां विशेषिततरं प्रमाणमभिधीयते, तत्र सौधर्मेशानदेवानामनन्तरगाथायामपि तदुक्तम्, अतः सनत्कुमारादिदेवानां गाथोत्तरार्द्धपर्यन्तात् पश्चानुपूर्व्या तदभिधीयते, तद्यथा- 'चउक्कं च देवेसु' त्ति श्रेणेश्चतुर्थं यद्वर्गमूलं तत्प्रदेशराशिप्रमाणा वैमानिकदेवेषु मध्ये सनत्कुमारमाहेन्द्रयोर्देवाः प्राप्यन्ते, ब्रह्मलोके तु पञ्चमवर्गमूलप्रदेशराशिप्रमाणा लान्तके तु सप्तमवर्गमूलप्रदेशराशिप्रमाणाः महाशुक्रे तु नवमवर्गमूलप्रदेशराशिप्रमाणाः सहस्रारे पुनर्देवा एकादशश्रेणिवर्गमूले यावन्तः प्रदेशास्तावन्तो लभ्यन्त इति, आनतप्राणतादिषु तु " आणयपाणयमाई पल्लस्स असंखभागो उ " इत्यनेन विशेषिततरमपि प्रमाणमुक्तमिति नेहाभिहितमिति तावत् प्रस्तुतगाथाव्याख्यानमर्वाचीनटीकाकारकृतं दर्शितम्, अस्माभिस्त्वेवंविधस्य निर्द्धारितस्यार्थस्य संवाद आगमान्तरे क्वचिदपि नोपलब्धः, प्रज्ञापनामहादण्डकेन च सहेत्थं व्यभिचारोऽप्यापतति, तत्त्वं तु केवलिनो बहुश्रुता वा विदन्तीति गाथार्थः ॥ १५८ ॥ तदेवमुक्तं चतुर्गतिकानामपि पञ्चेन्द्रियाणां प्रमाणम्, अथ तिर्यग्गतावनुक्तपूर्वाणां बादरपर्याप्तकपृथिव्यप्कायिकानां बादरपर्याप्तकप्रत्येकवनस्पतीनां च प्रमाणमभिधित्सुराह—

**बायरपुढवी आऊ पत्तेयवणस्सई य पज्जत्ता । ते य पयरमवहरिज्जंसु अंगुलासंखभागेणं ॥ १५९ ॥**

बादरपर्याप्तकपृथिव्यप्कायिकाः प्रत्येकबादरपर्याप्तवनस्पतिकायिकाश्चेत्येते त्रयोऽपि राशयः प्रत्येकं प्रतरमपहरेयुः, केन प्रकारेणेत्याह— अंगुलासङ्ख्येयभागेनेति, इदमुक्तं भवति— बादरपर्याप्तपृथ्वीकायिकाः सर्वेऽपि समुदिताः किलैकस्मिन् समये प्रत्येकमेकैकं प्रतरप्रदेशमपहृत्यासद्भावकल्पनयाऽन्यत्र व्यवस्थापयन्ति, पुनर्द्वितीयेऽपि समये प्रत्येकमेकैकं प्रतरप्रदेशमपहृत्याऽन्यत्र

बादर पृथ्व्यप्वनस्पतिमानं

र्व्यवस्थापयन्त्येव तृतीयेऽपि समये चतुर्थेऽपि यावदङ्गुलासङ्ख्येयभागे रूपे नभःप्रदेशश्रेणिखण्डे यावन्तः प्रदेशास्तावत्सङ्ख्यैः समयैस्ते सर्वमपि प्रतरमपहरन्ति, अथवाऽङ्गुलासङ्ख्येयभागस्वरूपे नभःप्रदेशश्रेणिखण्डे यावन्तः प्रदेशास्तैः सर्वस्यापि प्रतरप्रदेशराशेर्भागो ह्रियते, एतद्भागहारलब्धे च प्रतरप्रदेशखण्डे यावन्तः प्रदेशास्तावन्तः सर्वेऽपि बादरपर्याप्तपृथ्वीकायिका भवन्ति, यदिवा बादरपर्याप्तपृथ्वीकायिकानां सर्वेषामपि प्रत्येकं यद्यङ्गुलासङ्ख्येयभागरूपं प्रतरप्रदेशखण्डं समर्प्यते तदा युगपदेकेनैव समयेन ते सर्वमपि प्रतरमपहरन्तीति तिसृणामपि प्ररूपणानामेक एव तात्पर्यार्थः, यथा चैषां बादरपर्याप्तपृथ्वीकायिकानां प्रमाणभावना कृता तथा बादरपर्याप्ताप्कायिकानां बादरपर्याप्तप्रत्येकवनस्पतिकायिकानां च कर्त्तव्या, समानप्रमाणतया गाथायां निर्दिष्टत्वात्, इत्थं च समानप्रमाणनिर्देशेऽप्यङ्गुलासङ्ख्येयभागस्यासङ्ख्यातभेदत्वात् स्वस्थाने परस्परमीषामल्पबहुत्वं द्रष्टव्यम्, तद्यथा-बादरपर्याप्तप्रत्येकवनस्पतिभ्यो बादरपर्याप्तपृथिवीकायिका असङ्ख्यातगुणास्तेभ्योऽपि बादरपर्याप्ताप्कायिका असङ्ख्यातगुणा इति गाथार्थः ॥ १५९ ॥ अथ बादरपर्याप्तानां तेजःकायिकवायुकायिकानां प्रमाणमभिधित्सुराह—

पज्जत्तबायरानल असंखया हुंति आवलियवग्गा । पज्जत्तवायुकाया भागो लोगस्स संखेज्जो ॥ १६० ॥

बादरपर्याप्ततेजःकायिका भवन्ति, कियन्त इत्याह—असङ्ख्येया आवलिकावर्गाः, आवलिकायां यावन्तः समयास्तेषां वर्गः क्रियते, तस्या तेषु चासङ्ख्यातेषु वर्गेषु यावन्तः समयास्तत्प्रमाणा बादरपर्याप्ततेजःकायिका भवन्तीत्यर्थः, बादरपर्याप्तवायवः पुनर्लोकस्य सङ्ख्यातभागे भवन्ति, सङ्ख्याततमे लोकाकाशस्य भागे यावन्तो नभःप्रदेशास्तत्प्रमाणाः सर्वेऽपि बादरपर्याप्ता वायवो ॥१५७॥

भवन्तीत्यर्थः, इति गाथार्थः ॥ १६० ॥ आह-नन्वसंख्यातैरावलिकावर्गैरावलिकायास्तावद् घनो भवति, हीनोऽधिकश्च वाऽसौ भवति, अतोऽसंख्याता आवलिकावर्गा इत्येतावन्मात्रेण बादरपर्याप्तानलानां निश्चितं प्रमाणं न ज्ञायते, लोकस्यापि संख्याततमे भागे कियन्तोऽपि प्रतरा भवन्तीति न विद्म इत्याशङ्क्य विशेपिततरममीषां प्रमाणमाह—

आवलिवग्गाऽसंखा घणस्स अंतो उ बायरा तेऊ। पज्जत्तबायराणिल हवन्ति पयरा असंखेज्जा ॥ १६१ ॥

ये बादरपर्याप्ततेजःकायिकाः प्रागसंख्येया आवलिकावर्गा उक्तास्ते आवलिकावर्गा घनस्यान्तः-मध्ये द्रष्टव्याः,इदमुक्तं भवति-असंख्येया आवलिकावर्गास्तावन्त एव ग्राह्या यावद्भिरावलिकायाः संबन्धी घनो न पूर्यते, अस्य चार्थस्य विनेयजनानुग्रहार्थमसत्कल्पनया प्रतीतिरुत्पाद्यते, तद्यथा- असंख्येयसमयात्मिकायामप्यावलिकायां किल दश समयाः परिकल्प्यन्ते, तद्वर्गे च शतं भवति, एते चासंख्याता वर्गाः कल्पनया किल दशापि भवन्ति, परमेतावन्तो न कल्प्यन्ते, एतावद्भिरेतैरावलिकासम्बन्धिनो घनस्य सम्पूर्णस्य सम्भवात्,तथाहि-आवलिकायां दश समयाः परिकल्पिताः, तेषां च घनं सहस्रं भवति, दशभिरपि च तद्वर्गैः सहस्रं सम्पद्यत इति तद्ग्रहणे घनस्य सम्पूर्णता जायते, तस्मादष्टौ नव वा आवलिकावर्गा असंख्येयत्वेन कल्प्यन्ते, तथा च सति कल्पनया अष्टशतप्रमाणा नवशतप्रमाणा वा सद्भावतस्त्वसंख्येया बादरपर्याप्ततेजःकायिकाः सिद्धा भवन्ति, ततश्चावलिकाघनस्य मध्यवृत्तिता भवति, एवं च सत्येक आवलिकावर्गः किञ्चिन्न्यूनावलिकासमयराशिना गुणिते बादरपर्याप्ततेजःकायिका भवन्तीत्युक्तं भवति। पर्याप्तबादरवायवः पुनरसंख्येयाः प्रतरा भवन्ति, इदमुक्तं भवति-प्रागुक्ते लोकस्य संख्येयभागे असंख्येयाः प्रतरा बोद्धव्याः, ततस्तेषु लोकस्य

संख्येयभागवर्तिष्वसंख्येयप्रतरेषु यावन्तः प्रदेशा भवन्ति तावत्संख्या बादरपर्याप्तवायवो भवन्तीति । एतेषां चोक्तप्रमाणानां बादरपर्याप्तानां पृथिव्युदकतेजोवायुप्रत्येकवनस्पतीनां परस्परमल्पबहुत्वमित्थं भावनीयं-सर्वस्तोकाः बादरपर्याप्ततेजःकायिकाः प्रत्येकवनस्पतिकायिका असंख्यातगुणाः पृथ्वीकायिका असंख्यातगुणाः अप्कायिका असंख्यातगुणाः वायवोऽसंख्यातगुणा इति, यद्येवं स्तोकत्वाद् अग्निकायिकानामेव कस्मात् प्रथमं प्रमाणमिह नोक्तमिति न प्रेर्यं, विचित्रत्वात् सूत्रकारप्रवृत्तेरिति गाथार्थः ॥ १६१ ॥ तदेवं बादराणां पर्याप्तपृथ्व्युदकतेजोवायुप्रत्येकवनस्पतिलक्षणानां पञ्चानामप्येकेन्द्रियाणां प्रमाणमुक्तम्, अथैतेषामेवापर्याप्तानां सम्बन्धी एको राशिरनभिहितप्रमाणोऽवशिष्यते, द्वितीयस्तु सूक्ष्माणां पर्याप्तानां पृथिव्युदकतेजोवायूनां राशिः तृतीयस्त्वमीषामेवापर्याप्तानां राशिरवशिष्यते, एते च त्रयोऽपि राशयः प्रत्येकशरीरिणः, साधारणानां तु वनस्पतीनां सूक्ष्माणां बादराणां पर्याप्तानामपर्याप्तानां च सम्बन्धिनश्चत्वारोऽपि राशयोऽनुक्तप्रमाणा अवशिष्यन्त इत्यमीषां सप्तानामपि राशीनां प्रमाणमभिधित्सुराह-

**सेसा तिण्णिवि रासी वीसुं लोया भवे असंखेज्जा । साहारणा उ चउसुवि वीसुं लोया भवेऽणंता ॥ १६२ ॥**

प्रत्येकशरीरिणामेकेन्द्रियाणां तावच्चत्वारो राशयः सम्भवन्ति, तद्यथा-बादराः पर्याप्ता अपर्याप्ताश्च, सूक्ष्माः पर्याप्ता अपर्याप्ताश्च, तत्र बादरपर्याप्तलक्षणस्यैकस्य राशेः प्रमाणमुक्तम्, उक्तशेषास्तु त्रयोऽपि राशयो विष्वक् पृथगसंख्येया लोका भवन्ति, असंख्येयेषु लोकाकाशेषु यावन्तः प्रदेशास्तत्प्रमाण एकैको राशिर्भवतीत्यर्थः, इत्थं समाननिर्देशेऽपि त्रयाणामप्यमीषां राशीनां

स्वस्थानेऽल्पबहुत्वमित्थं भावनीयम्, प्रत्येकशरीरबादरापर्याप्तैकेन्द्रियेभ्यः प्रत्येकशरीरिणः सूक्ष्मापर्याप्तका असंख्येयगुणाः तेभ्योऽपि सूक्ष्मपर्याप्तकाः संख्येयगुणा इति, साधारणशरीरास्तु वनस्पत्येकेन्द्रियाः बादरपर्याप्तापर्याप्तसूक्ष्मपर्याप्तापर्याप्तलक्षणेषु चतुर्ष्वपि राशिषु विष्वक्-पृथगनन्ता लोका भवन्ति, अनन्तेषु लोकाकाशेषु यावन्तः प्रदेशास्तत्प्रमाण एकैको राशिर्भवतीत्यर्थः, अत्रापीत्थं तुल्यभणनेऽपि चतुर्णामप्यमीषां राशीनां स्वस्थाने परस्परमल्पबहुत्वमित्थं चिन्तनीयम्-साधारणशरीरबादरपर्याप्तैकेन्द्रियेभ्यः साधारणशरीरिणो बादराऽपर्याप्तका असंख्यातगुणाः, सूक्ष्मा अपर्याप्तका संख्यातगुणाः, सूक्ष्मपर्याप्तकाः संख्यातगुणाः, समस्तानामपि च प्रस्तुतराशीनामल्पबहुत्वमित्थं वक्तव्यम्-सर्वस्तोकाः प्रत्येकशरीरिणो बादराऽपर्याप्तैकेन्द्रियाः १, तेभ्यः सूक्ष्मापर्याप्तका असंख्येयगुणाः २, इतोऽपि सूक्ष्मपर्याप्तकाः संख्यातगुणाः ३, एतेभ्योऽपि साधारणशरीरिणो बादरपर्याप्तैकेन्द्रिया अनन्तगुणाः ४, अतोऽपि बादरपर्याप्तका असंख्यातगुणाः ५, एतेभ्योऽपि सूक्ष्मा अपर्याप्तका असंख्यातगुणाः ६, अमीभ्योऽपि सूक्ष्माः पर्याप्तकाः संख्यातगुणाः ७, इति गाथार्थः ॥ १६२ ॥ अथ बादरपर्याप्तकवायवः केचिदुत्तरवैक्रियशरीरिणोऽपि सम्भवन्ति, अतस्तत्परिमाणमाह–

वैक्रियवायुमानं द्वीन्द्रियादिमानं

**बायरवाउ समग्गा भणिया अणुसमयमुत्तरसरीरा । पल्लासंखियभागेणऽवहीरंतित्ति सव्वेवि ॥ १६३ ॥**

बादरा इत्युपलक्षणं पर्याप्ता इत्यपि विशेषणं द्रष्टव्यम्, अपर्याप्तानामुत्तरवैक्रियकरणस्यासम्भवात्,ततश्च बादराः पर्याप्ताः समग्रा अपि ये वायवः पूर्वमुक्तास्तेषु मध्ये केचिदुत्तरवैक्रियशरीरवन्तोऽनुसमयम्-अनवरतं प्राप्यन्त इति सोपस्कारं व्याख्येयम्, कियत्-

॥१६०॥

सख्या' पुनस्ते बादरपर्याप्तकोत्तरवैक्रियशरीरा' वायव प्राप्यन्त इत्याह- पल्योपमासख्येयभागेनापहियन्ते सर्वेऽपीति, प्रतिसमयमेकैकप्रदेशापहारे क्रियमाणे यावता कालेन क्षेत्रपल्योपमासख्येयभागो निष्ठां याति तावता कालेन वैक्रियशरीरवन्तो वायुजीवा अपि प्रतिसमयमेकैकापहारे क्रियमाणे सर्वेऽपि निष्ठां यान्तीत्यर्थ , क्षेत्रपल्योपमासख्येयभागे यावन्त आकाशप्रदेशास्तावन्तो वैक्रियशरीरिणो बादरपर्याप्तवायव. सर्वेऽपि भवन्तीति तात्पर्यम्, अन्ये तु व्याख्यानयन्ति–बादरपर्याप्तवायव सर्वेऽप्यनुसमयमुत्तरवैक्रियशरीरिणो लभ्यन्त इति, तच्चायुक्तम्, बादरपर्याप्तवायूना समग्राणामपि लोकसख्येयभागवर्त्तित्वेनैव प्राग् निर्णीतत्वादत्र क्षेत्रपल्योपमासख्येयभागवृत्तित्वानुपपत्ते', समग्रबादरपर्याप्तवायूनां वैक्रियशरीरस्यागमे निषिद्धत्वाच्चेति गाथार्थ' ॥ १६३ ॥ अथ पर्याप्तापर्याप्तभेदानां द्वित्रिचतु पञ्चेन्द्रियाणा प्रमाणमाह–

बेइंदियाइया पुण पयर पज्जत्तया अपज्जत्ता । सखेज्जा सखेज्जेणऽङ्गुलभागेणऽवहरेज्जा ॥ १६४ ॥

'द्वीन्द्रियादय ' इति आदिशब्दात् त्रिचतु पञ्चेन्द्रियपरिग्रह , ततश्च पर्याप्तापर्याप्तस्वरूपा द्वित्रिचतु'पञ्चेन्द्रिया पुन प्रत्येक प्रतरमपहरन्ति, कियता प्रतिभागेनेत्याह- यथासख्य पर्याप्तका अङ्गुलसख्येयभागेन, अपर्याप्तकास्त्वङ्गुलासख्येयभागेनेति, इदमुक्तं भवति अङ्गुलश्रेणीप्रदेशाना सख्येयभागेन घनीकृतलोकप्रतरस्य भागो ह्रियते, तेन च भागहारेण यावत् प्रतरक्षेत्रखण्ड लभ्यते तत्र यावन्त प्रदेशास्तावन्त पर्याप्तद्वीन्द्रिया समुदिता भवन्ति, अथवा सर्वेऽपि पर्याप्तद्वीन्द्रिया प्रथमसमये प्रत्येकमेकैक प्रतरप्रदेशमपहरन्ति, एव द्वितीयसमये सर्वेऽपि प्रत्येकमेकैक प्रतरप्रदेशमपहरन्ति एव तृतीयसमयेऽपि चतुर्थे-

समयेऽपीति, एवमङ्गुलश्रेणीप्रदेशानां संख्येयभागे यावन्तः प्रदेशास्तावद्भिः समयैः सर्वमपि प्रतरं पर्याप्तकद्वीन्द्रिया अपहरन्ति, यदिवाऽङ्गुलश्रेणिप्रदेशानां संख्येयभागरूपं खण्डं यद्येकैकस्य समर्प्यते तदा सर्वेऽपि पर्याप्ता द्वीन्द्रिया युगपदेकेनैव समयेन सर्वमपि प्रतरमपहरन्तीति पूर्ववदत्राप्येकार्थे तिस्रो भावनिकाः, एवमपर्याप्तकद्वीन्द्रियेष्वपि निरवशेषं वाच्यम्, केवलमङ्गुलश्रेणीप्रदेशानां संख्येयभागस्थानेऽसंख्येयभागलक्षणः प्रतिभागो वाच्यः, पर्याप्तेभ्योऽपर्याप्तद्वीन्द्रियाणामसंख्यातगुणत्वात् पूर्वोक्तात् सूक्ष्मेणैव प्रतिभागेनैतत्प्ररूपणोपपत्तेः, यथा च पर्याप्तापर्याप्तानां द्वीन्द्रियाणां प्रमाणं भावितमेवमुभयस्वरूपाणां त्रिचतुःपञ्चेन्द्रियाणामपि प्रत्येकं भावनीयम्, इत्थं च तुल्यनिर्देशेऽप्यष्टानामप्यमीषां राशीनां परस्परमल्पबहुत्वमेवमवगन्तव्यं, तद्यथा-सर्वस्तोकाः पर्याप्तचतुरिन्द्रियाः १, पर्याप्ताः पञ्चेन्द्रिया विशेषाधिकाः २ पर्याप्ता द्वीन्द्रिया विशेषाधिकाः ३ पर्याप्तास्त्रीन्द्रिया विशेषाधिकाः ४ पञ्चेन्द्रिया अपर्याप्तका असंख्यातगुणाः ५ चतुरिन्द्रिया अपर्याप्तका विशेषाधिकाः ६, त्रीन्द्रिया अपर्याप्तका विशेषाधिकाः ७ द्वीन्द्रिया अपर्याप्तका विशेषाधिकाः ८, इह च पञ्चेन्द्रियाणां प्रमाणं सामान्येनैवोक्तम्, पूर्वं पुनश्चतसृष्वपि गतिषु पृथक्'पृथक् तदभिहितमिति न पौनरुक्त्यमाशङ्कनीयमिति गाथार्थः ॥१६४॥ तदेवं नारकादिद्रव्याणां प्रायो येऽवस्थितराशयस्तेषां प्रमाणमुक्तम्, साम्प्रतं जीवद्रव्येषु येऽनवस्थितराशयः कदाचिल्लोके सम्भवन्ति कदाचित्तु न सम्भवन्ति तान् सम्पिण्ड्य दर्शयति—

**मणुय अपज्जत्ताऽऽहार मिस्सवेउव्वि छेय परिहारा। सुहुमसरागोवसमा सासण मिस्सा य भयणिज्जा ॥१६५॥**

अपर्याप्तका मनुष्याः १ आहारकशरीरिणः २ मिश्रवैक्रियकाययोगिनः ३ छेदोपस्थापनीयचारित्रिणः ४ परिहारविशुद्धिक-

द्वीन्द्रियादिमानं

॥१६२॥

चारित्रिणः ५ सूक्ष्मसम्परायिका ६ 'उवसम' त्ति, उपशमकग्रहणेन मोहस्योपशमयोग्या अपूर्वकरणगुणस्थानवृत्तयः ७, मोहस्योपशमका अनिवृत्तिबादरसम्परायलक्षणा ८, उपशान्तमोहा इति त्रयोऽपि राशयो गृह्यन्ते ९, सास्वादनसम्यग्दृष्टयः १० मिश्रा-सम्यग्मिथ्यादृष्टयः ११, एते एकादशापि राशयो 'भजनीया' विकल्पनीयाः, कदाचिल्लोके प्राप्यन्ते कदाचिन्नेत्यर्थः, तथाहि-मनुष्यगतौ गर्भजमनुष्याणां जघन्यतः समय उत्कृष्टतस्तु द्वादश मुहूर्ताः सम्मूर्च्छनमनुष्याणां तु जघन्यतः समय उत्कृष्टतस्तु चतुर्विंशतिर्मुहूर्ता उत्पत्तिविरहकालः सिद्धान्ते प्रतिपादितः, यदा चैतस्मिन् विरहकालेऽभिनवमनुष्या नोत्पद्यन्ते पूर्वोत्पन्नास्तु गर्भजापर्याप्तकाः केचिन्म्रियन्ते केचित्तु पर्याप्तीः समर्थयन्ते, सम्मूर्च्छजास्त्वन्तर्मुहूर्तायुष्कत्वात् पूर्वोत्पन्नाः सर्वेऽपि निर्लेप्यन्ते तदा सिद्धोऽपर्याप्तकमनुष्याणां कादाचित्कोऽभाव इति, आहारकशरीरारम्भस्याप्युत्कृष्टतः षण्मासान् यावद्विरहकालो निर्दिष्ट इति आहारकशरीरिणोऽपि कदाचिन्न सम्भवन्त्येव, तदुक्तम्-"आहारगाइ लोए छम्मास जा न हुंतिवि कयाइं। उक्कोसेण नियमा एक्कं समय जहण्णेण ॥१॥ जइ हुंति जहण्णेणं एक्क दो तिन्नि पंच व हवन्ति। उक्कोसेण जुगवं पुहुत्तमेत्त सहस्साणं ॥२॥"-त्ति, मिश्रवैक्रियकाययोगिनोऽपि ये प्रथममुत्पत्तिकाले कार्मणमिश्रवैक्रियकाययोगिनस्तेऽत्र विवक्षिताः, ते च नरकगतौ देवगतौ वाऽप्युत्पत्तिकाले प्राप्यन्ते, अनयोश्च द्वयोरपि गत्योः प्रत्येकं जघन्यतः समय उत्कृष्टतस्तु द्वादश मुहूर्ता विरहकाल उक्तो, यदभ्यधायि- "नरयगई णं भंते! केवइयं कालं विरहिया उववाएणं पण्णत्ता?, गोयमा! जहण्णेणं एक्कं समयं उक्कोसेणं बारस मुहुत्ता, एवं देवगईवि" यदा च चैतावन्तं कालं नारकदेवाः कदाचिन्नोत्पद्यन्ते पूर्वोत्पन्नास्त्वन्तर्मुहूर्तात् परतः सम्पूर्णवैक्रियकाययोगिनः सर्वेऽपि जायन्ते तदा घटत एव मिश्रवैक्रियकाययोगिनां कदाचिदभाव इति। छेदोपस्थापनीयचारित्रिणामपि जघन्यतस्त्रिषष्टिर्वर्ष

मनुष्याद्य-नवस्थिरराशिमानं

सहस्राण्युत्कृष्टतस्त्वष्टादश सागरोपमकोटीकोटयः परिहारविशुद्धिकचारित्रिणां जघन्यतश्चतुरशीतिर्वर्षसहस्राण्युत्कृष्टतस्त्वष्टादश सागरोपमकोटिकोटयोऽन्यत्रान्तरमुक्तमिहापि च पुरस्तादभिधास्यते, सूक्ष्मसम्परायापूर्वकरणानिवृत्तिबादरास्तु द्विविधाः—उपशमश्रेणिगताः क्षपकश्रेणिगताश्च, उपशान्तमोहास्तु केवलोपशमश्रेणिशिरःस्थायिनः, तत्रोपशमश्रेणेरुत्कृष्टतो वर्षपृथक्त्वं क्षपकश्रेणेस्तूत्कृष्टतः षण्मासा अन्तरमन्यत्रोक्तमिहापि च भणिष्यते, सास्वादनमिश्राणामपि जघन्यतः समय उत्कृष्टतस्तु पल्योपमासंख्येयभागोऽन्तरमिहैव वक्ष्यते इति सर्वेषामप्यमीषां राशीनां कादाचित्कोऽभावः परिभावनीयः, एतच्चेहापि ग्रन्थे पुरस्तात् प्रायः सर्वं व्यक्तीभविष्यतीति गाथार्थः ॥१६५॥ तदेवं द्रव्यप्रमाणद्वारेऽत्र प्रस्तुते जीवद्रव्यप्रमाणमभिधायोपसंहरन्नाह—

**एवं जे जे भावा जहिं जहिं हुंति पंचसु गईसु । ते ते अणुमज्जित्ता दव्वपमाणं नए धीरा ॥ १६६ ॥**

एवमनन्तरोक्तया नीत्या ये ये भावा—जघन्यस्थितिनारकतिर्यङ्मनुष्यामरप्रथमसमयोत्पन्नसिद्धादयो जीवानामवस्थाविशेषा नारकतिर्यङ्नरामरसिद्धिलक्षणासु पञ्चसु गतिषु मध्ये यत्र यत्र भवन्ति तांस्तान् भावान् 'अनुमज्ज्य' स्वबुद्ध्या पर्यालोच्य सिद्धान्तानुसारतोऽत्रोक्तानुसारतश्चानुक्तानामपि तेषां भावानां द्रव्यप्रमाणं 'नयेयुः' संवेदनपथं प्रापयेयुः, धीः-बुद्धिस्तया राजन्त इति धीरा-बुद्धिमन्त इति गाथार्थः ॥ १६६ ॥ तदेवं निगमितं जीवद्रव्यप्रमाणं, अथाजीवद्रव्यप्रमाणमाह—

**तिन्नि खलु एक्कयाइं अद्धासमया व पोग्गलाऽणंता । दुन्नि असंखेज्जपएसियाणि सेसा भवे ऽणंता ॥ १६७ ॥**

इहाजीवद्रव्याणि तावत् पूर्वोक्तस्वरूपाणि पञ्च भवन्ति, तद्यथा—धर्मास्तिकायोऽधर्मास्तिकायः आकाशास्तिकायः पुद्गलास्ति-

कायः कालश्चेति, इह चैतेषां प्रमाणं द्रव्यतः प्रदेशतश्च चिन्त्यते, तत्र धर्माधर्माकाशास्तिकायलक्षणानि त्रीण्यजीवद्रव्याणि 'एक्कयाइ' ति द्रव्यतश्चिन्त्यमानानि प्रत्येकमेकद्रव्यसङ्ख्यानि भवन्तीत्यर्थः, 'अद्धा' कालस्तद्रूपा ये समया परमाणुद्व्यणुकादिस्कन्धरूपाश्च ये पुद्गलास्ते द्रव्यतो निरूप्यमाणाः प्रत्येकमनन्तानि द्रव्याणि भवन्ति, अद्धासमयद्रव्याणां चानन्त्यमतीतानागतानामपि कथंचिदस्त्यतो मन्तव्यम्। अथैषां पञ्चानामप्यजीवद्रव्याणां प्रदेशतः प्रमाणं चिन्त्यते 'दुन्नी' त्यादि, द्वे धर्माधर्मास्तिकायलक्षणे अजीवद्रव्ये प्रत्येकमसङ्ख्येयप्रदेशात्मके भवतो, नानन्तप्रदेशात्मके, तयोर्लोकमात्रव्यापित्वात्, लोकस्य चासङ्ख्येयत्वादिति, शेषाणि त्वाकाशपुद्गलास्तिकायाद्धासमयलक्षणानि त्रीण्यपि द्रव्याणि प्रत्येकमनन्तप्रदेशात्मकानि भवन्ति, नन्वलोकाकाशस्यानन्तत्वादनन्तप्रदेशात्मकत्वं युक्तमेव, पुद्गलास्तिकायस्यापि द्व्यणुकत्र्यणुकचतुरणुकाद्यनन्तानन्ताणुकपर्यन्तानन्तस्कन्धात्मकत्वात् प्रतिस्कन्धं चानेकप्रदेशसम्भवात् केवलपरमाणूनां च तत्रानन्तानां भावात् सङ्गतमेवानन्तप्रदेशात्मकत्वं, अद्धासमयानां त्वतीतानागतवर्त्तमानस्वरूपाणां सर्वेषां द्रव्यत्वेनानन्तरमेवोक्तत्वात् के तत्र प्रदेशा यैरनन्तप्रदेशात्मकत्वमिहोच्यत इति चेद्, युक्तमुक्तं, किन्तु यदा काललक्षणं सामान्येनैकं द्रव्यं विवक्ष्यते तदा तदपेक्षया द्रव्यत्वेनोक्ता अप्यतीतादिस्वरूपाः समयाः प्रदेशत्वेनापि गृह्यन्ते, न हि भिन्ननिमित्तापेक्षया एकस्य द्रव्यत्वप्रदेशत्वे भवन्ती विरुध्येते, अनन्तधर्मात्मकत्वाद्वस्तुन इति, अथवा ये द्रव्यत्वेनाभिहिता अनन्ताः समयास्ते प्रत्येकमनन्तानन्तशो विभिद्यन्ते, तथाहि—अनन्तानन्तान्येकेन्द्रियादीनि तावज्जीवद्रव्याणि अनन्तानन्तानि च परमाणुद्व्यणुकादीनि पुद्गलद्रव्याणि, एतान्यपि क्षेत्रावगाहभेदतः एकसमयस्थित्यादिकालभेदतः एकगुणकालकत्वादिभावभेदतश्चानन्तभेदानि, एतैश्च सर्वभेदैः सहैकैकं समयद्रव्यं सम्बध्यते, तत्सम्बन्धाच्च प्रत्येकमनन्तानन्तान्

भेदान् प्रतिपद्यते, एवं सत्यतीतादयः समयाः सामान्यतो द्रव्याणि जीवादिद्रव्यादिसम्बन्धभेदास्तु प्रदेशा इत्येवमद्धासमयानामपि द्रव्यप्रदेशभावमवगच्छामो वयं. आगमे तु पुद्गलस्कन्धानामिवाद्धासमयानां पिण्डरूपताया अभावात् प्रदेशभावो नाभ्युपगतः, तत्त्वं तु बहुश्रुता एव विदन्तीति गाथार्थः ॥१६७॥ तदेवं प्रतिपादितं सप्रपञ्चमपि जीवाजीवद्रव्यप्रमाणं, तत्प्रतिपादने च " संतपयपरूवणया दव्वपमाणं चे " त्यादिगाथोक्तं द्वितीयं प्रमाणद्वारं समाप्तमिति ॥ अथ क्रमप्राप्तं क्षेत्रद्वारमभिधित्सुराह—

**खेत्तं खलु आगासं तव्विवरीयं च होइ नोखेत्तं । जीवा य पोग्गलावि य धम्माधम्मत्थिया कालो ॥१६८॥**

उत्तरपर्यायप्राप्तौ पूर्वपर्यायविलयतः क्षीयन्ते-विलीयन्तेपदार्था अस्मिन्निति क्षेत्रम्-आकाशं अथवा क्षिण्वन्ति-हिंसन्ति प्राणिनः परस्परं यत्र तत् क्षेत्रं-आकाशमेव. तद्विपरीतं-ततोऽन्यत् पुनर्नोक्षेत्रं भवति. क्षेत्रशब्दवाच्यं न भवतीत्यर्थः, किं पुनस्तादित्याह-जीवाः पुद्गला धर्माधर्मास्तिकायौ कालश्च. अतः परं च वस्त्वेव नास्तीति गाथार्थः ॥१६८॥ उक्तं स्वरूपतः क्षेत्रं. इह च चतुर्दश जीवसमासाः सत्पदप्ररूपणतादिभिरनुयोगद्वारैर्विचारयितुं प्रक्रान्ताः, ते च नारकादिरूपेण व्यवस्थिता अतो नारकाणां तावच्छरीरमानं विचारयितुमाह—

**सत्त धणु तिन्नि रयणी छच्चेव य अंगुलाइं उच्चत्तं । पढमाए पुढवीए विउणा विउणं च सेसासु ॥ १६९ ॥**

प्रथमपृथिव्यां नारकाणां शरीरोच्चत्वं भवति, कियदित्याह—सप्त धनूंषि तिस्रो रत्नयः. त्रयो हस्ता इत्यर्थः. षडेव चांगुलानि. उत्सेधांगुलप्रमाणेन सपादैकत्रिंशद्धस्ता इति भावः. शेषासु द्वितीयादिपृथ्वीषु पुनरेतदेव मानं द्विगुणं द्विगुणं द्रष्टव्यम्. तद्यथा—

शर्कराप्रभायां सार्द्धहस्तद्वयाधिकानि पञ्चदश धनूंषि, वालुकाप्रभायां हस्ताधिकान्येकत्रिंशद्धनूंषि, पङ्कप्रभायां सार्द्धानि द्विषष्टि-धनूंषि, धूमप्रभायां सपाद धनुःशतं, तमायां सार्धधनुःशतद्वयं, सप्तमपृथिव्यां महातमायां नारकाणां शरीरस्योच्चत्वमुत्सेधाङ्गुलेन पञ्च धनुःशतानि, जघन्यतस्तु शरीरमानं सर्वास्वपि पृथिवीष्वङ्गुलासंख्येयभागो द्रष्टव्यः, इदं च भवधारणीयशरीरमानमुक्तं उत्तरवैक्रियशरीरमानं तु सर्वत्र जघन्यतोऽङ्गुलसंख्येयभागः, उत्कृष्टतस्तु भवधारणीयशरीरमानाद् द्विगुणमवसेयं, तद्यथा—रत्नप्रभायां सार्द्धहस्तद्वयाधिकानि पञ्चदश धनूंषि उत्कृष्टमुत्तरवैक्रियशरीरमानमवगन्तव्यमित्थं भवधारणीयशरीरमानाद् द्विगुणं तावन्नेयं यावत् सप्तमपृथ्वीनारकाणामुत्तरवैक्रियशरीरं जघन्यतोऽङ्गुलसंख्येयभागः उत्कृष्टतस्तु धनुःसहस्रं। ननु क्षेत्रद्वारे प्रक्रान्ते जीवसमासानां शरीरमानविचारणमप्रस्तुतमिति, चेत्, नैतदेवम्, अभिप्रायाऽपरिज्ञानाद्, अन्यत्र हि नारकादिशरीरमानेन तच्छरीरावगाढक्षेत्रस्यैव वस्तुतो मानं प्रतिपादितं भवति, अतः क्षेत्रद्वारे प्रस्तुते नारकादिजीवसमासानां शरीरक्षेत्रावगाहचिन्तनं न किञ्चिदप्रस्तुतमिति गाथार्थः ॥ १६९ ॥ अथ द्वीन्द्रियादीनां शरीरमानमभिधित्सुराह—

बारस य जोयणाइं तिगाउयं जोयणं च बोद्धव्वं । बेइंदियाइयाणं हरिएसु सहस्समब्भहियं ॥ १७० ॥

द्वादशयोजनादिकं द्वीन्द्रियादीनां यथासंख्यमुत्कृष्टं शरीरमानमवगन्तव्यम्, तद्यथा—शङ्खप्रमुखद्वीन्द्रियाणां द्वादश योजनान्युत्कृष्टं शरीरमानं, चक्रवर्तिसैन्याद्यधस्ताद्य कदाचित् सम्मूर्च्छति स आशालिकाजीवोऽपि द्वादशयोजनमानो द्वीन्द्रिय इत्येके, सम्मूर्च्छनपञ्चेन्द्रिय इत्यपरे, कर्णशृगालीमर्कोटकप्रभृतित्रीन्द्रियाणां तु त्रीणि गव्यूतान्युत्कृष्टं शरीरमानं, भ्रमरादिचतुरिन्द्रियाणां

योजनमेकं शरीरप्रमाणमुत्कृष्टं विज्ञेयं, हरितेषु--समुद्राद्याश्रितवाल्लिलताऽम्भोरुहादिबादरवनस्पतिषु सातिरेकं योजनसहस्रं शरीरमानमुत्कृष्टमवसेयम्, जघन्यं तु द्वीन्द्रियादीनां सर्वेषामप्यंगुलासंख्येयभागः शरीरप्रमाणमवसातव्यम्, पृथिव्यप्तेजोवायूनामप्येकेन्द्रियाणां जघन्यत उत्कृष्टतश्चांगुलासंख्येयभागरूपं शरीरप्रमाणं स्वयमेव वक्ष्यतीति गाथार्थः ॥ १७० ॥ पञ्चेन्द्रियातिर्यञ्चस्त्रिविधाः, तद्यथा-जलचराः स्थलचराः खचराश्चेति, जलचराः पुनरपि सम्मूर्च्छजा गर्भजाश्च, पुनः प्रत्येकमपर्याप्ताः पर्याप्ताश्चेत्येवं चतुर्विधाः, स्थलचरास्तु द्विविधाश्चतुःपदाः परिसर्पाश्च, चतुःपदाः पुनरपि सम्मूर्च्छजाः गर्भजाश्च, पुनः प्रत्येकमपर्याप्ताः पर्याप्ताश्चेत्येवं चतुर्विधाः, परिसर्पास्तु द्विविधाः-उरःपरिसर्पा भुजपरिसर्पाश्च, उरःपरिसर्पाश्चतुःपदवत्पुनरपि चतुर्विधाः, एवं भुजपरिसर्पा अपि, इत्येवं स्थलचराः सर्वेऽपि द्वादशविधाः, खचरास्तु जलचरवच्चतुर्विधाः, तदेवं विंशतिभेदेषु तिर्यक्षु सम्मूर्च्छजापर्याप्तकजलचरस्थलचरखचराणां पर्याप्तकसम्मूर्च्छजजलचराणां च शरीरप्रमाणमभिधित्सुराह—

जल-थल-खह-सम्मुच्छिम तिरिय अपज्जत्तया विहत्थीओ । जलसंमुच्छिमपज्जत्तयाण अह जोयणसहस्सं ॥१७१॥

सम्मूर्च्छजापर्याप्तकजलचराणां वितस्तिः शरीरप्रमाणं १ स्थलचराणामपि सम्मूर्च्छजापर्याप्तकानां चतुःपदानामपि २ उरःपरिसर्पाणां ३ भुजपरिसर्पाणां च वितस्तिः शरीरप्रमाणं ४ खचराणामपि सम्मूर्च्छ (४०००) जापर्याप्तकानां शरीरमानं वितस्तिरेवेति ५, एतेषां च सम्मूर्च्छजापर्याप्तानां जलचरादीनां वितस्तिरुत्कृष्टं प्रमाणं द्रष्टव्यम्, जघन्यं तु सर्वत्रांगुलासंख्येयभाग एवेति भावनीयम्, पर्याप्तानां तु सम्मूर्छजजलचराणां नदीतडागादिसम्भतापेक्षया जघन्यमङ्गुलासंख्येयभागः, उत्कृष्टं तु

द्वीन्द्रियाद्यवगाहना

स्वयम्भूरमणोत्पन्नमत्स्यापेक्षया योजनसहस्र शरीरप्रमाण ६ इति गाथार्थ' ॥ १७१ ॥ तदेव षण्णां पञ्चेन्द्रियतिर्यग्भेदानां शरीरमानमभिधाय शेषमभिधित्सुराह—

उरपरिसप्पा जोयण सहस्सिया गब्भया उ उक्कोस । समुच्छिम पज्जत्तय तेसिं चिय जोयणपुहुत्त ॥ १७२ ॥

उरसा—हृदयेन परिसर्पन्ति-गच्छन्तीत्युर परिसर्पाः-पन्नगादयस्ते गर्भजा., तुशब्दस्य विशेषणार्थत्वात् पर्याप्ताश्च जघन्यतोऽङ्गुलासङ्ख्येयभागशरीरा', उत्कृष्टतस्तु समयक्षेत्रबहिर्जातास्त एव योजनसाहस्रिका, योजनसहस्रमानवपुष इत्यर्थ ७, सम्मूर्च्छजपर्याप्तानां पुनस्तेषामप्युर परिसर्पाणा जघन्यतोऽङ्गुलासङ्ख्येयभाग उत्कृष्ट तु योजनपृथक्त्व शरीरमान ८, पृथक्त्व शब्दार्थस्तु पूर्वोक्त एवेति गाथार्थ' ॥ १७२ ॥ अथान्यस्यापि पञ्चेन्द्रियतिर्यग्भेदद्वयस्य शरीरमानमभिधातुमाह—

भुयपरिसप्पा गाउयपुहुत्तिणो गब्भया य उक्कोस । समुच्छिम पज्जत्तय तेसिं चिय धणुपुहुत्त च ॥ १७३ ॥

भुजाभ्यां परिसर्पन्ति-गच्छन्तीति भुजपरिसर्पा—गोधानकुलादयो गर्भजा, तुशब्दस्यात्रापि विशेषणार्थत्वात् पर्याप्ताश्च, जघन्यतोऽङ्गुलासङ्ख्येयभागवर्तिशरीरा उत्कृष्टतस्तु मनुष्यक्षेत्रबहिर्जाता गव्यूतपृथक्त्विनो गव्यूतपृथक्त्वशरीरमाना इत्यर्थ', सम्मूर्च्छजपर्याप्तानां पुनस्तेषामेव भुजपरिसर्पाणां शरीरमान जघन्यतोऽङ्गुलासङ्ख्येयभाग. उत्कृष्टतस्तु धनु.पृथक्त्व १० इति गाथार्थ ॥ १७३ ॥ अथ गर्भजापर्याप्तजलचरादिपञ्चेन्द्रियतिरश्चां शरीरमानमाह—

**जलथलगब्भऽपजत्ता खहथलसंमुच्छिमा य पज्जत्ता । खहगब्भया उ उभए उक्कोसेणं धणुपुहुत्तं ॥ १७४ ॥**

'जलथलगब्भअपजत्त' त्ति, पर्यन्तोपात्तो धनुःपृथक्त्वशब्दः सर्वत्र योज्यते, ततश्च गर्भजापर्याप्तजलचराणां धनुःपृथक्त्वं शरीरप्रमाणं ११, गर्भजापर्याप्तस्थलचरग्रहणेन त्रिविधा अपि गर्भजापर्याप्तस्थलचरा गृह्यन्ते, ततश्च गर्भजापर्याप्तानां चतुःपदानां १२ उरःपरिसर्पाणां १३ भुजपरिसर्पाणां च धनुःपृथक्त्वमेव शरीरमानं १४ 'खहथलसंमुच्छिमा य पज्जत्तत्ति' सम्मूर्च्छेजपर्याप्तानां खचराणां धनुःपृथक्त्वं शरीरमानं १५, स्थलचरास्तु सम्मूर्च्छेजपर्याप्ताः पारिशेष्याच्चतुःपदा एवेह लभ्यन्ते, सम्मूर्च्छेजपर्याप्तोरःपरिसर्पभुजपरिसर्पाणां शरीरमानस्यानन्तरमेव निर्णीतत्वात्तस्माच्चतुःपदलक्षणानां सम्मूर्च्छेजपर्याप्तानां धनुःपृथक्त्वं शरीरप्रमाणं १६, 'खहगब्भया उ उभए' त्ति, खचरगर्भजानामुभयेषां पर्याप्तानां १७ अपर्याप्तानां चोत्कृष्टतो धनुःपृथक्त्वं शरीरप्रमाणं १८, पूर्वेष्वपि प्रस्तुतगाथोक्तेषु गर्भजापर्याप्तजलचरादिस्थानेषु धनुःपृथक्त्वं शरीरमानमुत्कृष्टत एव द्रष्टव्यं, जघन्यं तु सर्वत्रांगुलासंख्येयभाग एव द्रष्टव्य इति गाथार्थः ॥ १७४ ॥ अथोक्तशेषपञ्चेन्द्रियतिर्यग्भेदद्वयशरीरप्रमाणमाह—

**जलगब्भयपज्जत्ता उक्कोसं हुंति जोयणसहस्सं । थलगब्भयपज्जत्ता छग्गाउक्कोसगुव्वेहा ॥१७५॥**

गर्भजपर्याप्तजलचराणां जघन्यतोऽङ्गुलासंख्येयभागः शरीरमानं, उत्कृष्टतस्तु स्वयम्भूरमणमत्स्यानां योजनसहस्रं १९, स्थलचरास्तु गर्भजपर्याप्ताः परिशिष्टन्यायेनेहापि चतुःपदा एव लभ्यन्ते, गर्भजपर्याप्तोरःपरिसर्पभुजपरिसर्पाणां देहमानस्यानन्तरमेव प्राग्निरूपितत्वात्, ततस्तेषां चतुष्पदलक्षणानां गर्भजपर्याप्तस्थलचराणां गवादीनां जघन्यतोऽङ्गुलासंख्येयभागः शरीरमानं, उत्कृष्टं

अपर्याप्त गर्भज जलचरादि शरीरमानं

पर्याप्त गर्भज जलचर-स्थलचर मान

तु देवकुरूत्तरकुरुगजादीनां षड् गव्यूतानि २०। तदेव 'जलथलखहसम्मुच्छिमे'त्यादिगाथापञ्चकेन विंशतेरपि पञ्चेन्द्रिय-तिर्यग्भेदानां शरीरमानमुक्तं, एतच्च ग्रन्थान्तरैः किञ्चित् क्वचिद् विसंवदति, तथाहि-अत्र विंशतिभेदेषु मध्ये दश भेदा पर्याप्ताना दश पुनरपर्याप्ताना, तत्र प्रज्ञापनानुयोगद्वारादिग्रन्थेषु कयापि विवक्षया दशानामप्यपर्याप्ताना जघन्यत उत्कृष्टतश्चाविशेषेणा-ङ्गुलासंख्येयभाग एव शरीरप्रमाणमुक्तं, प्रस्तुतग्रन्थे तु 'जलथलखहसम्मुच्छिमे'त्यादिप्रथमगाथायां पञ्चानां सम्मूर्च्छजापर्याप्ताना प्रत्येकमुत्कृष्टतो वितस्ति शरीरमानमुक्तं, पञ्चाना तु गर्भजापर्याप्तानां 'जलथलगब्भअपजत्ते' त्यादि-चतुर्थगाथायां प्रत्येकमुत्कृष्टतो धनु पृथक्त्व देहप्रमाणमावेदित, तदत्र तत्त्व केवलिनो बहुश्रुता वा विदन्ति, पर्याप्तावस्थाया (ये) योजनसहस्रादिमानवपुषो भवन्ति तेषामप्यपर्याप्तावस्थायामुत्कृष्टतोऽप्यङ्गुलासंख्यभाग एव शरीरमान प्रज्ञापनादिष्वभिहित, एतच्चदुरवगम, यदपीह प्रस्तुतग्रन्थे चतुर्थगाथायां 'खहगब्भमा उ उभए' इत्यनेन गर्भजखचराणा पर्याप्तानामिवापर्याप्ताना-मप्युत्कृष्टतो धनु पृथक्त्व मानमुक्त तदपि पृथक्त्वस्य बहुभेदत्वेऽपि नातिपेशलतयाऽवगच्छाम, अपर च सम्मूर्च्छजपर्याप्तचतु-पदलक्षणानां स्थलचराणां प्रज्ञापनानुयोगद्वारादिषु गव्यूतपृथक्त्वमुत्कृष्ट देहमानमभिहित प्रक्रान्तग्रन्थे तु प्रस्तुतविचार-चतुर्थगाथायां षोडशेऽङ्कस्थाने तेषामेव धनुःपृथक्त्वमुत्कृष्ट शरीरप्रमाणमाख्यातमित्यत्रापि तत्त्वमतिशयिन एव जानन्तीति गाथार्थ ॥ १७५ ॥ एकेन्द्रियाणा मध्ये प्रागवनस्पतीनामेव शरीरमानमुक्तम्, इदानीं पूर्वमनुक्ताना पृथिव्यादीना शरीरमानमाह–

अगुलअसखभागो बायरसुहुमा य सेसया काया । सव्वेसि च जहण्ण मणुयाण तिगाउ उक्कोस ॥ १७६ ॥

उक्तशेषका ये कायाः पृथिव्यप्तेजोवायुलक्षणास्तेषां प्रत्येकं सूक्ष्माणां बादराणां च जघन्यत उत्कृष्टतश्चांगुलासंख्येयभागः शरीरमानं, न केवलमेतेषामेवांगुलासंख्येयभागः शरीरमानं किन्तु 'सव्वेसिं च जहण्णं' ति येषां नारकाणां द्वित्रिचतुरिन्द्रियवनस्पतीनां सम्मूर्च्छजगर्भजापर्याप्तपञ्चेन्द्रियातिरश्चां प्राग् जघन्यदेहमानं नोक्तं येषां च मनुष्यादीनामग्रेऽपि तन्नाभिधास्यते तेषामपि सर्वेषां जघन्यमंगुलासंख्येयभाग एव शरीरमानमवगन्तव्यम् , मनुष्याणां गव्यूतत्रयमुत्कृष्टं शरीरमानं, जघन्यं तूक्तमेवेति गाथार्थः ॥ १७६ ॥ अथ देवानां शरीरप्रमाणमाह—

**भवणवइवाणमंतरजोइसवासी य सत्तरयणीया। सक्काइ सत्तरयणी एक्केका हाणि जावेक्का ॥ १७७ ॥**

भवनपतिव्यन्तरज्योतिष्काः सर्वेऽप्युत्कृष्टतः प्रत्येकं सप्तहस्तप्रमाणा भवन्ति, 'सक्काइ सत्तरयणी'ति शक्रः—सौधर्मेन्द्रस्तदुपलक्षितोऽत्र सौधर्मदेवलोक एव गृह्यते, आदिशब्दादीशानपरिग्रहः, ततस्तयोरपि सौधर्मेशानयोर्देवाः प्रत्येकमुत्कृष्टतः सप्तहस्तशरीरा भवन्ति, ततः परमेकैकहस्तहानिर्यावत् पर्यन्ते एको हस्तः, इदमुक्तं भवति—सनत्कुमारमाहेन्द्रयोरुत्कृष्टस्थितिकदेवानामुत्कृष्टशरीरहानिमतां षड् हस्ताः शरीरप्रमाणं, ब्रह्मलोकलान्तकयोः पञ्च महाशुक्रसहस्रारयोश्चत्वारः आनतप्राणतारणाच्युतेषूत्कृष्टायुषां सुराणामुत्कृष्टशरीरहानिमतां त्रयो हस्ताः शरीरमानं, ग्रैवेयकेषु सर्वोपरि द्वौ हस्तौ अनुत्तरविमानेषूत्कृष्टायुषां देवानामेको हस्तः शरीरमानं, जघन्यं च शरीरमानममीषां प्रागेवोक्तं, एतच्च सप्तरत्न्यादिकं वपुर्मानं देवानां भवधारणीयसहजशरीरापेक्षया वेदितव्यम् , उत्तरवैक्रियं त्वच्युतदेवलोकपर्यन्तानाममराणां जघन्यतोऽङ्गुलसंख्येयभागः उत्कृष्टतस्तु योजनलक्षं स्वयमेवावसेयं, ॥१७२॥

ग्रैवेयकानुत्तरसुरास्तु सत्यामपि लब्ध्यामुत्तरवैक्रियं स्वभावात् न कदाचित् कुर्वन्तीति मन्तव्यम् , इदं च सर्वमपि प्रागुक्त शरीरमानमुत्सेधाङ्गुलेनैव द्रष्टव्यम् , " उस्सेहपमाणओ मिणे देहम् " इति वचनादिति, दिङ्मात्रप्रदर्शन चेद, विस्तरस्तु देवेन्द्रनरकेन्द्रकादिभ्योऽवसेय इति गाथार्थ ॥१७७॥ तदेवमवगाहनाचिन्तनमुखेन नारकादीनां क्षेत्रद्वारप्रक्रमायात क्षेत्र चिन्तित, गुणस्थानलक्षणेषु च जीवसमासेषु प्रस्तुतेषु यन्नारकादीनामवगाहनामान चिन्तित तत्र कारणमादावेवोक्तम् , साम्प्रत तु तेषामेव गुणस्थानलक्षणजीवसमासानां मुख्यत एनावगाहक्षेत्र लोकभागलक्षणप्रमाणतश्चिन्तयितुमाह–

मिच्छा य सव्वलोए असखभागे य सेसया हुति । केवलि असखभागे भागेसु व सव्वलोए वा ॥१७८॥

मिथ्यादृष्टयस्तावत् सर्वस्मिन्नपि चतुर्दशरज्ज्वात्मके लोके प्राप्यन्ते, सूक्ष्मैकेन्द्रिया हि सर्वत्रापि लोके वर्त्तन्ते, ते च सर्वेऽपि मिथ्यादृष्टय एवेति युक्त सर्वलोकवर्त्तित्वममीषां, ' असखभागे य सेसया होंति ' त्ति शेषा -सास्वादनसम्यग्मिथ्यादृष्ट्यविरतसम्यग्दृष्ट्यादय. सयोगिकेवलिवर्जा सर्वेऽपि प्रत्येक लोकस्यासख्येयभागे वर्त्तन्ते, सम्यग्मिथ्यादृष्ट्यादयो हि सर्वे सज्ञिपञ्चेन्द्रियेष्वेव लभ्यन्ते, सास्वादनास्तु केचित् स्वल्पा. अपर्याप्तद्वित्रिचतुरिन्द्रियासज्ञिपञ्चेन्द्रियादिष्वपि प्राप्यन्ते, एते च सज्ञिपञ्चेन्द्रियादय स्वल्पत्वाल्लोकासख्येयभाग एव लभ्यन्त इति युक्त सास्वादनादीनां लोकासख्येयभागवर्त्तित्वमिति, ' केवलि असखभागे ' इत्यादि, सयोगकेवली पुनरेक. केवलिसमुद्घातमकुर्वन् सहजावस्थाया समुद्घातेऽपि कृतदण्डकपाटावस्थायां लोकस्यासंख्येयभागे वर्त्तते, ' भागेसु व ' त्ति मन्थान कुर्वन् पुनरेषोऽपि लोकस्यासख्येयेषु भागेषु वर्तत इत्यर्थ., ' सव्वलोए व ' त्ति चतुर्थे

लोकव्यापित्वसमये एषोऽपि सर्वस्मिन्नपि लोके प्राप्यत इति गाथार्थः ॥ १७८ ॥ नन्वस्यां गाथायां मिथ्यादृष्टयः सर्वलोकवर्त्तिन इत्युक्तं ते चैकेन्द्रियादिभेदतो बहुभेदास्ततः किं ते सर्वेऽपि सर्वलोकवर्त्तिन आहोश्वित् केचिदेवेत्याशङ्क्याह–

तिरिएगिंदियसुहुमा सव्वे तह बायरा अपज्जत्ता । सव्वेवि सव्वलोए सेसा उ असंखभागम्मि ॥ १७९ ॥

तिर्यक् सूक्ष्मादितनुमानं

'तिरिएगिंदियसुहुमा सव्वे'त्ति तिर्यञ्चः पृथिव्यप्तेजोवायुवनस्पत्येकेन्द्रियलक्षणाः सूक्ष्माः सर्वे 'सव्वलोए' त्ति सर्वस्मिन्नपि लोके प्राप्यन्त इत्यर्थः, 'सुहुमा य सव्वलोए' इति वचनादिति, '**तह बायरा अपज्जत्ता सव्वेवि**' त्ति तथा बादरापर्याप्ताः पृथिव्यप्तेजोवायुवनस्पत्येकेन्द्रियाः प्रत्येकं सर्वेऽपि समुदिताश्चिन्त्यमानाः, सर्वस्मिन्नपि लोके प्राप्यन्त इतीहापि सम्बध्यते, आह–ननु सूक्ष्मैकेन्द्रियान् विहाय शेषजीवानां सर्वलोकवर्त्तित्वमागमे न क्वचिदुक्तं तत् कथं बादरपर्याप्तैकेन्द्रियाणामत्र प्रत्येकं सर्वलोकवर्तित्वमुच्यते ?, सत्यं, स्वस्थानमङ्गीकृत्य सूक्ष्मैकेन्द्रिया एव सर्वलोकव्यापिनः प्राप्यन्ते, उत्पादसमुद्घातौ त्वाश्रित्य बादरापर्याप्ता अप्येकेन्द्रियाः प्रत्येकं सर्वस्मिन्नपि लोके प्राप्यन्ते, उक्तञ्च **प्रज्ञापनायाम्**– "कहि णं भंते ! बायरपुढविकाइयाणं अपज्जत्तगाणं ठाणा पण्णत्ता ?, गोयमा ! जत्थेव बायरपुढविकाइयाणं पज्जत्तगाणं ठाणा पण्णत्ता तत्थेव बायरपुढविकाइयाणं अपज्जत्तगाणं ठाणा पण्णत्ता, उववाएणं सव्वलोए, समुग्घाएणं सव्वलोए, सट्ठाणेणं लोयस्स असंखेज्जइभागे" त्ति, तत्रोत्पादो भवान्तरालगतिलक्षणस्तस्मिन्नेते बादरापर्याप्तपृथ्वीकायिका विग्रहावस्थाभाजः सर्वमपि लोकं व्याप्नुवन्ति, तथा समुद्घातो- मारणान्तिकसमुद्घातलक्षणो वक्ष्यमाणस्वरूपस्तस्मिन्नपि वर्त्तमाना एते सर्वलोकव्यापिनः प्राप्यन्ते, स्वस्थानं तु रत्नप्रभा-

पृथिव्यादिकमाश्रित्यामी लोकाऽसंख्येयभाग एव वर्त्तन्ते इत्यर्थः, एवं बादरापर्याप्ता वायुवनस्पतयोऽप्युत्पादसमुद्घाताभ्यां प्रत्येकं सर्वलोकव्यापिनो भावनीया, बादरापर्याप्ततेजस्कायिकास्तु समुद्घातेनैव सर्वलोकव्यापिन इत्यलं विस्तरेण, तदर्थिना तु प्रज्ञापनैव अन्वेषणीया, तदेवं बादरापर्याप्तैकेन्द्रियाणामुत्पादसमुद्घातावेवाश्रित्य सर्वलोकव्यापित्वमत्रोक्तमिति मन्तव्यम्, उक्तशेषास्तु मिथ्यादृष्टयोऽपि बादरपर्याप्तपृथिव्यादयो बादरपर्याप्तवायुवनस्पतिवर्जाः सर्वेऽप्युत्पादसमुद्घाताभ्यामपि लोकस्यासंख्येयभाग एव वर्त्तंते, बादरपर्याप्तवनस्पतयस्तु बादरपर्याप्तपृथिव्यादिवद् द्रष्टव्या इति गाथार्थः ॥ १७९ ॥ बादरपर्याप्तवायूनां तर्हि का वार्त्ता इत्याह—

पज्जत्तबायरानिल सट्ठाणे लोगऽसंखभागेसु । उववायसमुग्घाएण सव्वलोगम्मि होज्ज पहु ॥ १८० ॥

बादरपर्याप्तवायुकायिकाः स्वस्थानं घनवाततनुवातादिकमाश्रित्य लोकस्यासंख्येयेषु भागेषु वर्त्तन्ते, एकस्मिन्नेव लोकस्यासंख्याततमे भागेऽमी न प्राप्यन्ते, शेषेषु पुनर्लोकासंख्येयभागेषु प्राप्यन्त एवेत्यर्थः, लोकस्य हि यावत् किमपि शुषिरं तावत् सर्वस्मिन्नपि वायवः सञ्चरन्त्येव, यत्पुनरशुषिरं घनं कनकगिरिशिलामध्यभागादिकं तत्रैव ते न प्रसर्पन्ति, तच्च सर्वमपि लोकस्यासंख्येयभाग एवेति अतस्तेनैवैकं तदसंख्येयभागं वर्जयित्वाऽन्येषु शुषिरेषु तदसंख्येयभागेषु बादरपर्याप्तवायूनां वृत्तिर्न विरुध्यते, युक्त्यनुयायित्वात् प्रज्ञापनाऽऽगमसिद्धत्वाच्चेति। उपपातः अन्तरालगतिलक्षणः 'समुद्घातो' मारणान्तिकसमुद्घातादिस्वरूपः ताभ्यामुपपातसमुद्घाताभ्यां सर्वस्मिन्नपि लोके बादरपर्याप्तवायवो भवेयुः, भवान्तराले हि विग्रहगत्यापन्ना मारणा-

न्तिकसमुद्घाते चाग्रेतनोत्पत्तिस्थाने निक्षिप्तस्वप्रदेशदण्डास्ते सर्वमपि लोकं व्याप्नुयुरिति, पूर्वं च बादरपर्याप्तवायूनां यल्लोकस्य संख्येयभागप्रमाणत्वमुक्तं तत् संख्यामेवाश्रित्येति मन्तव्यम्, अत्र तु ते लोकसंख्येयभागप्रदेशराशिप्रमाणतया पूर्वं निर्णीता बादरपर्याप्तवायवः स्वावगाहेन कियत् क्षेत्रं रुन्धन्तीति चिन्तितमिति न कश्चित् पूर्वापरविरोध इति गाथार्थः ॥ १८० ॥ तदेवमभिहितं जीवद्रव्याणां क्षेत्रम्, साम्प्रतमजीवद्रव्याणां तदभिधाने प्रक्रान्तेऽपि विचित्रत्वात् सूत्रगतेस्तावद्भण्यमानक्षेत्रद्वारगतस्य क्षेत्रस्य वक्ष्यमाणस्पर्शनाद्वारगतस्पर्शनायाश्च विशेषं दिदर्शयिषुराह—

**सट्ठाणसमुग्घाएणुववाएणं च जे जहिं भावा । संपइ काले खेत्तं तु फासणा होइ समईए ॥ १८१ ॥**

ये यत्र जीवाः समुत्पद्यन्ते तत्तेषां स्वस्थानमुच्यते, यथा पृथ्वीकायिकानां रत्नप्रभापृथिव्यादिकं समुद्घातो-मारणान्तिकसमुद्घातादिलक्षणो वक्ष्यमाणस्वरूपः 'उपपातो' भवान्तरालवर्त्तनात्मकः, एतैः स्वस्थानसमुद्घातोपपातैर्ये भावाः पृथिव्यादयो यत्र रत्नप्रभादिके स्थाने सम्भवन्ति तेषां तत् साम्प्रतकालविषये क्षेत्रमवगन्तव्यम्, स्पर्शना त्वतीतकालविषयापि भवति, तथाहि-विग्रहगत्यवस्थायां स्वप्रदेशैः सर्वतः समाक्रान्तमेव समस्तलोकलक्षणं क्षेत्रं बादरापर्याप्तैकेन्द्रियाणां पूर्वमुक्तं, स्पर्शना त्वतीतकालविषयापि वक्ष्यते, यथा देशविरतादेरितः स्थानादच्युतदेवलोकाद्युत्पन्नस्य षड्रज्ज्वादिका, सा हि अतः स्थानाद् रज्जुषट्कं स्पृष्ट्वाऽच्युतदेवलोकं गतोऽप्यनन्तरातीतकालस्पृष्टरज्जुषट्कापेक्षया रज्जुषट्कस्य स्पर्शको वक्ष्यते, एवमन्यत्रापि भावनीयमिति गाथार्थः ॥ १८१ ॥ अथ प्रागनभिहितमजीवद्रव्याणां क्षेत्रमभिधित्सुराह—

लोए धम्माऽधम्मा लोयालोए य होइ आगासं। कालो माणुसलोए उ पोग्गला सव्वलोयम्मि ॥१८२॥

धर्माऽधर्मास्तिकायौ पूर्वोक्तस्वरूपौ प्रत्येकं सर्वस्मिन्नपि लोकाकाशक्षेत्रे भवतः, समस्तमपि लोकाकाशक्षेत्रं धर्माधर्मास्तिकायौ प्रत्येकमभिव्याप्य तिष्ठत इत्यर्थः, आकाशास्तिकायस्तु लोकमलोकं चाभिव्याप्य तिष्ठति, कालस्तु चन्द्रसूर्यगतिक्रियाऽभिव्यङ्ग्योऽर्द्धतृतीयद्वीपसमुद्रलक्षणे मनुष्यक्षेत्र एव भवति, न परतो, मनुष्यक्षेत्रात् परेण चन्द्रसूर्याणां गतिक्रियाया एवाभावादिति भावः, द्रव्याणां यत्तेन तेन रूपेण वर्त्तनं तद्रूपः कालो मनुष्यक्षेत्राद्बहिरपि सिद्धान्ते समनुज्ञात इति भावनीयम्, परमाणुद्व्यणुकादयोऽनन्ताणुस्कन्धपर्यवसानास्तु पुद्गलाः सर्वस्मिन्नपि लोकक्षेत्रे प्राप्यन्त इति गाथार्थः ॥ १८२ ॥ तदेवं दर्शितमजीवद्रव्याणामपि क्षेत्रं, तथा च सति क्षेत्रद्वारसमाप्तमिति ॥ साम्प्रतं 'संतपयपरूवणया दव्वपमाणं च' त्यादिगाथोपक्षिप्तस्य (मेव) स्पर्शनाद्वारमभिधानीयम्, स्पर्शना च स्पर्शनीये सत्येव भवति, स्पर्शनीयं च लोकोर्ध्वाधस्तिर्यग्लोकादिभेदादनेकधा सम्भवति, अतस्तदेव तावद्दर्शयितुमुपक्रमते

आगासं च अणंतं तस्स य बहुमज्झदेसभागम्मि। सुपइट्ठियसंठाणो लोगो कहिओ जिणवरेहिं ॥ १८३ ॥

लोकालोकगतं सामान्येन तावच्चिन्त्यमानमाकाशमनन्तं भवति, तस्य चानन्तस्याकाशस्य बहुमध्यदेशभागे—मध्यरूपो देशो मध्यदेशः, स च किञ्चिदूनाधिकोऽपि उपचारान्मध्यदेश उच्यते अतस्तन्निरासार्थमाह बहु-अतिशयेन निरुपचरितो योऽसौ मध्यदेशस्तद्रूपो भागः सर्वाकाशस्यांशो बहुमध्यदेशभागस्तस्मिन्नित्यर्थः, अत्र च पाठान्तराणि दृश्यन्ते, तान्यपि देशशब्दस्य भिन्न-

स्थानयोजनादिप्रकारेणोक्तानुसारतो व्याख्येयानि, तत्रैवंभूते सर्वाकाशस्य बहुमध्यदेशभागे, किमित्याह—सुप्रतिष्ठितसंस्थानो लोकः—पंचास्तिकायसमुदयरूपः कथितो जिनवरैः, तत्र सुप्रतिष्ठितः काष्ठत्रयनिष्पन्नो भाजनाधारभूतो लोके प्रतीत आस्खलकः, आ समन्तादधः पतद्भाजनं स्खलति-निवारयतीत्यास्खलकः, अत एव सुप्रतिष्ठितः सुष्ठु प्रतिष्ठितं भाजनाद्यस्मिन्निति कृत्वा, सुप्रतिष्ठितस्येव संस्थानम्-आकारो यस्यासौ सुप्रतिष्ठितसंस्थानो लोकः, उपलक्षणं चैष सुप्रतिष्ठितः तदुपर्यवाङ्मुखीकृतशरावादिभाजनस्य, यत आस्खलकवल्लोकोऽधस्तात् क्रमेण विस्तीर्णो मध्ये संक्षिप्तः, उपर्यपि क्रमेण विस्तीर्णो ब्रह्मलोकं यावत्तदुपरि तु पुनरपि संक्षिप्तः सिद्धिक्षेत्रं यावत्, ततश्चेत्थं ब्रह्मलोकपर्यन्त एव लोकः सुप्रतिष्ठितसंस्थानो भवति, सिद्धिक्षेत्रपर्यन्तस्तु चिन्त्यमान उपर्यवाङ्मुखीकृततिलकादिभाजनसुप्रतिष्ठितोपम एव भवतीति भावनीयमिति गाथार्थः ॥ १८३ ॥ अस्य च लोकस्याधस्तादधोलोको मध्ये तिर्यग्लोकः उपरिष्टादूर्ध्वलोक इत्यतोऽमीषां त्रयाणामपि विभागानां पृथक् संस्थाननिरूपणार्थमाह—

**हेट्ठा मज्झे उवरिं वेत्तासणझल्लरीमुइंगनिभो । मज्झिमवित्थाराहियचोद्दसगुणमायओ लोओ ॥ १८४ ॥**

अधस्ताद्वेत्रासनसन्निभोऽयं लोकः, यादृशः श्लक्ष्णवेत्रलतानिर्मितोऽधस्ताद्विस्तीर्ण उपरि किञ्चित् संक्षिप्त आसनविशेषो भवति, लोकोऽपि रत्नप्रभोपरितलादधस्तात्क्रमेण विस्तरतस्तादृश एव भवति, 'झल्लरि' उभयतोऽतिविस्तीर्णमुखो जावालपुरादिप्रसिद्धो वादित्रविशेषः मध्ये-तिर्यग्लोकप्रदेशे लोकस्तादृशो भवति, यथा हि झल्लरीवादित्रस्योर्ध्वव्यवस्थापितस्योपरिष्टादधस्ताच्चातीव विस्तीर्णता वृत्तता च मध्यं तु स्तोकं दृश्यते, एवं तिर्यग्लोकलक्षणे मध्यलोकेऽप्यध उपरि च प्रत्येकं सातिरेकरज्जु-

विस्तीर्णो मध्ये त्वष्टादशयोजनशतोच्छ्रयत्वात् स्तोक इति, मृदङ्गोऽप्यध उपरि च किञ्चित् संक्षिप्तो मध्ये किमपि विस्तीर्णे प्रतीतो वादित्रविशेष एव, ततश्च लोकोऽप्युपरितनभागे ऊर्ध्वलोकलक्षणे तिर्यग्लोकोपरितनभागात् सिद्धिक्षेत्रं यावच्चिन्त्यमानस्तत्सदृशो भवति, तदेवं सामान्यतो विशेषतश्च निरूपितं लोकस्य संस्थानम्, साम्प्रतं तु तस्यैवोर्ध्वाधआयतत्वप्रमाणं निरूपयितुमाह—'मज्झिमे' त्यादि, मध्यमश्चासौ विस्तारश्च मध्यमविस्तारः, अधिकं च तच्चतुर्दशगुणं चाधिकचतुर्दशगुणं, मध्यमविस्तारादधिकचतुर्दशगुणं मध्यमविस्ताराधिकचतुर्दशगुणं अनुस्वारोऽलाक्षणिकः मध्यमविस्ताराधिकचतुर्दशगुणेन प्रमाणेनेति गम्यते आयतो-दीर्घो मध्यमविस्ताराधिकचतुर्दशगुणायतो लोक इति समासः, भावार्थस्तूच्यते-तत्रास्यां रत्नप्रभायां बहुसमत्वभागे मेरुमध्ये नभःप्रदेशप्रतरद्वयं विद्यते, इदं चायामतो विस्तारतश्च प्रत्येकं परिपूर्णरज्जुप्रमाणं, सर्वलोकमध्यवर्तित्वाच्चैतत्प्रतरद्वयं मध्यममुच्यते, तस्य सम्बन्धी रज्जुप्रमाणो विस्तारोऽत्र मध्यमविस्तारो निर्दिष्टस्तस्मादधिकचतुर्दशगुणः सर्वोऽपि लोको भवति, सातिरेकचतुर्दशरज्जुप्रमाणदैर्घ्योपेतः समस्तोऽपि लोक इति तात्पर्यं, अन्यत्र सम्पूर्णचतुर्दशरज्ज्वायतो लोकः श्रूयते, अत्र तु किञ्चित्साधिकत्वमुक्तं, तत्त्वं तु केवलिनो विदन्तीति गाथार्थः ॥ १८४ ॥ आह—ननु यदि त्रिधा विभक्तोऽयं लोकस्तर्हि कथ्यतां तिर्यग्लोके जीवादेः किं स्पर्शनीयमस्तीत्याशङ्क्याह—

मज्झे य मज्झलोयस्स जंबुदीवो य वट्टसंठाणो। जोयणसयसाहस्सो विच्छिण्णो मेरुनाभीओ॥ १८५ ॥

ऊर्ध्वलोकाधोलोकयोर्मध्यवर्तित्वान्मध्यलोकः- तिर्यग्लोकस्तस्य मध्यभागे समस्तद्वीपसमुद्राभ्यन्तरे जम्बूद्वीपनामा द्वीपः समस्ति,

तत्र द्वाभ्यां प्रकाराभ्यां स्थानदातृत्वाहाराद्युपष्टम्भहेतुत्वलक्षणाभ्यां प्राणिनः पातीति द्वीपः, शाश्वतेन रत्नमयजम्बूवृक्षेणोपलक्षितो द्वीपो जम्बूद्वीपः, स च सम्पूर्णचन्द्रमण्डलमिव वृत्तसंस्थानो-वर्त्तुलाकारस्तथा वृत्तत्वादेव पूर्वापरेण दक्षिणोत्तरेण च योजनशतसहस्रविस्तीर्णो-लक्षयोजनविस्तारः, अपरं च मेरुर्नाभौ-मध्यप्रदेशे यस्यासौ मेरुनाभिक इति गाथार्थः ॥ १८५ ॥ तस्यापि पार्श्वतः किमस्तीत्याह–

**तं पुण लवणो दुगुणेण वित्थडो सव्वओ परिक्खिवइ । तं पुण धायइसंडो तद्दुगुणो तं च कालोओ ॥ १८६ ॥**

तं पुनर्यथोक्तस्वरूपं जम्बूद्वीपं ‘ लवणो ’ लवणरसास्वादो लवणसमुद्रस्ततो द्विगुणेन विस्तीर्णो द्विलक्षयोजनविस्तार इत्यर्थः सर्वतः-सर्वेषु पार्श्वेषु परिक्षिपति-वेष्टयति, तमपि लवणसमुद्रं शाश्वतरत्नमयधातकीवृक्षखण्डोपलक्षितो द्वीपो धातकीखण्डस्तद्द्विगुणो-लवणसमुद्रप्रमाणाद् द्विगुणप्रमाणश्चतुर्लक्षयोजनविस्तार इत्यर्थः, सर्वतः परिक्षिपतीत्यत्रापि सम्बध्यते, तमपि धातकीखण्डद्वीपं शुद्धोदकरसास्वादः कालोदनामा समुद्रः सर्वतः परिक्षिपति, तद्द्विगुण इतीहापि सम्बध्यते, धातकीखण्डद्वीपप्रमाणादपि द्विगुणप्रमाणोऽयमष्टयोजनलक्षविस्तीर्ण इत्यर्थ इति गाथार्थः ॥ १८६ ॥ ततोऽपि किमित्याह–

**तं पुण पुक्खरदीवो तम्मज्झे माणुसोत्तरो सेलो । एतावं नरलोओ बाहिं तिरिया य देवा य ॥ १८७ ॥**

तमपि कालोदसमुद्रं पुष्कराणि-पद्मानि तैः शाश्वतरत्नमयैरुपलक्षितो द्वीपः पुष्करद्वीपः, सर्वतः परिक्षिपति तद्द्विगुण इतीहाप्यपेक्षणीयम् , कालोदप्रमाणाद् द्विगुणप्रमाण इत्यर्थः, षोडशयोजनलक्षविस्तार इति हृदयम् , तस्य च पुष्करद्वीपस्य मध्ये-

मध्यभागे कालोदसमुद्रादष्टभिर्योजनलक्षैर्वलयाकारो मानुषोत्तरनामा शैल -पर्वत' समस्ति, एतावानेव च मानुषोत्तरपर्वतपर्यन्तो नराणां जन्ममृत्युमदाऽवस्थितिस्थानभूतो लोको नरलोको विज्ञेय', परतो नराणां जननमरणसदाऽवस्थानाभावात्, तर्हि तत्रहि किमस्तीत्याह– मानुषोत्तरपर्वतात् बहिस्तिर्यञ्चो देवास्तत्रगर्यथावास्थिता' सर्वदैव प्राप्यन्ते, न मनुष्या इति गाथार्थ ॥ १८७ ॥

आह-ननु पुष्करद्वीपात् परतो द्वीपसमुद्रा सन्ति न वेत्याह–

एव दीवसमुद्दा दुगुणदुगुणवित्थरा असंखेज्जा। एव तु तिरियलोगो सयभुरमणोदहि' जाव ॥ १८८ ॥

एव यथा पूर्वमुक्तास्तथाऽन्येऽपि द्वीपसमुद्रा वक्तव्या', कियन्त ? इत्याह- असख्येया द्वीपसमुद्रा॰, असख्येयकस्य च प्रमाण प्रागेव निर्णीतम्, कथम्भूतास्ते वक्तव्या ? इत्याह- यथोत्तर द्विगुणद्विगुणविस्तारा, तथाहि पुष्करद्वीपात् परतस्ततो द्विगुणप्रमाण शुद्धोदकरसास्वाद एव पुष्करोद समुद्रो वाच्य', ततोऽपि वरुणवरो द्वीप वारुणीरसास्वादो वरुणोद॰ समुद्र ४, तत' क्षीरवरो द्वीप क्षीररसास्वाद क्षीरोद समुद्र ५, ततोऽपि घृतवरो द्वीप, घृतरसास्वादो घृतोद समुद्र ६, ततोऽपीक्षुवरो द्वीप, इक्षुरसास्वाद एवेक्षुरस॰ समुद्र ७, इत ऊर्ध्वं सर्वे समुद्रा द्वीपसदृशनामानोऽवगन्तव्या, अपर च स्वयम्भूरमणवर्जा॰ सर्वेऽपि ते इक्षुरसास्वादा विज्ञेया॰, तत्र द्वीपनामान्यमूनि, तद्यथा इक्षुरससमुद्रादनन्तर नन्दीश्वरो द्वीप' ८, अरुणवर ९ अरुणावास १० कुण्डलवर ११ शखवर १२ रुचकवर १३ इत्यनुयोगद्वारचूर्ण्यभिप्रायेण त्रयोदशो रुचकवर, अनुयोगद्वारसूत्रे त्वरुणावासशखवरद्वीपौ लिखितौ न दृश्येते तस्तदभिप्रायेणैकादशो रुचकवर, परमार्थं तु योगिनो विदन्तीति, नन्दीश्वरादिद्वीपानामन्तरे

समुद्राः स्वद्वीपसदृशनामानः स्वयमेव बोद्धव्या इत्युक्तमेव, एते च जम्बूद्वीपादयो रुचकवरपर्यन्ता द्वीपसमुद्रा नैरन्तर्येणावस्थिताः नामतः प्रतिपादिताः, इत ऊर्ध्वं नैरन्तर्येणावस्थितानां द्वीपानामसंख्येयत्वात् प्रत्येकं नामानि कथयितुं न शक्यंते, अतोऽसंख्याततमद्वीपानां कियतामपि नामानि कथ्यन्ते, तद्यथा- रुचकवरद्वीपादसंख्येयान् द्वीपसमुद्रान् गत्वा भुजगवरो नाम द्वीपः समवसेयः, ततोऽप्यसंख्येयांस्तानतिक्रम्य कुशवरो नाम द्वीपो ज्ञातव्यः, ततोऽप्यसंख्येयांस्तानुल्लङ्घ्य क्रौञ्चवरो नाम द्वीपः, एवमसंख्येयानसंख्येयान् द्वीपसमुद्रानतिवर्त्य- "आभरणवत्थ गंधे उप्पल तिलए य पुढविनिहिरयणे। वासहरदहनईओ विजया वक्खार कप्पिंदा ॥ १ ॥ कुरु मंदर आवासा कूडा नक्खत्त चंद सूरा य। देवे नागे जक्खे भूए य सयंभुरमणे य ॥२॥" अस्मिन् सिद्धान्तोक्तगाथाद्वयप्रतिपादिताभरणवस्त्रगन्धोत्पलातिलकादिवस्तुपर्यायसदृशनामक एकैको द्वीपस्तावद्वक्तव्यो यावदन्ते स्वयम्भुरमणो द्वीपः, तत्परतस्तु शुद्धोदकरसास्वादः स्वयम्भुरमणः समुद्रः, आह- यद्येवं तर्ह्यसंख्येयानसंख्येयान् द्वीपानातिक्रम्य ये वर्त्तन्ते तेषामेव द्वीपानामेतानि नामान्यभिहितानि, ये तु तदन्तरालेषु द्वीपास्ते किंनामका इति वक्तव्यम् , सत्यं, लोके पदार्थानां शंखध्वजकलशस्वस्तिकश्रीवत्सादीनि यावन्ति शुभनामानि तैः सर्वैरप्युपलक्षितास्ते द्वीपाः प्राप्यन्त इति स्वयमेव द्रष्टव्यम्, उक्तं च समयसागरे- "दीवसमुद्दा णं भंते! केवइया नामधेज्जेहिं पण्णत्ता? गोयमा! जावइया लोए सुभा नामा सुभा रूवा सुभा गन्धा सुभा रसा सुभा फासा एवइया णं दीवसमुद्दा नामधेज्जेहिं पण्णत्त"त्ति, यावन्ति शंखध्वजादीनि शुभनामानि यावन्तश्च शुभरूपगन्धादिवाचका ध्वनयस्तद्वाच्या असंख्येया द्वीपा ज्ञातव्या इति भावः, समुद्रास्तु द्वीपसदृशनामान इत्युक्तमेव, तदेवमेते यथोत्तरं द्विगुणाद्विगुणविस्तारा असंख्येया द्वीपसमुद्राः परिभावनीयाः, एवं चासंख्येयद्वीपसमुद्रान्वितः स्वयम्भुरमणसमुद्रं यावत् तिर्यग्लोको मन्तव्यः,

ऊर्ध्वलोकोऽधोलोकयो समयपरिभाषया तिर्यङ् मध्ये व्यवस्थितो लोकस्तिर्यग्लोक', अथवा तिर्यक्शब्दोऽत्र मध्यमत्ववाचकः,त तत्र तिर्यङ्-मध्यपरिणामवन्ति द्रव्याणि लोक्यन्ते दृश्यन्ते केवलिना अस्मिन्निति तिर्यग्लोक', अत्र हि क्षेत्रानुभावादेव सर्वाण्यपि प्रायो मध्यमपरिणामवन्ति द्रव्याणि भवन्ति, न तूर्ध्वलोकवदुत्कृष्टपरिणामवन्ति नाप्यधोलोकवन्निकृष्टपरिणामवन्तीति भाव इति गाथार्थ ॥ १८८ ॥ ननु-उक्त तिर्यग्लोके जीवादे' स्पर्शनीय वस्तु, अधोलोके किं जीवादे स्प्रष्टव्यमस्तीति निवेद्यताम्, उच्यते— रत्नप्रभादिका सप्त पृथिव्य ,तर्हि तासां किं तिर्यक् प्रमाणमिति कथ्यतां, सान्तरा निरन्तरा वा एता इति चावेद्यतामधोऽधोवर्ति- न्यश्चोपर्युपरिवर्तिपृथिवीभ्य' सकाशात् किं अधिकविस्तरा समानविस्तरा वा इत्येतच्च प्रतिपाद्यताम्, इत्याशङ्क्याह—

तिरियं लोगायाम पमाण हेट्ठा उ सव्वपुढवीण । आगासतरियाउ विच्छिन्नयरा उ हेट्ठेट्ठा ॥ १८० ॥

तिर्यग्लोके स्पर्शनीय वस्तूक्तम्, ' हेट्ठा उ ' त्ति अधस्तात् पुन सप्त नरकपृथिव्यो द्रष्टव्या इत्युपस्कार , 'सव्वपुढवीण'- ति तासा च सर्वपृथिवीना ' तिरियं ' तिर्यक् पूर्वापरेण दक्षिणोत्तरेण वा प्रमाण विज्ञेयमिति सण्टङ्क , कियदित्याह— लुप्तविभक्तिकत्वान्निर्देशस्य लोकायाम, इदमुक्त भवति—यावत्प्रमाण तिर्यग्लोकाकाश तावत्प्रमाणास्तिर्यग्गता अपि सप्त पृथिव्यो भवन्ति, अत्राह—तिर्यग्लोकायामो लोक यावदस्ति, न चैता सप्त पृथिव्योऽलोके स्पृष्टा , पृथिव्यलो- कयोरन्तरे " छच्चेव अद्धपचमजोयणमद्ध च हुति रयणाए " इत्यादिना ग्रन्थेन घनोदधिघनवाततनुवातवलयाना केवलस्य स्तोकाकाशस्य चागमे प्रतिपादितत्वात् तत् कथमुच्यते लोकायामस्तासा तिर्यक्प्रमाणमिति, सत्य, किन्तु बहुतरे

लोकाकाशे तिर्यक् पृथिव्यस्तावत् सर्वा अपि वर्तन्ते, यत्र तु पर्यन्तवर्तिनि कियत्यपि स्वल्पे न वर्तन्ते, तदिहाल्पत्वादेव न विवक्षितमित्यदोषः, अत्र च "तिरियं लोयपमाणं, तिरियं लोगायामं पमाण" मित्यादि पाठान्तराणि दृश्यन्ते, तान्यप्युक्तानुसारेण व्याख्येयानि । 'आगासंतरिया उ' त्ति आकाशेन-असङ्ख्येययोजनसहस्रविस्तीर्णनभःखण्डेन सप्तापि पृथिव्यः परस्परमन्तरिता आकाशान्तरिताः, इदमुक्तं भवति-रत्नप्रभायाः परतोऽधस्तादसङ्ख्येययोजनसहस्रविस्तीर्णाकाशखण्डेनान्तरिताव्यवहिता शर्कराप्रभा व्यवस्थिता, न पुनर्निरन्तरा, तदधस्ताद्वालुकाप्रभाऽपीत्थमेव स्थिता, एवं यावत् षष्ठपृथिव्याः परेणाधस्तादसंख्यातयोजनसहस्रविस्तरेणाकाशेन व्यवहिता सप्तमपृथ्वी व्यवस्थिता, न तु निरन्तरा, उक्तञ्च—"इमीसे णं भंते ! रयणप्पभाए पुढवीएय सक्करप्पभाए पुढवीएय केवइयं अबाहाए अंतरे पण्णत्ते? गोयमा! असंखेज्जाइं जोयणसहस्साइं अबाहाए अंतरे पण्णत्ते, एवं ताव छट्ठीणं भंते! तमाए पुढवीए अहे सत्तमाए य पुढवीए केवइयं अबाहाए अंतरे पण्णत्ते ? गोयमा ! असंखेज्जाइं जोयणसहस्साइं अबाहाए अंतरे पण्णत्ते ॥" 'विच्छिण्णयराउ हिट्ठेट्ठ' त्ति अधोऽधोविस्तीर्णतराश्चैताः सप्तापि पृथिव्यो मन्तव्याः, लोकोऽधस्तात् क्रमेण विस्तीर्णः, तिर्यग्वदायतप्रमाणाश्चैताः समनन्तरमेव निरूपिता इति सामर्थ्याल्लोकविस्तारानुसारतः पृथिवीनामधोऽधो विस्तरः सिद्ध एवेति गाथार्थः ॥ १८९ ॥ तदेवं निरूपितमधोलोकेऽपि स्पर्शनीयं वस्तु, साम्प्रतमूर्ध्वलोकस्य तावत् स्वरूपनिर्णयमाह—

उड्ढं पएसवुड्ढी निद्दिट्ठा जाव बंभलोगोत्ति । अद्धुट्ठा खलु रज्जू तेण परं होइ परिहाणी ॥ १९० ॥

पूर्वोक्तलोकमध्यगतरत्नप्रभाप्रतरद्वयमध्ये उपरितनपतरादूर्ध्वमङ्गुलासङ्ख्येयभागारोहेऽङ्गुलासङ्ख्येयभागवृद्ध्या प्रदेशवृद्धिर्जिनेन्द्रादौ ' निर्दिष्टा ' कथिता, कियद्दूरं यावदित्याह–' ब्रह्मलोक ' पञ्चम कल्प यावदिति, ननु रज्जुप्रमाणेन कियत्प्रमाणेय प्रदेशवृद्धिरवगन्तव्येत्याह–'अद्धुट्ठा खलु रज्जु ' त्ति अर्द्धचतुर्थरज्जुप्रमाणासौ लोकस्योर्ध्वं प्रदेशवृद्धिरित्यर्थ , ' तेण पर होइ परिहाणी' त्ति, ततोऽर्द्धचतुर्थरज्जुभ्य परेणाङ्गुलासङ्ख्येयभागारोहाङ्गुलासंख्येयभागहान्या प्रदेशहानिर्लोकान्त यावद्भवति, साप्यर्द्धचतुर्थरज्जुप्रमाणेत्यवसेयम्, अर्द्धचतुर्थशब्दस्योभयत्रापि सम्बन्धात्, अ त्राह ननु यदि ऊर्ध्वलोके अर्धचतुर्थरज्जुप्रमाणा प्रदेशवृद्धिस्तत्प्रमाणैव च परत प्रदेशहानि', तर्हि सम्पूर्णसप्तरज्जुप्रमाण एवोर्ध्वलोक प्रोक्तो भवति, किञ्चिन्न्यूनसप्तरज्ज्वात्मकश्चैष सिद्धान्ते श्रूयते, सत्य, किञ्चिन्न्यूनत्वस्याल्पत्वेनेहाविवक्षितत्वाददोष , तदेव ब्रह्मलोक यावदर्द्धचतुर्थरज्जुप्रमाण लोकपर्यन्तेन तु सप्तरज्जुप्रमाण क्षेत्र जीवाजीवाना स्पर्शनीयत्वेनाप्रोक्तमित्यप्यवगन्तव्यमिति गाथार्थ ॥ १९० ॥ ननु यद्येव तर्हि प्रत्येकमीशानादीनपि देवलोकान् यावत् कियद्रज्जुप्रमाण जीवादिस्पर्शनीय क्षेत्रमस्तीत्युच्यतामित्याशङ्क्याह–

ईसाणम्मि दिवड्ढा अड्ढाइज्जा य रज्जु माहिंदे । पचेव सहस्सारे छ अच्चुए सत्त लोगते ॥ १९१ ॥

पूर्वोक्ताल्लोकमध्यात् सौधर्मेशानदेवलोकौ यावत् सार्द्धरज्जु सार्द्धरज्जुप्रमाण स्पर्शनीय क्षेत्रमित्यर्थ , एव सनत्कुमारमाहेन्द्रौ यावत् सार्द्धरज्जुद्वयमान सहस्रार यावत् पञ्चरज्जुप्रमाण आरणाच्युतौ यावत् षड्रज्जुप्रमाण लोकान्त यावत् सप्तरज्जुप्रमाण, अनन्तरगाथायामूर्ध्वप्रदेशवृद्धिहानिप्रसगेन लोकान्ते सप्त रज्जव' प्रोक्ता', इह तु मुख्यत इति न पौनरुक्त्यमाशङ्कनी-

यामिति गाथार्थः ॥ १९१ ॥ आह-ननूक्तं सर्वमपि लोकगतं स्पर्शनीयं वस्तु, केवलमेतद्वक्तव्यम्-किमेते वक्ष्यमाणाः स्पर्शका मिथ्यादृष्ट्यादयो जीवाः स्वरूपस्था एवैतत् स्पृशन्त्याहोश्वित् केनचिदवस्थाविशेषेणेति, अत्रोच्यते, उभयथापि स्पृशन्ति, यद्येवं तर्हि स्वरूपस्थता तावद् बुध्यत एव, अवस्थाविशेषस्तु क इति निवेद्यतां, अत्राभिधीयते, समुद्घातसप्तकलक्षणोऽवस्थाविशेषः, के तर्हि ते सप्त समुद्घाता इत्यत्राह—

वेयण कसाय मरणे वेउव्विय तेयए य आहारे । केवलियसमुग्घाए सत्त य मणुएसु नायव्वा ॥ १९२ ॥

सम्-एकीभावेन उत्-प्राबल्येन हननं-वेदनीयादिकर्मप्रदेशानां निर्जरणं घातः, समेकीभावमापन्नस्य जन्तोरुत्प्राबल्येन घातः समुद्घातः, तत्र केन सहैकीभावगमनं जीवस्येति चेदुच्यते, यदा आत्मा वेदनादिसमुद्घातगतस्तदा वेदनाद्यनुभवज्ञानपरिणतो भवति नान्यज्ञानपरिणत इति वेदनाद्यनुभवज्ञानेन सहैकत्वापत्तिर्जीवस्यावगन्तव्या, प्राबल्येन घातः कथं तर्हि ?, अत्रोच्यते, यस्माद्वेदनादिसमुद्घातपरिणतो जन्तुर्बहून् वेदनीयादिकर्मप्रदेशान् कालान्तरानुभवयोग्यानुदीरणाकरणेनाकृष्योदये प्रक्षिप्यानुभूय च निर्जरयतीति तस्यामवस्थायां प्राबल्येन घात उच्यते इति समुद्घात इति स्थितं, स च वेदनादिभेदेन सप्तधा भिद्यते, तद्यथा—वेदनासमुद्घातः कषायसमुद्घातो मारणान्तिकसमुद्घातो वैक्रियसमुद्घातस्तैजससमुद्घात आहारकसमुद्घातः केवलिसमुद्घात इति । तत्र वेदनया-असद्वेदनीयोदयजनितया पीडया हेतुभूतया समुद्घातो वेदनासमुद्घातः, वेदनाऽऽकुलितो व्याकुलीभूतो जीवः स्वप्रदेशाननन्तानन्तकर्मस्कन्धवेष्टितान् शरीराद् बहिरपि प्रक्षिपति, तैश्च प्रदेशैर्जठरमुखनासिकादिशुषिराणि कर्ण-

समुद्घाताः

स्कन्धाद्यन्तरालानि चापूर्यायामतो विस्तरतश्च शरीरमात्रं क्षेत्रमभिव्याप्यान्तर्मुहूर्त्तं यावत्तिष्ठति, तस्मिंश्चान्तर्मुहूर्ते प्रभूतासात-वेदनीयकर्मपुद्गलशातं करोति, ततः समुद्घातान्निवृत्य स्वरूपस्थो भवति १, कषायैः क्रोधादिभिर्हेतुभूतैः समुद्घातः कषायसमुद्घातः, तीव्रकषायोदयाकुलितो हि प्राणी स्वप्रदेशाननन्तानन्तकर्मस्कन्धवेष्टितान् बहिः प्रक्षिपति, तैश्च प्रदेशैरुदरास्यकण्ठादिशुषिराणि कर्णस्कन्धाद्यन्तरालानि च पूरयित्वा आयामविस्ताराभ्यां देहमात्रं क्षेत्रमभिव्याप्यान्तर्मुहूर्त्तं यावत्तिष्ठति, तत्र चान्तर्मुहूर्ते प्रभूत-कषायमोहनीयकर्मपुद्गलशातं विदधाति, समुद्घातान्निवृत्त्य स्वरूपस्थो जायत इति २, मरणमेव प्राणिनामन्तकारित्वादन्तो मरणान्तः तत्र भवो मारणान्तिकः स चासौ समुद्घातश्च मारणान्तिकसमुद्घातः, मरणसमयेऽन्तर्मुहूर्त्तशेषे स्वायुषि केचिदसुमन्तोऽमुं कुर्वन्तीति मार-णान्तिक उच्यते, अयं चेत्थं द्रष्टव्यस्तद्यथा-कश्चिज्जीवोऽन्तर्मुहूर्त्तशेषे स्वायुषि स्वशरीरविष्कम्भबाहल्यान्वितमायामतस्तु जघन्यतोऽङ्गु-लासंख्येयभागमात्रं उत्कृष्टतस्त्वसंख्येयानि योजनानि शरीराद् बहिः स्वप्रदेशदण्डं निसृजति, निसृज्य च यत्र स्थानेऽग्रेतनभवे समुत्पत्स्यते तत्र स्थाने तं स्वप्रदेशदण्डं प्रक्षिपति, तच्चोत्पत्तिस्थानं ऋजुगत्या एकेनैव समयेन प्रदेशदण्डः प्राप्नोति, विग्रहगत्या तूत्कृष्टतः पूर्ववच्चतुर्थे समये प्राप्नोति, अयमपि च मारणान्तिकसमुद्घातोऽन्तर्मौहूर्त्तिक एव, तस्मिंश्चान्तर्मुहूर्ते प्रभूतायुः कर्मपुद्गलशातं करोति ३, वैक्रियशरीरना-मकर्मविषयः समुद्घातो वैक्रियसमुद्घातः, अथवा वैक्रियशरीरकरणकालविषयः समुद्घातो वैक्रियसमुद्घातः, अयमपि चेत्थं प्रतिपत्तव्यो, यथा वैक्रियशरीरलब्धिमान् जीवो वैक्रियकरणकाले विष्कम्भबाहल्याभ्यां शरीरप्रमाणं आयामतस्तु जघन्यतोऽङ्गुलसंख्येयभाग-मात्रं उत्कृष्टतः पुनः संख्येयानि योजनानि शरीराद् बहिः स्वप्रदेशदण्डं निसृजति, निसृज्य च यथास्थूलान् वैक्रियशरीरनामकर्म-पुद्गलान् प्रागबद्धान् शातयति, यत उक्तम् 'वेउव्वियसमुग्घाएणं समोहणइ समोहणित्ता संखेज्जाइं जोयणाइं दंडं निसिरइ २ अहाबायरे

पुग्गले परिसाडेइ' त्ति, अयमपि च समुद्घातोऽन्तर्मौहूर्तिक एव, ततः परं वैक्रियसमाप्त्या स्वरूपस्थत्वादिति ४, तेजःशब्देन तैजसशरीरमभिधीयते, तत्कारणभूतं चोपचारात्तैजसशरीरनामकर्माप्युच्यते, ततश्च तेजोविषयः समुद्घातस्तेजःसमुद्घातः, अयमपीत्थं भावनीयः- यथा तेजोनिसर्गलब्धिमान् क्रुद्धः साध्वादिः सप्ताष्टौ पदान्यवष्वष्क्य विष्कम्भबाहल्याभ्यां शरीरमानं आयामतस्तु जघन्यतोऽङ्गुलसंख्येयभागमुत्कृष्टतः पुनः संख्येयानि योजनान्यनन्ततैजसशरीरस्कन्धवेष्टितानां जीवप्रदेशानां दण्डं शरीराद् बहिः प्रक्षिपति, ततः क्रोधविषयीकृतं मनुष्यादि निर्दहति, एषोऽपि समुद्घातोऽन्तमुहूर्तप्रमाण एव, तत्र चान्तर्मुहूर्ते प्रभूतांस्तैजःशरीरनामकर्मपुद्गलान् शातयति, ततोऽन्तर्मुहूर्त्तात् समुद्घातान्निवृत्त्य स्वरूपस्थो भवति ५, आहारकशरीरनामकर्मविषयः समुद्घातः आहारकसमुद्घातः, यद्वा आहारकशरीरकरणकालविषयः समुद्घात आहारकसमुद्घातः, अयमपि वैक्रियसमुद्घातवदेव भावनीयः, तथाहि-आहारकशरीरलब्धिमान् चतुर्दशपूर्ववित् आहारकशरीरकरणकाले विष्कम्भबाहल्याभ्यां शरीरमानं आयामतस्तु जघन्यतोऽङ्गुलसंख्येयभागमुत्कृष्टतस्तु संख्येयानि योजनानि शरीराद् बहिः स्वप्रदेशदण्डं निसृजति, निसृज्य च यथास्थूलान् नामकर्मपुद्गलान् प्राग्बद्धान् शातयति, अयमप्यन्तर्मुहूर्त्तमानः, अन्तर्मुहूर्त्ताच्च समुद्घातान्निवर्त्तत इति ६, केवलिनः समुद्घातः केवलिसमुद्घातः,तत्करणसमये च भगवान् केवली अन्तर्मुहूर्त्तमुदीरणावलिकायां कर्मप्रक्षेपव्यापाररूपमावर्जीकरणं करोति, ततः समुद्घातं गच्छति तस्य चायं क्रमः, तद्यथा-प्रथमसमये तावत् स्वदेहविष्कम्भबाहल्योपेत आयामतस्तूर्ध्वाधोलोकान्तगामिनं जीवप्रदेशसंघातरूपं दण्डं केवलज्ञानाभोगतः करोति, द्वितीयसमये तु तमेव दण्डं पूर्वापरदिग्द्वयप्रसारणात्तिर्यग्लोकान्तगामिनं कपाटमिव कपाटं विदधाति, तृतीयसमये तमेव कपाटं दक्षिणोत्तरदिग्द्वयप्रसारणात्तिर्यग्लोकान्तगामिनमेव मन्थानमिव मन्थानं करोति, एवं च लोकस्य प्रायो

वह् पूरित भवति, मध्यन्तराणि चापूरितानि प्राप्यन्ते, जीवप्रदेशानामनुश्रेणिगमनादिति, चतुर्थसमये तान्यपि सह लोकनिष्कुटै पूरयति, तथा च समस्तोऽपि लोक पूरितो भवति, ननु लोकमध्ये स्थितो यदा केवली समुद्घात करोति तदा तृतीयेऽपि समये लोक. पूर्यत एव, किं चतुर्थसमयेऽन्तरपूरणेनेति, नैतदेव, लोकस्य मध्य हि मेरुमध्य एव सम्भवति, तत्र च प्रायः समुद्घातकर्तुः केवलिनोऽसम्भव एव, अन्यत्र च समुद्घात कुर्वतस्तस्य तृतीयसमयेऽन्तराण्युद्धरन्त्येवेति परिभावनीयम्, तदनन्तर च पचमसमये यथोक्तक्रमात् प्रतिलोम मध्यन्तराणि सहरति, प्रसृतान् जीवप्रदेशान् सङ्कोचयतीत्यर्थ , षष्ठे समये मन्थानमुपसह- रति, सप्तमे तु समये कपाट सङ्कोचयति, अष्टमे तु समये दण्डमपि सहृत्य शरीरस्थ एव भवति, तदेवमष्टसामयिक केवलिसमुद्घात , पूर्वोक्तास्तु षडपि समुद्घाता अन्तर्मौहूर्तिका एव, एतेषु चाष्टस्वपि समयेषु केवली प्रभूतान् वेदनीयादिकर्मपुद्गलान् शातयतीति ७। आह–नन्ववगता' स्वरूपत सप्ताप्येते समुद्घाता , केवलममी सर्वेऽपि केषा जन्तूना प्राप्यन्ते इत्याशङ्क्याह–' सत्त मणुएसु नायव्व ' त्ति सप्ताप्येते पूर्वोक्ता समुद्घाता , मनुष्येषु–मनुष्यजातौ नानाजीवानाश्रित्य प्राप्यन्त इत्यर्थ इति गाथार्थ' ॥ १९२ ॥ शेषजीवानां मध्ये तर्हि कस्य कियन्त समुद्घाता' प्राप्यन्त इत्याशक्याह—

पज्जत्तबायरानिल नेरइएसु य हवति चत्तारि । पचसु तिरियपचिदिएसु सेसेसु तिगमेव ॥ १९३ ॥

वैक्रियकरणलब्धिमतां पर्याप्तबादरवायूना नारकाणां चाद्याश्चत्वार समुद्घाता भवति, तेज समुद्घातस्त्वमीषां न भवति, तल्लब्धेरेतेष्वभावाद्, आहारकसमुद्घातोऽपि न भवति, चतुर्दशपूर्वविदामेव तत्सम्भवात्, केवलिसमुद्घातोऽप्येषु न भवति, क्षायिक-

ज्ञानदर्शनचारित्रवतामेव तत्सम्भवादिति, सुरेषु संज्ञिपंचेन्द्रियतिर्यक्षु चाद्याः पंच समुद्घाता भवन्ति, तेजःसमुद्घातलब्धेरपि तेषु सम्भवाद्, आहारककेवलिसमुद्घाताभावे तु हेतुः पूर्वोक्त एव, उक्तशेषेषु पृथिव्यप्तेजोबादरपर्याप्तवर्जवायुवनस्पतिषु द्वित्रिचतुरिन्द्रिया-संज्ञिपंचेन्द्रियतिर्यग्लक्षणेषु च जीवेष्वाद्यसमुद्घातत्रिकमेव भवति, वैक्रियसमुद्घातादिलब्धिशून्यत्वादेषामिति गाथार्थः ॥१९३॥ तदेवं निरूपिताः समुद्घातानां स्वामिनोऽथ तेषामेव कालविशेषनिरूपणार्थमाह–

**दंड कवाडे रुयए लोए चउरो य पडिनियत्तंते । केवलिय अट्ठसमए भिन्नमुहुत्तं भवे सेसा ॥ १९४ ॥**

पूर्वोक्तन्यायेन प्रथमे समये दण्डो, द्वितीये कपाटः, तृतीये रुचको मन्था इत्यर्थः, चतुर्थे तु लोकः सर्वोऽप्यापूर्यत इत्येवं चत्वारः समयाः, प्रतिनिवर्त्तमानेऽपि समुद्घाते पूर्वोक्तयुक्त्यैव चत्वार एव समया भवन्तीत्येवं केवलिसमुद्घातोऽष्टसामयिकः, शेषास्तु समुद्घाताः सर्वेऽप्यन्तर्मौहूर्तिका इत्येतत् सर्वं प्रागेव भावितार्थमिति गाथार्थः ॥ १९४ ॥ तदेवं प्राग् निरूपितं लोकादिकं स्पर्शनीयं क्षेत्रं, ततः स्पर्शकानामवस्थाविशेषश्च समुद्घातरूपो निदर्शितः, स्पर्शकास्तु मिथ्यादृष्टिसास्वादनादयश्चतुर्दश जीवस-मासाः प्रस्तुता एव, अतस्तेषां मध्ये कः कियत् क्षेत्रं स्पृशतीत्याह–

**मिच्छेहिं सव्वलोओ सासणमिस्सेहिं अजयदेसेहिं । पुट्ठा चउदसभागा बारस अट्ठऽट्ठ छच्चेव ॥ १९५ ॥**

मिथ्यादृष्टिभिः सूक्ष्मैकेन्द्रियादिभिः यथास्वं स्वरूपस्थैः समुद्घातगतैश्च प्रत्येकं प्रागुक्तयुक्त्या सर्वोऽपि लोकः सर्वदैव स्पृष्टः

मिथ्यादृगादीनां स्पर्शना

प्राप्यते, सास्वादनादीनां द्वादशादिभिः सह यथासङ्ख्येन सम्बन्ध, स चेत्थ द्रष्टव्य -'पुट्ठा चउदस भागा बारसे' ति चतुर्दशाना पूरणश्चतुर्दश भाग'-सर्वस्यापि लोकस्यांश, ततश्च सर्वस्यापि लोकस्य चतुर्दशरज्ज्वात्मकत्वात् तच्चतुर्दशभाग एका रज्जुरुच्यते, ता द्वादश पुनश्चतुर्दशभागा द्वादश रज्जवोऽभिधीयन्ते, अत सामान्येन सास्वादनसम्यग्दृष्टिर्द्वादश रज्जू स्पृशतीत्यर्थ, लोकस्य द्वादशरज्जुप्रमाण क्षेत्र स्पृशतीति यावदिति, तथाहि षष्ठपृथिवीतो नारक सास्वादनसम्यक्त्वसमन्वितो यदाऽत्र तिर्यग्लोके समुत्पद्यते तदा पञ्चरज्जुप्रमाण क्षेत्र स्पृष्ट भवति, यदा पुनरिहत्य एव तिर्यग्मनुष्ययोरन्यतरः सास्वादनसम्यक्त्वान्वित उपरि लोकान्ते कार्मग्रन्थिकमतेन ईषत्प्राग्भारपृथिव्यादिरूपेणोत्पद्यते तदा तस्य सप्तरज्जुप्रमाणक्षेत्रस्पर्शो लभ्यत इति, इत्थमेक सास्वादनगुणस्थानमाश्रित्य द्वादशाना लोकचतुर्दशांशानां स्पर्शना प्राप्यते, न त्वेक सास्वादनजीवमाधिकृत्य, एवम-न्यत्रापि यथासम्भवमेकगुणस्थानापेक्षयैव स्पर्शना द्रष्टव्या, प्रस्तुतसूत्राभिप्रायाच्चाधोलोकपृथ्वीकायिकादिषु अत स्थानात् सास्वादनो न गच्छत्येव, अन्यथा तिर्यग्लोकात्तस्योर्ध्वमधश्चोत्पद्यमानस्य त्रयोदशरज्जुस्पर्शोऽपि लभ्येत, सप्तमपृथ्वीनारकश्च सा-स्वादनभाव परित्यज्यैवात्रोत्पद्यत इति षष्ठनरकपृथिवीनारक एवेह निर्दिष्ट, मिश्र-सम्यग्मिथ्यादृष्टिगुणस्थानकजीवैरष्टौ लोकस्य चतुर्दशांशा स्पृष्टा प्राप्यन्ते, लोकस्यैतेऽष्ट रज्जू स्पृशन्तीत्यर्थ, कथमित्यत्रोच्यते, यदा सम्यग्मिथ्यादृष्टिर्भवनवास्यादिदेव पूर्वसांगतिकेनाच्युतदेवलोकदेवेन स्नेहात्तत्र नीयते तदा षड्रज्जुसस्पर्श 'छ अच्चुए' इति वचनात्, तथा सम्यग्मिथ्यादृष्टयः सहस्रारान्ता देवा पूर्वसांगतिकस्य नारकस्य वेदनोपशमनार्थं पूर्ववैरिकस्य वा वेदनोदीरणार्थं यदा तृतीयनरकपृथिव्या गच्छन्ति तदा भवनवासिदेवेभ्योऽधस्ताद्रज्जुद्वयेन तृतीयनरकपृथिव्या सद्भावात् पूर्वोक्तषड्रज्जुभ्य उपर्यधिक रज्जुद्वय लभ्यत इति

सामान्यतः सम्यग्मिथ्यादृष्टिजीवा अष्टरज्ज्वात्मकं क्षेत्रं स्पृशन्ति, अथवा सम्यग्मिथ्यादृष्टिः सहस्रारदेवलोकामरः पूर्वोक्तकारणात्तृतीयनरकपृथ्वीं गच्छन् सप्त रज्जूः स्पृशतीति, स एव च सहस्रारदेवोऽच्युतदेवेन स्नेहात्तत्र नीयमानो रज्जुमेकामन्यामपि स्पृशतीति सर्वा अप्यष्ट रज्जव इति, आनतादिदेवास्त्वल्पस्नेहादिभावात् सांगतिकादिप्रयोजनेनापि नरकं न गच्छन्तीत्यत्र सहस्रारान्तग्रहणं, सम्यग्मिथ्यादृष्टयश्च तद्भावे वर्त्तमानाः कालं न कुर्वन्तीत्यत्र भगस्थानामेव तेषां स्पर्शना चिन्तितेति भावनीयम्, अविरतसम्यग्दृष्टयोऽप्यष्ट रज्जूः स्पृशन्ति, भावना त्विह सम्यग्मिथ्यादृष्टिवदेवेति प्रस्तुतगाथाऽभिप्रायो लक्ष्यते, चिरन्तनटीकाकृताऽपीत्थमतिदेश एव दत्तो, भावनिका तु तथाविधा न काचित् कृता, प्रज्ञप्त्याद्यभिप्रायेण पुनरस्य द्वादशानामपि रज्जूनां स्पर्शना लभ्यते, तथाहि-अनुत्तरसुरस्य तत्रोत्पद्यमानस्य तत आगच्छतो वा सप्तरज्जुस्पर्शना तावदुक्तैव, अपरं च नरतिरश्चामन्यतरोऽविरतसम्यग्दृष्टिः पूर्वबद्धायुः क्षायोपशमिकसम्यक्त्वेन गृहीतेनापि प्रज्ञप्त्याद्यभिप्रायेण षष्ठनरकपृथिव्यां नारकत्वेनोत्पद्यते, ततोऽपि वा नारकः क्षायोपशमिकसम्यक्त्ववानत्रागत्य मनुष्येषूत्पद्यत इत्येवमविरतसम्यग्दृष्टिः षष्ठनरकपृथिव्या गच्छन्नागच्छन् वा पञ्च रज्जूः स्पृशतीति सर्वा अपि द्वादश रज्जव इति, सप्तमपृथिव्यां पुनः सम्यक्त्वसहितस्य गमनमागमनं वा प्रज्ञप्त्यामपि निषिद्धमिति षष्ठनरकपृथ्वीग्रहणमित्यलं विस्तरेणेति । देशविरतस्तु मनुष्य इतः स्थानान्मृत्वाऽच्युतदेवलोक उत्पद्यमानः षड् रज्जूः स्पृशति, न च वक्तव्यं-कथं तत्रोत्पद्यमानो देवत्वादविरतसम्यग्दृष्टिरेवायं न देशविरत इति सत्यम्, यो हि ऋजुगत्या एकेन समयेन तत्रोत्पद्यते तस्य पूर्वभवायुः क्षीयमाणं न क्षीणं पूर्वभवशरीरमपि च मुच्यमानममुक्तमिति प्राग्भवायुःशरीरसम्पन्नत्वादृजुगत्यां देशविरत एवायमित्यदोषः, तदेवं च 'छट्ठा चउदसभागा बारसे' त्यादिको ग्रन्थो

यथासङ्ख्येन सास्वादनादीनां योजित इति गाथार्थ ॥ १९५ ॥ अथोक्तशेषाणां प्रमत्तादीनां स्पर्शनामाह–

सेसेहऽसंखभागो फुसिओ लोगो सजोगिकेवलिहिं। एगाईओ भागो बीयाइसु णरग पुढवीसु ॥१९६॥

उक्तशेषै प्रमत्ताप्रमत्तापूर्वकरणादिगुणस्थानकर्वर्तिभिर्लोकस्यासङ्ख्येयतमो भाग स्पृष्ट, एते हि भवान्तराले वर्त्तमानाः प्रमत्तसयतादिभाव परित्यज्यासयतत्व प्रतिपद्यन्ते, अत स्वस्थानस्था एव गृह्यन्ते, यच्चामीषां भरतैरवतादिक स्वस्थान तल्लोकस्यासङ्ख्येयभाग एवेति तत्स्पर्शिन एवामी निर्दिष्टा, अत्राह–नन्वमीषामप्युपशान्तमोहपर्यन्तानामृजुगत्याऽनुत्तरसुरेषूत्पद्यमानानां सप्तरज्ज्वात्मिका स्पर्शना लभ्यत एव तत् किमिति लोकासङ्ख्येयभाग एवोच्यते ?, यथा हि ऋजुगत्या समयमेक देशविरतत्वमवाप्यते तथाऽमीषां प्रमत्तादिभावोऽपि प्राप्यत एव, उक्ता चैषां सप्तरज्जुस्पर्शना पञ्चसग्रहे- " सग सेसा उ फुसती रज्जू खीणो असखस" मिति वचनात्, सत्यम्, किन्तु ग्रन्थगतिवैचित्र्यादेष प्रकारोऽत्र न विवक्षित इत्यदोष, सयोगिकेवलिभिस्तु केवलिसमुद्घातस्य चतुर्थसमये सर्वोऽपि लोक. स्पृष्ट प्राप्यते॥ तदेव चतुर्दशानामपि जीवसमासानां निर्दिष्टा स्पर्शना, ते च जीवसमासा नरकगत्याद्याश्रिता इत्यतो नरकगतौ तावत् स्पर्शनां निरूपयितुमाह–' एकादिक ' आदिशब्दाद् द्वित्र्यादिपरिग्रह भागो लोकस्य रज्जुस्वरूपश्चतुर्दशोऽश , द्वितीयादिकासु नरकपृथिवीषु स्पर्शना द्रष्टव्या, तथाहि द्वितीयनरकपृथिव्या य इहागच्छति यो वाऽत स्थानात्तस्यां गच्छति स लोकस्य चतुर्दशांशरूपामेकां रज्जु स्पृशति, तृतीयनरकपृथिव्या तु गच्छन्नागच्छन् वा रज्जुद्वय स्पृशति, चतुर्थपृथिव्यां तु रज्जुत्रय, एव यावत् सप्तमपृथिव्या गच्छन्नागच्छन् वा जन्तु षड् रज्जू स्पृशतीति गाथार्थः ॥ १९६ ॥ अथ

किञ्चित् समानवक्तव्यत्वात्तिर्यङ्मनुष्यगतिस्पर्शना युगपदेव पश्चाद्वक्ष्यत इति चेतसि निधाय देवगतिमाधिकृत्य तावदाह–

**ईसाणंता मिच्छा सासण नव मिस्स अविरया अट्ठ। अट्ठ सहस्सारंतिय छलच्चुया ऽसंखभागुप्पिं** ॥१९७॥



भवनपत्यादय ईशानान्ता देवा मिथ्यादृष्टयः सास्वादनाश्च नव रज्जूः स्पृशन्ति, तथाहि-भवनपतिव्यन्तरा ज्योतिष्कास्तावत् पूर्वोक्तकारणादधस्तृतीयनरकपृथ्वीं यावद्गच्छन्तो रज्जुद्वयं स्पृशन्ति, उपरि चेषत्प्राग्भारादिपृथिवीकायिकेषूत्पद्यमानाः सप्त रज्जूः स्पृशन्तीति सर्वा अपि नव, सौधर्मेशानदेवा अपि मिथ्यादृष्टिसास्वादनाः तृतीयपृथिवीं यावत् गच्छन्तः सार्धं रज्जुत्रयं स्पृशन्ति, उपरि चेषत्प्राग्भारादिपृथ्वीकायिकेषु उत्पद्यमानाः सार्धं पंचरज्जुकं स्पृशन्तीति सर्वा अपि नव रज्जव इति, '**मिस्स अविरया अट्ठत्ति**' एत एव भवनपत्यादय ईशानान्ता देवाः सम्यग्मिथ्यादृष्टयोऽविरताश्चाष्ट रज्जूः स्पृशन्ति, इयं चाष्टरज्जुस्पर्शनाऽमीषामधस्तात् तृतीयनरकपृथ्वीं यावद्गच्छतामुपरि च पूर्वसांगतिकदेवेनाच्युतदेवलोकं यावन्नीयमानानां भावनीया, तृतीयपृथिव्यच्युतदेवलोकयोरन्तरेऽष्टरज्जुसद्भावादिति, '**अट्ठ सहस्सारंतिय**'त्ति सामान्येन मिथ्यादृष्ट्यादिस्वरूपाः सनत्कुमारादिसहस्रारान्तिका अपि देवा अष्ट रज्जूः स्पृशन्ति, इयमप्यष्टरज्जुस्पर्शना एतेषामधस्तात् तृतीयपृथ्वीं यावद्गच्छतामुपरि चाच्युतदेवलोके पूर्वसाङ्गतिकदेवेन नीयमानानां तथैव परिभावनीया, अत्राह-ननु 'अट्ठ य पाणयअंतिय' त्ति कस्मान्नोक्तं ?, प्राणतान्तानामपि देवानामनया युक्त्याऽष्टरज्जुस्पर्शनासम्भवादिति, सत्यम्, किन्त्वेवं मन्यते अल्पमोहत्वादानतादयो देवा नरकेषु वेदनोदीरणादिनिमित्तं न गच्छन्त्येव, पूर्वसाङ्गतिकदेवेनापि च नीय-

नरैस्तिर्यग्भिश्च सर्वोऽपि लोको व्याप्तः प्राप्यते, तत्र नराणां केवलिसमुद्घातचतुर्थसमये सर्वलोकव्यापिताऽवगन्तव्या, अन्ये तु व्याचक्षते-मिथ्यादृष्टयो मनुष्याः सर्वत्रोर्ध्वमधस्तिर्यक् चोत्पद्यमानास्तत्र आगच्छन्तश्च वेदनामारणान्तिकसमुद्घाताभ्यां सर्वलोकं व्याप्नुवंतीति, एतच्च व्याख्यानं वयं तावन्नागच्छामः, यतोऽर्द्धतृतीयद्वीपसमुद्रमध्यमात्रवर्त्तित्वेन स्तोका एव मनुष्याः, अतो यदि ते शेषजीवेषूत्पद्यमाना विवक्ष्यन्ते, शेषजीवाश्च तेषूत्पद्यमानास्तद्रूपत्वेन गृह्यन्ते, वेदनामारणान्तिकसमुद्घातावस्था च विवक्ष्यते, तथापि सर्वलोकव्यापित्वममीषां नावगम्यते, अपरं च पंचेन्द्रिया " उववाएणं समुग्घाएणं सट्ठाणेणं लोयस्स असंखेज्जइभागे " इति वचनात् प्रज्ञापनायां सर्वेषामपि पंचेन्द्रियाणां सर्वलोकव्यापिता निषिद्धा, किं पुनः केवलमनुष्याणां ?, तस्मात् केवल्यपेक्षयैव नराणां सर्वलोकव्यापित्वमवगम्यत इति, तिर्यंचस्तु मिथ्यादृष्टयः सूक्ष्मैकेन्द्रियाद्यपेक्षया सर्वलोकव्यापिनो बुध्यन्त एवेति। ' सत्तासाणेहिं ' त्ति सास्वादनैस्तिर्यग्मनुष्यैरीषत्प्राग्भारापृथिव्यादिषूत्पद्यमानैः सप्त रज्जवः स्पृष्टा, इतश्च मृतः सास्वादनः किञ्चित् शुभत्वादूर्ध्वमेव गच्छति, नाधस्ताद्,अत एव सूत्रोपन्यासाद्, यदि पुनरधस्तादपि गच्छेत्तदा त्रयोदशरज्जुसंस्पर्शो प्युक्तः स्यादिति, यस्तु सास्वादननारकः षष्ठनरकपृथिव्यादिभ्यः समागत्येह तिर्यग्मनुष्यत्वेनोपजायते सोऽपान्तराले वर्तमानोऽग्रेतनायुष्कोदयेऽप्यग्रेतनशरीराप्राप्तेर्नारकत्वेनैव विवक्षितः, अन्यथा सास्वादनतिर्यग्मनुष्याणां द्वादश रज्ज्वात्मिकापि स्पर्शना स्यादिति, ' छऽजयगिहीहिं ' ति अयताः—अविरतसम्यग्दृष्टयो गृहिणस्तु देशविरतश्रावका इह गृह्यन्ते, तैरयतैर्गृहिभिश्च प्रत्येकमतः स्थानादच्युतदेवलोके समुत्पद्यमानैः षड् रज्जवः स्पृश्यन्ते, एते चेहायता गृहिणश्च सामर्थ्यान्मनुष्या एव बोद्धव्याः, नतु तिर्यञ्चः, तेषां सहस्रारमेव यावदुत्पत्तेः षड्रज्जुसंस्पर्शाभावादिति, ' मिस्सेहऽसंखभागो ' त्ति मिश्रैः—सम्यग्मिथ्यादृष्टि-

भिस्तिर्यङ्मनुष्यैस्तदवस्थायां मरणासम्भवेनान्यत्रोत्पत्त्यभावात् स्वस्थानरूपो लोकासंख्येयभाग एव स्पृष्ट' ॥ तदेव तिरश्चां सामान्येन स्पर्शना प्रोक्ता, साम्प्रत तेषामेव बादरैकेन्द्रियादिभेदभिन्नानां विशेषतस्तामभिधित्सुरिदमाह- ' विगलिंदीहिं ' ति 'सव्वजग' ति द्वित्रिचतुरिन्द्रियलक्षणैर्विकलेन्द्रियैरुत्पादसमुद्घातावस्थयो सर्वं जगत्-सर्वोऽपि लोको व्याप्त प्राप्यते इत्यर्थ', एष तावत् प्रस्तुतग्रन्थाभिप्राय , प्रज्ञापनायां तूत्पादसमुद्घातस्वस्थानैर्लोकासंख्येयभागवर्तिन एव विकलेन्द्रिया. सर्वेऽप्युक्तास्तदेव च युक्तिसङ्गत उच्यते, स्वल्पत्वादमीषा, तत्त्व तु बहुश्रुता एव विदन्तीति गाथार्थ ॥ १९८ ॥ उक्तमेवार्थं सविशेषमभिधित्सुराह-

बायरपज्जत्तावि य सयला विगला य समुहउववाए। सव्वं फोसंति जगं अह एव फोसणाणुगमो ॥ १९९ ॥

पृथिव्यादिबादरपर्याप्तैकेन्द्रिया' सम्पूर्णपञ्चेन्द्रियतिर्यग्लक्षणा सकला द्वित्रिचतुरिन्द्रियस्वरूपा विकलाश्च ' समुह '-त्ति समुद्घातावस्थायां ' उववाए ' त्ति विग्रहगतिलक्षणोत्पादावस्थायां च ' सर्वं जगत् ' सर्वं लोक स्पृशन्तीत्येषोऽपि प्रस्तुत-ग्रन्थाभिप्राय एव, प्रज्ञापनाऽभिप्रायतस्तु तिर्यंचो बादरपर्याप्तपृथिव्यप्तेज कायिका. पचेन्द्रिया विकलेन्द्रियाश्च सर्वेऽपि स्वल्पत्वादुत्पादसमुद्घातस्वस्थाने प्रत्येक लोकासंख्येयभाग एव प्राप्यन्त इति, अस्यां च गाथायां सूक्ष्मैकेन्द्रिया नोक्ता', सर्वलोकव्यापित्वेन तेषां प्रागेवोक्तत्वात्,अपर्याप्तबादरैकेन्द्रियास्त्वस्य ग्रन्थस्याभिप्रायेण स्वस्थानेनापि सर्वलोके व्यापिन एवेति तेऽपीह नोपात्ता , प्रज्ञापनाऽभिप्रायतस्तु बादरापर्याप्तैकेन्द्रिया अप्युत्पादसमुद्घाताभ्यामेव लोक व्याप्नुवन्ति, न स्वस्थानेन,पर्याप्तैकेन्द्रियनिश्रयैव तेषामुत्पत्ते', विकलेन्द्रियाणां सर्वलोकव्यापित्वमनन्तरगाथापर्यन्ते सामान्येनाभिहित, अत्रोत्पादसमुद्घातावस्था-

विशेषितं तदपि प्रोक्तमिति न पुनरुक्तता शंकनीयेति, तदेवं जीवगतां स्पर्शनामभिधायोपसंहरन्नाह–'अह एवं फोसणाणुगमो' त्ति अथानन्तरमपरोऽप्येवमुक्तानुसारेण जीवसमासस्पर्शनाया अनुगमो-विचारो बुद्धिमताऽभ्यूह्य कर्त्तव्य इति गाथार्थः ॥ १९९ ॥ तदेवमभिहिता जीवस्पर्शना, साम्प्रतं तत्प्रतिपक्षभूतत्वप्रत्यासत्त्याऽजीवस्पर्शनामभिधित्सुराह—

**आइदुगं लोगफुडं गयणमणागाढमेव सव्वगयं। कालो नरलोगफुडो पोग्गल पुण सव्वलोगफुडा ॥ २०० ॥**

इह तावत् पञ्चाजीवद्रव्याणि-धर्माधर्माकाशास्तिकायाः पुद्गलाः कालश्च, तत्रादौ द्विकमादिद्विकं-धर्माधर्मास्तिकायलक्षणं लोकस्पृष्टं, सर्वमपि लोकं स्पृष्ट्वा स्थितमित्यर्थः, गगनम्-आकाश पुनरनवगाढं, इदमुक्तं भवति-सर्वेऽपि जीवा अजीवाश्चाकाश एवावगाढाः, आकाशं पुनरन्यत्र क्वचिदपि नावगाढं, अतस्तदेवाकाशं जीवैरजीवैश्च स्पृष्टत्वेन प्ररूप्यते, आकाशेन पुनरन्यत् किमपि स्पृष्टं नोच्यत इति भावः, तर्हि तद्गगनं कियत्प्रमाणमित्याह—'तं तु सव्वगयं' ति तत् पुनर्गगनं सर्वत्र-लोकेऽलोके च गतं-स्थितं लोकालोकव्यापीत्यर्थः, 'कालः' चन्द्रसूर्यगतिक्रियाऽभिव्यङ्ग्योऽर्द्धतृतीयद्वीपसमुद्रलक्षणं नरलोकमेव स्पृशति, परतः पुनश्चन्द्रसूर्याणां गतिक्रियाया एवाभावात् समयावलिकादिरूपकालस्यासम्भव एवेतिभावः, पुद्गलास्तु सर्वमेव लोकं स्पृशन्ति, सर्वलोकाकाशवर्त्तित्वात्तेषामिति गाथार्थः ॥ २०० ॥ तदेवमजीवानामप्यभिहिता स्पर्शना, तदभिधाने च स्पर्शनाद्वारं समाप्तमिति। 'अथ संतपयपरूवणया दव्वपमाणं च' त्यादिगाथाऽभिहितं क्रमप्राप्तं कालद्वारमभिधित्सुराह—

**कालो भवाउकायट्ठिई य तह गुणविभागकालं च। वोच्छामि एक्कजीवं नाणाजीवे पडुच्चा य ॥ २०१ ॥**

'कालो' त्ति काल' पूर्वोक्तशब्दार्थ समयावलिकादिरूपस्तावदिह प्ररूपणीय इति शेषः, स च प्राक् प्ररूपित एवेति नेह प्ररूप्यते, सामान्येन कालप्ररूपणानन्तर च भवायु काल कायस्थितिकाल गुणविभागकाल च वक्ष्यामीति, द्वितीयान्तः कालशब्द सर्वत्र सम्बध्यते, तत्र नारकादिभवानामन्यतरो विवक्षित एको भव एक जन्मस्थान तत्र भवे आयुर्भवायुस्तद्विषय' कालो दशवर्ष-सहस्रादिकस्तमेकजीव नानाजीवांश्चाश्रित्य वक्ष्यामीति सम्बन्ध, तथा 'काय' पृथिव्यप्कायादिस्तत्रैकैकस्मिन् काये मृत्वा पुन॰ पुनरुत्पद्यमानस्य तद्भावमपरित्यजतो जीवस्य स्थिति कायस्थितिस्तद्विषय' काल कायस्थितिकालोऽसङ्ख्येयोत्सर्पिण्यवसर्पिण्यादिकस्त च वक्ष्यामीति सण्टक, तथा गुणा मिथ्यादृष्टिसास्वादनादिगुणस्थानलक्षणाश्चतुर्दश तेपा विभागेन पार्थक्येन तद्भावापरित्या-गविपय॰ कालो गुणविभागकाल त च एकजीव नानाजीवाश्चाश्रित्य वक्ष्यामीति योग, तदेव भवायुष्कादिविपयभेदाद् त्रिविध' कालोऽत्र वक्तव्य इति गाथार्थ ॥ २०१ ॥ तत्र क्रमेण सप्तसु नरकपृथ्वीष्वेकैकनारकस्यैकैकभवायुर्लक्षण काल तावदुक्तुमाह—

एगं च तिण्णि सत्त य दस सत्तरसेव हुंति बावीसा। तेत्तीस उयहिनामा पुढवीसु ठिई कमुक्कोसा ॥२०२॥

महत्त्वसाम्यादुदधिनामशब्देन सागरोपममिहाभिप्रेत, ततश्चैकैकनारकस्यैकैकस्मिन् भवे रत्नप्रभादिपु सप्तसु पृथ्वीपु क्रमे-णोत्कृष्टा स्थितिरिय प्रतिपत्तव्या, तद्यथा रत्नप्रभायामेकस्य नारकस्यैकस्मिन् भवे एक सागरोपममुत्कृष्टा स्थिति, शर्करप्रभायां त्रीणि वालुकाप्रभायां सप्त पङ्कप्रभाया दश धूमप्रभाया सप्तदश तम प्रभाया द्वाविंशति सागरोपमाणि एकस्य नारकस्यैकत्र भवे उत्कृष्टा स्थिति, सप्तमनरकपृथिव्यामेकस्य नारकस्यैकत्र भवे त्रयस्त्रिंशत् सागरोपमान्युत्कृष्टा स्थितिरिति गाथार्थ॰ ॥२०२॥

नारकाणां भवस्थितिः

अथैतास्वेव सप्तसु नरकपृथिवीषु नारकायुषो जघन्यां स्थितिमाह—

**पढमादि जमुक्कोसं बीयादिसु सा जहण्णिया होइ । घम्माए भवणवंतर वाससहस्सा दस जहण्णा ॥२०३॥**

प्रथमादिपृथिवीषु यदुत्कृष्टमायुः प्रतिपादितं द्वितीयादिषु पृथिवीषु सैव जघन्या स्थितिर्भवतीति मन्तव्यम्, तथाहि-प्रथमपृथिव्यां या सागरोपमलक्षणा उत्कृष्टा स्थितिरुक्ता द्वितीयपृथिव्यां सैव जघन्या स्थितिः, द्वितीयपृथिव्यां तु या सागरोपमत्रयलक्षणा उत्कृष्टा स्थितिरभिहिता तृतीयपृथिव्यां सैव जघन्या स्थितिः, एवं तावन्नेयं यावत् षष्ठपृथिव्यां या द्वाविंशतिसागरोपमलक्षणा उत्कृष्टा स्थितिरावेदिता सैव सप्तमपृथिव्यां जघन्या स्थितिर्वेदितव्या, नन्वेवं सति घर्माभिधानायां प्रथमपृथिव्यामद्यापि जघन्या स्थितिर्न निवेदिता भवति, अतः सा निवेद्यतामित्याशंक्य प्रथमपृथिवीनारकाणां तत्प्रसंगतो जघन्यस्थित्या समानत्वाद् भुवनपतिव्यन्तराणां च जघन्यां स्थितिमभिधित्सुराह-' **घम्माए** ' इत्यादि, घर्माभिधानप्रथमपृथ्वीनारकाणां भवनपतिव्यन्तराणां च दश वर्षसहस्राणि जघन्या स्थितिर्विज्ञेयेति गाथार्थः ॥ २०३ ॥ ननु यदि भवनपतिव्यन्तराणां दश वर्षसहस्राणि जघन्या स्थितिस्तदा उत्कृष्टा तेषां कियत्प्रमाणाऽसौ भवतीत्याशङ्क्यासुरकुमारादिभवनपतीनां व्यन्तराणां चोत्कृष्टां स्थितिमाह-

**असुरेसु सारमहियं सड्ढं पल्लं दुवे य देसूणा । नागाईणुक्कोसा पल्लो पुण वंतरसुराणं ॥ २०४ ॥**

इह भवनपतयोऽसुरकुमारादिभेदाद्दशधा श्रुतसागरे पठ्यन्ते, तद्यथा "असुरा नाग सुवण्णा विज्जू अग्गी य दीव उदही या। दिसि वाउ तहा थणिया दसभेया हुति भवणवई ॥१॥" त्ति, एते चासुरकुमारादयो दशापि पुनर्द्विभेदा मेरुगिरेर्दक्षिणदिग्वर्त्तिन उत्तरदिग्वर्त्तिनश्च, तत्र 'असुरेसु सार' ति मेरुदक्षिणदिग्वर्तिष्वसुरकुमारेषूत्कृष्टा स्थितिरेकं सागरोपममित्यर्थः, 'अहियं' ति उत्तरदिग्वर्त्तिषु त्वसुरकुमारेषु तदेव सागरोपमं किञ्चिदधिकमुत्कृष्टा स्थितिर्ज्ञातव्येति, नागकुमारादीनामादिशब्दात् सुवर्णकुमारविद्युत्कुमारादीनां दक्षिणदिग्वर्त्तिनां सार्द्धपल्योपममुत्कृष्टा स्थितिः, उत्तरदिग्वर्त्तिनां तु तेषामेव नागकुमारादीनां देशोनपल्योपमद्वयमुत्कृष्टा स्थितिर्भवति, उत्तरदिग्वर्त्तिनो ह्येते स्वभावादेव शुभाश्चिरायुषश्च भवन्ति, दक्षिणदिग्वर्त्तिनस्तु तद्विपरीता इति, व्यन्तरसुराणां तु पिशाचभूतयक्षादिभेदतोऽष्टविधानामपि पल्योपममेवोत्कृष्टा स्थितिर्भवति, दक्षिणदिग्वर्त्यसुरकुमारप्रभुचमरेन्द्रदेवीनां तु सार्द्धं पल्योपमत्रयमुत्कृष्टमायुः, उत्तरदिगसुरकुमाराधिपबलीन्द्रदेवानां तूत्कृष्टमायुः सार्द्धानि चत्वारि पल्योपमानि, नागकुमारादिनवनिकायदेवीनां तूत्तरदिग्वर्त्तिनीनां देशोनं पल्योपममुत्कृष्टमायुः, दक्षिणदिग्वर्त्तिनीनां तु तासामेव देवीनां व्यन्तरीणां चार्द्धपल्योपममुत्कृष्टमायुरित्येतत् स्वयमेव द्रष्टव्यम्, जघन्यं तु सर्वत्र प्रागभिहितं दशवर्षसहस्ररूपमेवेति गाथार्थः ॥२०४॥ अथ ज्योतिष्कदेवानामायुःप्रमाणमाह—

पल्लट्ठभाग पल्लं च साहियं जोइसे जहण्णियरं। हेट्ठिल्लुओसट्ठिई सक्काईणं जहण्णा सा ॥ २०५ ॥

सामान्येन ज्योतिषां पल्योपमस्याष्टमो भागो जघन्यमायुः, इतरत् पुनः उत्कृष्टं तेषामेव साधिकं पल्योपममायुः, वर्षलक्षाधिकं पल्यो-

पमामित्यर्थः, विशेषतः कस्य ज्योतिषः किमायुरीति चेद् ? उच्यते,- ज्योतिष्कदेवास्तावच्चन्द्रादित्यग्रहनक्षत्रतारकभेदात् पञ्चविधास्तद्देव्योऽपि पञ्चविधा इति सर्वेऽपि दशविधाः, तत्र चन्द्राणां पल्योपमचतुर्थांशो जघन्यमायुरुत्कृष्टं तु वर्षलक्षाधिकं पल्योपममिति १, तद्देवीनां पल्योपमचतुर्थांशो जघन्यमायुरुत्कृष्टं तु पञ्चाशद्वर्षसहस्राधिकं पल्योपमार्द्धमिति २, आदित्यानामपि जघन्यमायुश्चन्द्रवदेव, उत्कृष्टं तु वर्षसहस्राधिकं पल्योपममिति ३, तद्देवीनामपि जघन्यं चन्द्रदेवीवदेव, उत्कृष्टं तु पंचवर्षशताधिकं पल्योपमार्द्धमिति ४, भौमबुद्धादीनां तु शेषग्रहाणां जघन्यं सूर्यवदेव, उत्कृष्टं तु पल्योपमं ५, तद्देवीनामपि जघन्यं सूर्यदेवीसदृशमेव उत्कृष्टं तु पल्योपमार्द्धमिति ६, अश्विन्यादिनक्षत्राणां तु जघन्यं ग्रहतुल्यमेव, उत्कृष्टं तु पल्योपमार्द्धमिति ७, तद्देवीनां तु जघन्यं ग्रहदेवीसमानमेव, उत्कृष्टं तु साधिकः पल्योपमचतुर्थांश इति ८, तारकदेवानां जघन्यं पल्योपमस्याष्टमांशः, उत्कृष्टं तु पल्योपमचतुर्थांशः ९, तद्देवीनां तु जघन्यं पल्योपमस्याष्टभागः, उत्कृष्टं तु साधिकः पल्योपमाष्टभाग एव १०, तदेतद्दशस्वपि स्थानेषु विशेषतो ज्योतिष्काणां जघन्येतरभेदभिन्नमायुः द्रष्टव्यम्, तदुक्तम्-"चंदाइच्चगहाणं नक्खत्ताणं च देविसहियाणं । अट्ठण्हंपि जहण्णं आऊ पलियस्स चउभागो ॥ १ ॥ पलिओवमट्ठभाओ तारयदेवाण तह य देवीणं । होइ जहण्णं आउं एत्तो उक्कोसगं वोच्छं ॥२॥ पलियं च वरिसलक्खं चंदाणं सूरियाण पलियं तु । वरिससहस्सेणऽहियं गहाण पलिओवमं पुण्णं ॥ ३ ॥ नक्खत्ते पलियद्धं तारयदेवाण पलियचउभागो । ससिदेवीणं आउं उक्कोसं होइ पलियद्धं ॥ ४ ॥ पण्णाससहस्सेहिं वासाणऽहियं तहेव पलियद्धं । पणवाससयऽब्भहियं रविदेवीणं परं आउं ॥ ५ ॥ पलिओवमस्स अद्धं गहदेवीणं तहेव सविसेसो । पलिओवमचउभागो आउं नक्खत्तदेवीणं ॥ ६ ॥ तारयदेवीणंपिहु उक्कोसं आउयं विणिद्दिट्ठं । पलिओवमट्ठभाओ अहिओ किंची विसेसेण ॥ ७ ॥"

इत्यल प्रसगेन । अथ वैमानिकदेवाना जघन्यस्थितिनिरूपणार्थमाह–' हेट्ठिल्लुक्कोसे ' त्यादि, शक्रशब्देन पूर्ववत् सौधर्मदेवलोकोऽभिधीयते, ततश्च सौधर्मादिदेवलोकानां ग्रैवेयकानुत्तरविमानसहितानां मध्ये उपर्युपरितनानां ' हेट्ठिल्ल ' शब्दोपादानादय सामर्थ्यलब्धोऽध्याहार, सा जघन्या स्थितिर्या किमित्याह–' हेट्ठिल्लुक्कोसाठिइ ' त्ति, अधोऽधोवर्त्तिना या उत्कृष्टा स्थिति उपर्युपरिवर्त्तिना सैव जघन्या स्थितिरित्यर्थ, तथाहि–यैव सौधर्मदेवलोके सागरोपमद्वयलक्षणा उत्कृष्टा स्थितिर्वक्ष्यते सैव तदुपरिवर्त्तिनि सनत्कुमारे जघन्या, यैव चेशाने सातिरेकसागरोपमद्वयस्वरूपा उत्कृष्टा स्थितिरभिधास्यते सैव तदुपरिवर्त्तिनि माहेन्द्रे जघन्या, सनत्कुमारोत्कृष्टस्थितिस्तु सागरोपमसप्तकलक्षणा ब्रह्मलोके जघन्या, तदुत्कृष्टस्थितिस्तु दशसागरोपमात्मिका लान्तके जघन्या, तदुत्कृष्टस्थितिरपि चतुर्दशसागरोपमरूपा महाशुक्रे जघन्या, तदुत्कृष्टस्थितिस्तु सप्तदशसागरोपमस्वरूपा सहस्रारे जघन्या, तदुत्कृष्टस्थिति पुनरष्टादशसागरोपमलक्षणा आनते जघन्या, तदुत्कृष्टस्थितिरेकोनविंशतिसागरोपमस्वरूपा प्राणते जघन्या, तदुत्कृष्टस्थितिरपि विंशतिसागरोपमात्मिका आरणे जघन्या, तदुत्कृष्टस्थितिस्त्वेकविंशतिसागरोपमस्वरूपा अच्युतदेवलोके जघन्या, तदुत्कृष्टस्थिति पुनर्द्वाविंशतिसागरोपमरूपा नवाना ग्रैवेयकविमानप्रस्तटाना मध्येऽधस्तनप्रस्तटे जघन्या, एवमेतेषु नवसु ग्रैवेयकविमानप्रस्तटेष्वेकैक सागरोपम वर्द्धयद्भिस्तावन्नेय यावन्नवमप्रस्तटे त्रिंशत्सागरोपमाणि जघन्या स्थिति, तदुत्कृष्टस्थितिस्त्वेकत्रिंशत्सागरोपमलक्षणा विजयादिषु चतुर्ष्वनुत्तरविमानेषु जघन्या स्थिति, सर्वार्थसिद्धविमाने तु जघन्या स्थितिरेव नास्ति, त्रयस्त्रिंशत्सागरोपमलक्षणाया अजघन्योत्कृष्टाया एव स्थितेस्तत्राभिधास्यमानत्वादिति, नन्वेव सति ' हेट्ठिल्लुक्कोसठिई सक्काईण जहण्णा सा ' इत्यनेन सनत्कुमारादीनामेव जघन्या स्थितिर्निरूपिता भवति, न सौधर्मेशान-

वैमानिकानां जघन्यास्थिति

योः, सत्यं, तयोरसौ स्वयमेव द्रष्टव्या, तद्यथा–सौधर्मे जघन्या स्थितिरेकं पल्योपमं, ईशाने तु सातिरेकं पल्योपममित्यलं विस्तरेणेति गाथार्थः ॥ २०५ ॥ अथामीषामेव वैमानिकानामुत्कृष्टां स्थितिमाह–

**दो साहि सत्त साहिय दस चउदस सत्तरेव अट्ठारा । एक्काहिया य एत्तो सक्काइसु सागरुवमाणा ॥ २०६ ॥**

सागरेण महत्त्वसामान्यात् समुद्रेणोपमानम्-उपमा येषां ते सागरोपमानाः-कालप्रमाणविशेषाः, पूर्वोक्तस्वरूपाण्यद्धासागरोपमाणीत्यर्थः, तानि च द्व्यादीनि शक्रादिषु पूर्ववत् सौधर्मादिदेवलोके यथाक्रममुत्कृष्टा स्थितिरिति सामर्थ्याल्लभ्यते, तथाहि-सौधर्मदेवलोके द्वे सागरोपमे उत्कृष्टा स्थितिः, ईशाने तु 'साहि' त्ति, ते एव द्वे सागरोपमे साधिके, सनत्कुमारे तु सप्त सागरोपमाणि, माहेन्द्रे 'साहि' त्ति तान्येव सप्त साधिकानि, ब्रह्मलोके दश लांतके चतुर्दश महाशुक्रे सप्तदश सहस्रारे अष्टादश 'एक्काहिया एत्तो' त्ति इत ऊर्ध्वं प्रतिस्थानमेकैकं सागरोपममधिकं वाच्यम्, तद्यथा–आनते एकोनविंशतिः प्राणते विंशतिः आरणे एकविंशतिः अच्युते द्वाविंशतिरित्येवं ग्रैवेयकविमानप्रस्तटेष्वप्येकैकं सागरोपमं वर्धयितव्यं यावन्नवमग्रैवेयकप्रस्तटे एकत्रिंशत्सागरोपमान्युत्कृष्टा स्थितिरिति, इह च 'एक्काहिया य एत्तो' इति सामान्योक्तावपि व्याख्यानतो विशेषप्रतिपत्तेर्नवमग्रैवेयकपर्यन्तमेवैकाधिकत्वं द्रष्टव्यम्, अनुत्तरविमानेषु तु सागरोपमद्वयेनैवाधिक्यं वाच्यम्, तेषु त्रयस्त्रिंशत्सागरोपमलक्षणाया उत्कृष्टस्थितेरागमेऽनेकस्थानेषु प्रतिपादितत्वाद् तत्रापि सर्वार्थसिद्धे विमाने जघन्यस्थितेरभावात् त्रयस्त्रिंशत्सागरोपमान्यजघन्योत्कृष्टा स्थितिरिति विशेष इति गाथार्थः ॥ २०६ ॥ अथ तिर्यग्गतौ भवायुःकालमभिधित्सुरेकेन्द्रियाणां तावदाह–

**बावीस सत्त तिन्नि य वाससहस्साणि दस य उक्कोसा । पुढविदगानिलपत्तेयतरूसु तेऊ तिराय च ॥ २०७॥**

द्वाविंशत्यादिभिः सह पृथिव्यादीना यथासङ्ख्येन सम्बन्धः, पृथिव्याद्येकेन्द्रियाश्च सूक्ष्मबादराद्यनेकभेदभिन्ना सिद्धान्ते पठ्यन्ते, तेनेह बादरैकेन्द्रियाणामेवोत्कृष्टमेव चायुर्वक्तव्यम्, बादराणा तु जघन्य सूक्ष्मादीनां जघन्येतरभेदभिन्न चायुरुपरिष्टाद् वक्ष्यते, तत्र बादराणां पृथिवीकायिकाना ' बावीस ' त्ति द्वाविंशति वर्षसहस्राण्युत्कृष्टा भवस्थिति., 'सत्त' त्ति बादराप्कायिकानां सप्त वर्षसहस्राणि बादरानिलानां त्रीणि वर्षसहस्राणि बादरप्रत्येकतरूणां दश वर्षसहस्राणि बादरतेज कायिकानां पुनस्त्रिरात्र-त्रीण्यहोरात्राण्युत्कृष्टा भवस्थितिरित्यर्थ इति गाथार्थ ॥ २०७ ॥ अथ द्वीन्द्रियादीनामुत्कृष्ट भवायु.कालमाह—

**बारस अउणप्पन्न छप्पिय वासाणि दिवसमासा य । बेइंदियाइयाण नरातिरियाण तिपल्ल च ॥ २०८ ॥**

द्वादश वर्षाणि द्वीन्द्रियाणामुत्कृष्टा भवस्थितिरित्यादि यथासङ्ख्येन सम्बन्ध , एकोनपञ्चाशद्दिनास्त्रीन्द्रियाणा, षण्मासा श्चतुरिन्द्रियाणां, गर्भजानां नराणां पञ्चेन्द्रियतिरश्चां च त्रीणि पल्योपमान्युत्कृष्टा भवस्थिति., इह च तिर्यग्गतिभवायुःकालप्ररूपणे प्रस्तुतेऽपि यन्मनुष्याणामुत्कृष्टायु प्रतिपादन तत् पल्योपमत्रयोत्कृष्टायु साम्याल्लाघवार्थमिति नासम्बद्धभाषित्वमाशङ्कनीयमिति गाथार्थ ॥ २०८ ॥ इह पञ्चेन्द्रियतिरश्चा सामान्येनैवोत्कृष्टमायुः प्रतिपादित, विशेषचिन्तायां त्वमी सम्मूर्च्छनजलचरादिभेदतो बहुधा भिद्यन्त इति सम्मूर्च्छजजलस्थलचराणा भवायु.कालमाह—

**जलथलखहसंमुच्छिमपज्जत्तुक्कोस पुव्वकोडीओ । वरिसाणं चुलसीई बिसत्तरि चेव य सहस्सा ॥ २०९ ॥**

इहापि जलचरादीनां पूर्वकोट्यादिभिः सह यथासंख्येन संबन्धः, तत्र पर्याप्तसंमूर्छजजलचराणां पूर्वकोटी वर्षाणामुत्कृष्टा भवस्थितिः, पर्याप्तसंमूर्छजस्थलचराणां चतुरशीतिर्वर्षसहस्राण्युत्कृष्टमायुः, पर्याप्तसम्मूर्च्छजखचराणां द्विसप्ततिर्वर्षसहस्राण्युत्कृष्टो भवायुःकाल इति गाथार्थः ॥ २०९ ॥ अथैषामेव जलचरादीनां पर्याप्तगर्भजानामुत्कृष्टं भवायुःकालमाह–

**तेसिं तु गब्भयाणं उक्कोसं होइ पुव्वकोडीओ । तिण्णि य पल्ला भणिया पल्लस्स असंखभागो उ ॥२१०॥**

तेषामेवानन्तरगाथोक्तानां जलचरादीनां गर्भजानां पूर्वकोट्याद्युत्कृष्टमायुरितीहापि यथासंख्येन सम्बन्धः, तत्र पर्याप्तगर्भजजलचराणां पूर्वकोटिर्वर्षाणामुत्कृष्टमायुः पर्याप्तगर्भजस्थलचराणां त्रीणि पल्योपमान्युत्कृष्टमायुः पर्याप्तगर्भजखचराणां पल्योपमस्यासंख्येयभाग उत्कृष्टमायुर्भणितामिति गाथार्थः ॥ २१० ॥ अथ पूर्वोक्तानामेव बादरपृथिव्याद्येकेन्द्रियाणां तथा पर्याप्तसम्मूर्च्छजजलचरस्थलचरखचराणां पूर्वमनुक्तानां साधारणवनस्पत्यादीनां च जघन्याद्यायुःस्वरूपं भवायुःकालमाह—

**एएसिं च जहण्णं उभयं साहार सव्वसुहुमाणं । अंतोमुहुत्तमाऊ सव्वापज्जत्तयाणं च ॥ २११ ॥**

एतेषां पूर्वनिर्दिष्टानां बादरपृथिव्यप्तेजोवायुप्रत्येकवनस्पतीनां पर्याप्तसंमूर्च्छजगर्भजजलचरस्थलचरखचराणां च 'जहण्णं'-ति उत्कृष्टस्य प्रागेव प्रतिपादितत्वात् जघन्यमन्तर्मुहूर्त्तमायुरित्युत्तरेण सम्बन्धः, तदेतत् पूर्वमुत्कृष्टायुःप्रतिपादनक्रमेणोक्ताना-

मेव जन्तूना जघन्यमायुः प्रतिपादितम्, अथ पूर्वमनुक्तानामुभयस्वरूपमप्यायु' प्रतिपादयन्नाह–' साहारे ' त्ति साधारणा-अनन्तकायिकवनस्पतयस्तेषां सूक्ष्मबादरभेदभिन्नानां तथा ' सव्वसुहुमाण ' त्ति उक्तशेषाणां सर्वेषां पृथिव्यप्तेजोवायुलक्षणानां सूक्ष्माणां वनस्पतीनां तु सूक्ष्माणां साधारणवनस्पतिद्वारेणैवोक्तत्वादिति ' उभय ' त्ति जघन्योत्कृष्टस्वरूपमुभयमप्यायुरन्तर्मुहूर्तमेवेत्यत्रापि सम्बध्यते, जघन्यपक्षे तदेवान्तर्मुहूर्तं लघुस्वरूप उत्कृष्टपक्षे तु तदपि बृहत्तरमित्ययमेव जघन्योत्कृष्टयोर्भेदो नान्य इति भाव , एवमुत्तरत्रापि ' सव्वापज्जत्तयाण चे ' ति ये पृथिव्यादयोऽपर्याप्ता एव म्रियन्ते न तु पर्याप्ती' सर्वा समर्थयन्ते तेषामपर्याप्तानामप्युभय-जघन्योत्कृष्टस्वरूपमायुरन्तर्मुहूर्तमेवेति गाथार्थ ॥ २११ ॥ तदेवमेकैक जीवमधिकृत्य भवायु'कालोऽभिहित', साम्प्रतं तदुपसंहारपूर्वक नानाजीवानाश्रित्य तमाह—

एक्कगजीवाउठिई एसा बहुजीविया उ सव्वद्ध। मणुयअपज्जत्ताण असंखभागो उ पल्लस्स ॥ २१२ ॥

एषा पूर्वोक्ता ' एक्कगजीवाउठिइ ' त्ति एकैकस्य रत्नप्रभानारकादिजीवस्यायु स्थितिरुक्ता, ' बहुजीवियाउ सव्वद्धं ' ति बहवो जीवा विषयो यस्या सा बहुजीविका स्थिति., बहुजीवसम्बन्धिनीत्यर्थ , ' सर्वाद्ध ' सर्वकाल द्रष्टव्या, न स कालोऽस्ति यत्र नारका सर्वेऽपि मृत्वा अन्यत्रोत्पद्यन्ते, नरकगतिस्तु तैः शून्या भविष्यतीति, एव तिर्यग्गत्यादिष्वपि वाच्यम्, तस्मान्नानाजीवानां सर्वकाल स्थिति , आह–ननु जीवेषु मूलोत्तरभेदभिन्नेषु सर्वेष्वप्यय. न्यायोऽथ केषुचिदेवेत्याशङ्क्याह–' मणुये ' त्यादि, अपर्याप्ता मनुष्याः कदाचिदेक कदाचिद् द्वा कदाचित्तु बहवः प्राप्यन्ते तावद्यावदुत्कृष्टत. पल्योपमा-

संख्येयभागः, ततः परमवश्यमेवोत्कृष्टतो द्वादश मुहूर्त्तान् यावत् पर्याप्ता एव सर्वेऽपि मनुष्याः प्राप्यन्ते, नैकोऽप्यपर्याप्तो, द्वादशमौहूर्त्तिकस्य मनुष्यगत्युत्पत्तिविरहकालस्यागमे प्रतिपादितत्वादित्यभिप्रायः, ततश्च नानाजीवानप्याश्रित्यायुःस्थितौ चिन्त्यमानायामपर्याप्तमनुष्याणां सर्वकालं सा न लभ्यते, किन्तु पल्योपमासंख्येयभाग एवेति भावः, नरकगतिदेवगत्योर्द्वीन्द्रियादितिरश्चां च कस्यापि कियानपि विरहकालः समये प्रोक्त एव, परं केनाप्यभिप्रायेण नारकादयोऽपर्याप्ताः कियन्तमपि कालमव्यवच्छिन्नाः प्राप्यन्त इतीह न निर्दिष्टं स्थानान्तराच्चावसेयमिति गाथार्थः ॥ २१२ ॥ तदेवमेकजीवं नानाजीवांश्चाश्रित्योक्तो भवायुःकालः, अथ कायस्थितिकालमधिकृत्याह--

**एक्केक्कभवं सुरनारयाओ तिरिया अणंतभवकालं । पंचिंदियतिरियनरा सत्तट्ठभवा भवग्गहणे ॥ २१३ ॥**

इह कायशब्देन पृथिव्यादिकायोऽभिप्रेतः, तत्र काये स्थितिः-अवस्थानं कायस्थितिः,मृत्वा२पुनस्तत्रैवोत्पत्तेः,तमेव च विवक्षितं कायमपरित्यजतो जीवस्य या स्थितिरवस्थानं सा कायस्थितिस्तद्विषयः कालोऽत्राभिधातुमिष्ट इति भावः, तत्र सुरा नारकाश्च स्वकीयस्वकीयनिकाये एकैकमेव भवं यावन्निरन्तरं भवन्ति, ततः परं मृत्वा तिर्यङ्मनुष्ययोरेवोत्पद्यन्ते न पुनस्तत्रैवेत्यर्थः, अतो मृत्वा मृत्वा पुनस्तत्रैवोत्पत्तिलक्षणा कायस्थितिरमीषां न सम्भवति, किन्तु भवस्थितिरेवैतेषु सम्भविनीत्युक्तं भवति, 'तिरिया अणंतकालं' ति सामान्येन तिर्यञ्चो मृत्वा मृत्वा पुनस्तिर्यक्ष्वेवोत्पद्यमाना अनन्तभवकालं यावत्तिष्ठन्ति, अनन्तानन्तान् भवान्तावद्भवसम्बन्धिनमनन्तानन्तोत्सर्पिण्यवसर्पिणीलक्षणं कालं यावदवतिष्ठन्त इत्यर्थः, क्षेत्रतस्त्वसंख्येयान् पुद्गलपरावर्त्तान् यावदवतिष्ठन्ते,

उक्तंच प्रज्ञापनायाम्-"तिरिक्खजोणिए णं भंते! तिरिक्खजोणिएत्ति कालओ केवचिरं होइ?, गोयमा! जहण्णेणं अंतोमुहुत्तं उक्कोसेणं अणंतं कालं, अणंताओ उस्सप्पिणीओसप्पिणीओ कालओ त्ति, खेत्तओ अणंता लोगा असंखेज्जा पोग्गलपरियट्टा, ते णं पोग्गलपरियट्टा आवलियाए असंखेज्जइभागो' त्ति, अथ पंचेन्द्रियतिर्यंच' पंचेंद्रियतिर्यक्ष्वेव मनुष्यास्तु मनुष्येष्वेव पुनः' पुनरुत्पद्यमानाः कियतो भवान् कियन्तं च कालं यावदवतिष्ठन्त इत्याशंक्याह- 'पंचिंदिये' त्यादि, भवानां ग्रहणं पुनः पुनरुत्पादनं भवग्रहणं तस्मिन्-भवग्रहणे विचार्यमाणे, भवग्रहणान्याश्रित्य कायस्थितौ चिन्त्यमानायामिति भावः, सप्त वा अष्टौ वा भवान् यावत्ते तत्रैवोत्पद्यमाना उत्कृष्टतस्तिष्ठन्ति, कालतस्तु सप्त पूर्वकोटीस्तदधिकानि च त्रीणि पल्योपमान्युत्कृष्टतस्तिष्ठन्ति, इदमत्र हृदयम्- यदि सख्यातवर्षायुषः पूर्वकोटीस्थितिका पंचेंद्रियतिर्यंचो नराश्च सख्यातवर्षायुष्केषूत्कृष्टतः पूर्वकोटीस्थितिकेष्वेव च यथाक्रमं पंचेंद्रियतिर्यक्षु नरेषु च पुनः पुनरुत्पद्यन्ते तदा सप्तैव भवग्रहणान्युत्कृष्टतः प्रत्येकममीषा प्राप्यन्ते, कालतस्तूत्कर्षत' सप्तैव पूर्वकोटयो लभ्यन्ते, यदि पुनः सख्यातवर्षायुः सम्बन्धिसप्तमभवग्रहणादनन्तरमेते उत्कृष्टस्थितिष्वसख्यातवर्षायुष्केषु पंचेन्द्रियतिर्यक्षु नरेषु च यथाक्रममेवाष्टमभवे समुत्पद्यन्ते तदाऽनया गत्या सख्यातवर्षायुषामसख्यातवर्षायुषा च भवमीलने प्रत्येकं पंचेन्द्रियतिरश्चां नराणां चाष्टौ भवग्रहणानि लभ्यन्ते, नवमं तु भवग्रहणं न प्राप्यते, असख्यातवर्षायुष्कभवादनन्तरमवश्यं देवेषूत्पादादिति, कालतस्तु त्रीणि पल्योपमानि सप्तभिः पूर्वकोटीभिरधिकानि प्राप्यन्ते इति, तस्मात् सख्यातवर्षायुषोऽसख्यातवर्षायुषश्चापेक्ष्य ' सत्तट्ठभवग्गहणा ' इत्युक्तमिति गाथार्थ' ॥ २१२ ॥ अथैकेन्द्रियतिरश्चां कायस्थितिमाह-

एगिंदियहरियंति य पोग्गलपरियट्टया असंखेज्जा । अड्ढाइज्ज निओया असंखलोया पुढविमाई ॥ २१४ ॥

'हरियंति य' त्ति हरितानि-वनस्पतयोऽन्ते-पर्यन्ते अवधौ येषां ते हरितान्ताः-पृथिव्याद्येकेन्द्रियाः, पृथिव्यप्तेजोवायुवनस्पतिलक्षणाः सर्वेऽप्येकेन्द्रिया इत्यर्थः, किमित्याह- 'पोग्गले' त्यादि, पुनः पुनरेतेष्वेवैकेन्द्रियेषूत्पद्यमानास्तद्रूपतामपरित्यजन्तोऽसंख्येयान् पुद्गलपरावर्त्तान् यावदवतिष्ठन्ते, उक्तंच प्रज्ञापनायाम्-'एगिंदिए णं भंते! एगिंदिएत्ति कालओ केच्चिरं होइ?, गोयमा! जहण्णेणं अंतोमुहुत्तं उक्कोसेणं अणंतं कालं, अणंताओ उस्सप्पिणिओसप्पिणीओ कालओ खेत्तओ अणंता लोगा असंखेज्जा पोग्गलपरियट्टा, ते ण पोग्गलपरियट्टा आवलियाए असंखेज्जइभागो "त्ति, ननु यदैकेन्द्रियेभ्यः पृथक्कृत्य निगोदवनस्पतीनामेव केवलानां कायस्थितिश्चिन्त्यते तदा कियती सा भवतीत्याह- 'अड्ढाइज्ज' त्यादि, निगोदवनस्पतयः पुनः पुनस्तत्रैवोत्पद्यमानास्तद्भावममुंचन्तोऽर्द्धतृतीयान् पुद्गलपरावर्त्तान् यावदासते, ततः परमन्यत्रोत्पद्यन्ते, उक्तंच- "निओए णं भंते! निओएत्ति कालओ केच्चिरं होइ?, गोयमा! जहण्णेणं अंतोमुहुत्तं उक्कोसेणं अणंतं कालं अणंताओ ओसप्पिणीउस्सप्पिणीओ कालओ खेत्तओ अड्ढाइज्जा पलपोरयट्टात्ति, 'असंखलोगा पुढविमाइ' त्ति वनस्पतेः पृथग्वक्तव्यत्वात् पृथिव्यादयः-पृथिव्यप्तेजोवायव इत्यर्थः, प्रत्येकं निजनिजकायेषु पुनःपुनरुत्पद्यमाना असंख्येयांल्लोकान् यावदवतिष्ठन्ते, इदमुक्तं भवति-पृथिवीकायिकाःपृथिवीकायिकेष्वेव पुनः पुनरुत्पद्यमानाः कालतोऽसंख्येया उत्सर्प्पिण्यवसर्प्पिणीर्यावदवतिष्ठन्ते, क्षेत्रतस्त्वसंख्येयांल्लोकानिति, असंख्येयेषु लोकेषु प्रतिसमयं प्रदेशापहारेणापह्रियमाणेषु यावत्य उत्सर्प्पिण्यवसर्प्पिण्यो भवन्ति तावतीर्यावदवतिष्ठन्त इतीह तात्पर्य्यम्, उक्तंच- "पुढविकाइए णं भंते! पुढवि-

पृथ्व्यादीनां कायस्थितिः

काइएत्ति कालओ केच्चिर होइ ?, गोयमा ! जहण्णेण अंतोमुहुत्त उक्कोसेण असंखेज्ज कालं असंखेज्जाउ उस्सप्पिणिओसप्पिणीओ कालओ, खेत्तओ असंखेज्जा लोग " त्ति, एवमप्तेजोवायूनामपि प्रत्येकं स्वकीयस्वकीयकाये उत्पद्यमानानामेतावती स्थितिर्वाच्येति, पूर्वमेकेन्द्रियेषु मध्ये स्वकाये परकाये चोत्पद्यमानानां पृथिव्याद्येकेन्द्रियाणां सामान्येनैकेन्द्रियकालः प्ररूपित, इदानीं तु निजनिजकाय एवोत्पद्यमानाना तेषां पृथक् पृथिव्यादिकालभेदेन चिन्तित इति पूर्वस्माद् भेद इति गाथार्थः ॥ २१४ ॥ अथ विशेषत पृथिव्यादीनामेव बादरादिभेदत कायस्थितिमाह–

कम्मट्ठिइबायराण सुहुमा असंखया भवे लोगो । अंगुलअसंखभागो बायरएगिंदियतरूण ॥ २१५ ॥

' कम्मठिइबायराण ' ति कर्मशब्देनेह मोहनीयं कर्म विवक्षितं अपरं च, यद्यपि बादराणामिति सामान्येनोक्त तथाऽप्यय विशेषो द्रष्टव्यः–अविवक्षितपर्याप्तापर्याप्तभेदाना बादरपृथिव्यप्तेजोवायूनां प्रत्येकं निजनिजकाये पुनः पुनरुत्पद्यमानानां मोहनीयस्य कर्मणो या उत्कृष्टा सप्तति सागरोपमकोटीकोटिलक्षणा स्थितिर्गीयते साऽमीषामुत्कृष्टा कायस्थितिः, इदमुक्तं भवति–बादरपृथ्वीकायिको बादरेष्वेव पृथिवीकायिकेषु पुनः पुनर्बादरपृथ्वीकायरूपतया जायमान उत्कृष्टत सप्ततिसागरोपमकोटीकोटिप्रमाण कालमवतिष्ठते, एवमप्तेजोवायूनामपि स्वकीये स्वकीये काये बादरत्वमपरित्यजतां प्रत्येकमिदमेव कालमान वाच्यमिति, आह च–" बायरपुढविकाइए णं भंते ! बायरपुढविकाइएत्ति कालओ केच्चिर होइ ?, गोयमा ! जहण्णेण अंतोमुहुत्त उक्कोसेण सत्तरिं सागरोवमकोडाकोडीउ, एव आउकाइयतेउकाइयवाउकाइएवि " त्ति ' सुहुमा असंखया भवे लोग ' त्ति सूक्ष्माः सूक्ष्मनाम-

कर्मोदयिनो जीवाः सूक्ष्मेष्वेव पुनः पुनरुत्पत्त्या सूक्ष्मत्वमपरिहरन्तोऽसङ्ख्येयानेव लोकान् यावदवतिष्ठन्ते, इदमुक्तं भवति-सूक्ष्मनामकर्मोदयवर्ती जीवः पुनः पुनः सूक्ष्मत्वेनोत्पद्यमानस्तद्भावमपरित्यजन्नसङ्ख्येयेषु लोकाकाशेषु प्रतिसमयं प्रदेशापहारेणापहियमाणेषु यावन्त्योऽसङ्ख्येया उत्सर्पिण्यवसर्पिण्यो भवन्ति तावतीर्यावदवतिष्ठते, अभ्यधायि च-" सुहुमे णं भंते ! सुहुमेत्ति कालओ केच्चिरं होइ ?, गोयमा ! जहण्णेणं अंतोमुहुत्तं उक्कोसेणं असंखेज्जं कालं असंखेज्जाओ उस्सप्पिणीओसप्पिणीओ कालओ खेत्तओ असंखेज्जा लोग ' त्ति, एवं सुहुमपुढविआउतेउवाउवणस्सईणं सुहुमनिओयाण य भाणियव्वं " ति, आह-ननु पूर्वं पृथिव्यप्तेजोवायुलक्षणानामेव बादरैकेन्द्रियाणां प्रत्येकं सप्ततिसागरोपमकोटीकोटिलक्षणा कायस्थितिर्व्याख्याता वनस्पतिस्वरूपाणां तु बादरैकेन्द्रियाणां कियती साऽवगन्तव्येत्यत्राह- ' अंगुलअसंखभागो बायरएगिंदियतरूणं ' ति बादरैकेन्द्रियाश्च ते तरवश्च बादरैकेन्द्रियतरवस्तेषां बादरैकेन्द्रियतरूणां बादरैकेन्द्रियतरुष्वेवोत्पद्यमानानामंगुलासंख्येयभागक्षेत्रखण्डप्रदेशराशिप्रमाणा कायस्थितिर्वक्तव्या, इदमुक्तं भवति-बादरवनस्पतिकायिको जीवः बादरवनस्पतिकायिकेष्वेव पुनः पुनर्भवन्नंगुलासंख्येयभागरूपे क्षेत्रे प्रतिसमयं प्रदेशापहारेणापह्रियमाणे यावत्योऽसंख्येया उत्सर्पिण्यवसर्पिण्यो भवन्ति तावन्तं कालमवतिष्ठते, यदिवाऽत्रैकेन्द्रियश्च तरुश्चैकेन्द्रियतरू बादरौ च तौ एकेन्द्रियतरू च बादरैकेन्द्रियतरू तयोरित्येवं समासः कार्यः, ततश्चायमर्थः-अविवक्षितपृथिव्यादिभेदस्य सामान्यचिन्तया पूर्वमनुक्तस्य बादरैकेन्द्रियस्य विशेषचिन्तयाऽपि प्रागभिहितस्य बादरवनस्पतिजीवस्य चेयं कायस्थितिरवगन्तव्या, उक्तञ्च 'बादरे णं भंते ! बादरेत्ति कालओ केच्चिरं होइ ?, गोयमा ! जहण्णेणं अंतोमुहुत्तं उक्कोसेणं असंखेज्जं कालं असंखेज्जाओ उस्सप्पिणिओसप्पिणीओ कालओ खेत्तओ अंगुलस्स असंखेज्जइभागो ' त्ति, "बादरवणस्सइकाइए णं बादरवणस्सइकाइएत्ति कालओ

केचिर होइ?, एव चेव वत्तव्य " ति, इति गाथार्थः ॥ २१५ ॥ अथ विशेषचिन्ताप्रक्रमादेव बादरादीनां पर्याप्तानां कायस्थितिमाह-

बायरपज्जत्ताण वियलसपज्जत्त इंदियाण च । उक्कोसा कायठिई वाससहस्सा उ संखेज्जा ॥ २१६ ॥

' बायरपज्जत्ताण ' ति बादरपर्याप्तानामुत्कृष्टा कायस्थिति सख्येयानि वर्षसहस्राणीति, इह चैव मुकुलितभणनेऽपि सिद्धान्तसिन्धुसमीक्षितविशेषतो व्याख्याऽवगन्तव्या, सा चेयम्-यदा सामान्येन बादरपर्याप्तजन्तोर्बादरपर्याप्तेष्वेव पुन' पुनरुत्पद्यमानस्य तस्य तद्भावमपरित्यजत कायस्थितिर्विवक्ष्यते तदोत्कर्षत' सातिरेकसागरोपमशतपृथक्त्वमसौ वेदितव्या, यत उक्तम्- " बादरपज्जत्तए ण भते ! बादरपज्जत्तएत्ति कालओ केच्चिर होइ ?, गोयमा! जहण्णेण अतोमुहुत्त उक्कोसेण सागरोवमसयपुहुत्त साइरेग " ति, अथ विशेषेण बादरपर्याप्तानां कायस्थितिश्चिन्त्यते तदा बादरपर्याप्तपृथ्वीकायिकस्य तद्भावमपरित्यजत॰ सख्येयानि वर्षसहस्राण्यसौ मन्तव्या, एवमप्कायिकवायुकायिकप्रत्येकशरीरवनस्पतिकायिकानामपि बादरपर्याप्ताना प्रत्येक सख्येयानि वर्षसहस्राणि कायस्थितिर्वक्तव्या, तामेव च विशेषचिन्तामुररीकृत्य सूत्रे सख्येयवर्षसहस्रस्थितिप्रक्रमे बादरपर्याप्ताभिधानमिति मन्तव्यम्, बादरपर्याप्ततेज कायिकस्य तु विशेषत कायस्थितौ चिन्त्यमानाया सख्येयान्येवाहोरात्राणि सा वक्तव्या, यत उक्तम् " बायरतेउकाइयपज्जत्तए ण भते ! बायरतेउकाइयपज्जत्तएत्ति कालओ केचिर होइ ?, गोयमा ! जहण्णेण अतोमुहुत्त उक्कोसेण सखेज्जाइ राइदियाइ " बादरपर्याप्तनिगोदस्तु तद्भावमपरिहरन् जघन्यत उत्कृष्टतश्चान्तर्मुहूर्त्तमेव तिष्ठति, ' वियल ' त्ति विकलानि-असम्पूर्णानि इन्द्रियाणि येषां ते विकलेन्द्रिया-द्वित्रिचतुरिन्द्रियलक्षणास्तेषा प्रत्येकमागमानुसारेण कायस्थितिरभ्यूह्य

स्वयमेव वक्तव्येति शेषः, संख्यातवर्षसहस्रलक्षणा त्विह न योज्यते, सिद्धांतसंवादाभावादिति, सिद्धान्तोक्तापि तर्ह्यमीषां कायस्थितिः कियतीति कथ्यतामिति चेदुच्यते, यदि पर्याप्तापर्याप्तविशेषमकृत्वा सामान्येन द्वीन्द्रियादिविकलेन्द्रियाणां प्रत्येकं कायस्थितिर्वक्तुमिष्यते तदोत्कृष्टा संख्येयकालस्वरूपाऽसौ मन्तव्या, यत उक्तम् “ बेइंदिए णं भंते ! ‘ बेइंदिएत्ति कालओ केचिरं होइ ?, गोयमा ! जहण्णेणं अंतोमुहुत्तं उक्कोसेणं संखेज्जकालं, एवं तेइंदियचउरिंदियाणवि’ अथ प्रस्तुतगाथायामादौ निर्दिष्टं पर्याप्तविशेषणमिहापि योजयित्वा चिन्त्यते तदा पर्याप्तद्वीन्द्रियाणां संख्यातानि वर्षाणि पर्याप्तत्रीन्द्रियाणां संख्यातान्यहोरात्राणि पर्याप्तचतुरिन्द्रियाणां संख्येया मासाः कायस्थितिः, तदुक्तम्– ‘ बेइंदियपज्जत्तए णं भंते ! बेइंदियपज्जत्तएत्ति कालओ केचिरं होइ ?, गोयमा ! जहण्णेणं अंतोमुहुत्तं उक्कोसेणं संखेज्जाइं वासाइं, एवं तेइंदियपज्जत्तएवि, नवरं उक्कोसेणं संखेज्जाइं राइंदियाइं, एवं चउरिंदियपज्जत्तएवि, नवरं उक्कोसेणं संखेज्जमासत्ति, ‘ सपज्जत्तइंदियाणं ’ ति, सह पर्याप्तैः-परिपूर्णैः पञ्चभिरपीन्द्रियैर्वर्तन्त इति सपर्याप्तेन्द्रियाः पञ्चेन्द्रिया इत्यर्थः, तेषां पर्याप्तापर्याप्तविशेषणरहितानां सामान्येन पञ्चेन्द्रियाणां सातिरेकं सागरोपमसहस्रमुत्कृष्टा कायस्थितिर्वक्तव्या, यदाह– ‘ पंचिंदिए णं भंते ! पंचिंदिएत्ति कालओ केचिरं होइ ?, गोयमा ! जहण्णेणं अंतोमुहुत्तं उक्कोसेणं सागरोवमसहस्सं साइरेगं’ अथात्रापि पर्याप्तविशेषणमनुवर्त्यते तदा पर्याप्तानाममीषां सागरोपमशतपृथक्त्वमुत्कृष्टा कायस्थितिः, तथा चोक्तम्– ‘ पंचिंदियपज्जत्तए णं भंते ! पंचिंदियपज्जत्तएत्ति कालओ केचिरं होइ ?, गोयमा ! जहण्णेणं अंतोमुहुत्तं उक्कोसेणं सागरोवमसयपुहुत्तं ’ ति, तस्मादिहाप्यसंख्येयवर्षसहस्रलक्षणामेव कायस्थितिर्न योज्यते, किन्त्वपाकृत्य यथोक्तैव सा वाच्या, अन्ये तु विकलेन्द्रियेषु पञ्चेन्द्रियेषु च पर्याप्तविशेषणमनुवर्त्य सर्वत्र संख्येयवर्ष-

सहस्रलक्षणामेव कायस्थितिं वर्णयन्ति, तदभिप्राय तु यदि पर त एव जानन्तीति गाथार्थ ॥ २१६ ॥ एवमनन्तर सामान्येन पञ्चेन्द्रियाणां सामान्येन पञ्चेन्द्रियेषु पुन पुनरुत्पद्यमानानां कायस्थितिरुक्ता, साम्प्रत तु सख्यातवर्षायुषां पचेन्द्रियतिर्यङ्नराणां सख्यातासख्यातवर्षायुष्केषु पचेन्द्रियतिर्यङ्नरपूत्पद्यमानानां कायस्थितिमाह—

तिण्णि य पल्ला भणिया कोडिपुहुत्त च होइ पुव्वाण । पचिंदियतिरियनराणमेव उक्कोसकायठिई ॥ २१७ ॥

इह तावत् पूर्वकोटिवर्षायुष्कपचेन्द्रियतिर्यक् पूर्वकोट्यायुष्केषु पचेन्द्रियतिर्यक्षु पुन पुनरुत्पद्यमान उत्कृष्टत सप्त वारा समुत्पद्यते, एव च पूर्वकोटिपृथक्त्वशब्दवाच्याः सप्त पूर्वकोटयो जाता, अष्टम्यां तु वारायां यद्यसौ तिर्यक्षूत्पद्यते तदा नियमादसख्येयवर्षायुष्केष्वेवेति प्रोक्तम्, तत्र चोत्कृष्टतस्त्रीणि पल्योपमान्यायुर्भवन्ति, एव च पचेन्द्रियतिरश्चामष्टभिर्भवैस्त्रीणि पल्योपमानि पूर्वकोटिपृथक्त्वाधिकानि कायस्थिति सपद्यते, एव सख्येयवर्षायुषो मनुष्यस्याप्युत्कृष्टस्थितिषु सख्येयासंख्येयवर्षायुष्केषु जायमानस्य निरवशेषा भावना कार्येति गाथार्थ. ॥ २१७ ॥ अथ पर्याप्तादीनां कायस्थितिमाह—

पज्जत्तयसयलिंदियसहस्समब्भहियमुयहिनामाण । दुगुण च तसत्तिभवे सेसविभागो मुहुत्तंतो ॥ २१८ ॥

पर्याप्तस्य पर्याप्तेष्वेव पुन पुनरुत्पद्यमानस्य कदाचिल्लब्धित कदाचित् करणतस्तद्भावमपरित्यजतः सातिरेक सागरोपमशतपृथक्त्वमुत्कृष्टा कायस्थितिर्भवतीति वाक्यशेषः, उक्तच- ' पज्जत्तए ण भते ! पज्जत्तएत्ति कालओ केच्चिर होइ ?, गोयमा !

जहण्णेणं अंतोमुहुत्तं उक्कोसेणं सागरोवमसतपुहुत्तं साइरेगं' ति, 'सयलिंदिय' त्ति सकलानि-परिपूर्णानि पंचापीन्द्रियाणि येषां ते सकलेन्द्रियाः, पंचेन्द्रिया इत्यर्थः, तेषामुदधिनामानि-सागरोपमानि तेषां सहस्रमभ्यधिकमुत्कृष्टा कायस्थितिर्भवति, एतच्च इतः प्रागेकान्तरितगाथायां निर्णीतमेव, यद्येवमिह पुनरपि किमित्यभिधानमिति चेत् सत्यं, किन्तु पूर्वं व्याख्यानद्वयं कृतं, तत्र प्राक् पर्याप्तविशेषणव्याख्यानपक्षे पर्याप्तविशेषणानां पंचेंद्रियाणां कायस्थितिरुक्ता, अत्र तु निर्विशेषणानामिति विशेषः, प्राग् निर्विशेषणव्याख्यानपक्षस्त्वस्यानभिप्रेत इव लक्ष्यते, अन्ये तु पर्याप्तपंचेन्द्रियाणां सातिरेकं सागरोपमसहस्रं कायस्थितिरितीह व्याख्यानयंति, तच्चायुक्तमेव, सातिरेकसागरोपमशतपृथक्त्वप्रमाणाया एव कायस्थितेस्तेषां समये प्रतिपादितत्वात् पौनरुक्त्यादिदोषप्रसङ्गाच्चेति, 'दुगुणं च तसात्ति भवे' त्ति द्विगुणं च सातिरेकसागरोपमसहस्रं त्रसानां कायस्थितिः, द्विगुणितेन च संख्येयवर्षाधिकसागरोपमसहस्रद्वयमवगन्तव्यम् , यदाह- 'तसकाइए णं भंते ! तसकाइएत्ति कालओ केच्चिरं होइ ?, गोयमा ! जहण्णेणं अंतोमुहुत्तं उक्कोसेणं दो सागरोवमसहस्साइं संखेज्जवासऽब्भहियाइं" ति, तदेवमभिहिता उत्कृष्टा कायस्थितिः, साम्प्रतं जघन्यामभिधित्सुराह- 'सेसविभागो मुहुत्तंतो' ति उत्कृष्टकायस्थितिपक्षाद्योऽसौ शेषः कायस्थितेरेव विभागपक्षः स चेह जघन्यकायस्थितिलक्षण एव विवक्षितो, जघन्योत्कृष्टयोरुक्तयोर्मध्यमस्य तदन्तरालरूपस्य सुखोन्नेयत्वात्, स च जघन्यकायस्थितिलक्षणो विभागो मुहूर्त्तान्तः सर्वत्र ज्ञातव्यः, येषु येषु स्थानेषूत्कृष्टा स्थितिः पूर्वमुक्ता तेषु सर्वेषु जघन्याऽन्तर्मुहूर्त्तप्रमाणासौ मन्तव्येति भाव इति गाथार्थः ॥२१८॥ तदेवं प्रतिपादितो जघन्येतरभेदाभिन्नः कायस्थितिकाल एकैकजीवस्य, नानाजीवाश्रयस्तु कायस्थितिकालः आदावपि न प्रतिज्ञातो नानाजीवानां सदैव स्थितत्वेन तद्विचारस्य किलेहासम्भवादिति ॥ साम्प्रतं गुणविभागकालं विवक्षुराह-

मिच्छा अविरयसम्मा देसविरया पमत्त इयरे य। नाणाजीव पडुच उ सव्वे काल सजोगी य ॥ २१९ ॥

गुणा– मिथ्यात्वसास्वादनत्वमिश्रत्वाविरतिदेशविरत्यादयस्तेषां विभागेन पार्थक्येन कालोऽभिधानीय., ते गुणा निराश्रया न सम्भवन्ति अतस्तद्वतां मिथ्यादृष्ट्यादीनां काल उच्यते, तत्र मिथ्यादृष्टयस्तावन्नानाजीवान् ' पडुच ' प्रतीत्य- आश्रित्य सर्वकालमप्यनच्छिन्ना भवन्ति, तेषां नरकमनुष्यदेवगतिषु प्राय प्रत्येकमसंख्येयानां तिर्यग्गतौ त्वनन्तानां सर्वदैवाव्यवच्छेदादिति, एवमविरतसम्यग्दृष्ट्यादयो देशविरताः प्रमत्ता इतरे च-अप्रमत्ता सयोगिकेवलिनश्च सर्वकाल भवन्ति, अविरतसम्यग्दृष्टीनां देशविरतानां च प्रत्येक क्षेत्रपल्योपमासंख्येयभागप्रदेशराशिप्रमाणानां प्रमत्तसंयतानां तु कोटिसहस्रपृथक्त्वमानानां अप्रमत्तयतीनां पुन' संख्यातानां सयोगिकेवलिनां च कोटिपृथक्त्वप्रमाणानां सर्वदैवाव्यवच्छेदेन प्राक् प्रतिपादितत्वादिति गाथार्थ' ॥ २१९ ॥ अथ सास्वादनसम्यग्मिथ्यादृष्टीनां कालमानमाह–

पल्लासंखियभागो सासणमिस्सा य हुति उक्कोस । अविरहिया य जहण्णेण एक्कसमय मुहुत्तंतो ॥ २२० ॥

सास्वादनसम्यक्त्वा' सम्यग्मिथ्यादृष्टयश्च नानाजीवानाश्रित्य जघन्यतो यथासंख्य समयमन्तर्मुहूर्तं च, उत्कृष्टतस्तु प्रत्येकमुभयेऽपि क्षेत्रपल्योपमासंख्येयभागप्रमाण काल यावदव्यवच्छिन्ना प्राप्यन्ते, परतोऽवश्यमन्तरसद्भावात्,इदमुक्त भवति-सास्वादनसम्यग्दृष्टयो जघन्यत. समयमुत्कृष्टतस्तु क्षेत्रपल्योपमासंख्येयभागवर्तिप्रदेशराशेः प्रतिसमय प्रदेशापहारेण यावान् कालो लगति,स चासंख्येयोत्सर्पिण्यवसर्पिणीलक्षणो मन्तव्य ,एतावन्त काल यावदुत्कृष्टतश्चतसृष्वपि गतिष्वविरहिता निरतर भूत्वा तत परमवश्य

व्यवच्छित्तिमनुभवन्ति, एवं सम्यग्मिथ्यादृष्टीनामपि भावना कार्या, नवरं जघन्यपदेऽमीषामन्तर्मुहूर्त्तमव्यवच्छेदो वक्तव्यः, अन्तर्मुहूर्त्तेऽसम्पूर्णे एषां तद्गुणाभावनिषेधात्, सास्वादनसम्यग्दृष्टीनां तु समयादप्यूर्ध्वं तत्सम्भवादिति गाथार्थः ॥ २२० ॥ तदेवं नानाजीवानाश्रित्य मिथ्यात्वसास्वादनत्वादीनामष्टानां गुणानां कालमानमुक्तम्, साम्प्रतं त्वमीषामेव गुणानामेकैक-जीवमाश्रित्य तदभिधित्सुः सास्वादनमिश्रयोस्तावदाह—

**सासायणेगजीविय एक्कगसमयाइ जाव छावलिया । सम्मामिच्छद्दिट्ठी अवरुक्कोसं मुहुत्तंतो ॥ २२१ ॥**

'सासायणेगजीविय'त्ति एको जीवो यत्र कालविशेषे स एकजीविकः सास्वादनस्यैकजीविकः सास्वादनैक-जीविकः काल उच्यत इति शेषः, कः पुनरसावित्याह-'एक्कगसमयाइ जाव छावलिय'त्ति इदमुक्तं भवति-एकः सास्वादनो जीवः पूर्वं गुणस्थानकविचारनिर्दिष्टन्यायेन प्राप्तसास्वादनभावः कश्चित् समयमेकमवतिष्ठते, अन्यस्तु द्वौ समयौ अपरस्तु त्रीन् समयानेवं यावत् कोऽप्युत्कृष्टतः षडावलिकास्तद्भावे स्थित्वा तत ऊर्ध्वमवश्यं मिथ्यात्वमुपगच्छतीत्येवमेकस्य सास्वादनजीवस्य जघन्यतः समय उत्कर्षतस्तु षडावलिकामानः कालोऽभिहितः स्यादिति, सम्यग्मिथ्यादृष्टिस्त्वेकः 'अवरुक्कोसं'ति अपरं-जघन्यतः उत्कृष्टम्-उत्कर्षतश्च मुहूर्त्तान्तः-अन्तर्मुहूर्त्तमेव भवति, इदमत्र हृदयं-एकः सम्यग्मिथ्यादृष्टिजीवो गुणस्थानकवर्णितक्रमेण प्राप्तसम्यग्मिथ्यात्वः तद्भावे जघन्यत उत्कृष्टतश्चान्तर्मुहूर्त्तमेव भवति, जघन्यपदे तदेवान्तर्मुहूर्त्तं लघुतरं उत्कृष्टपदे तु बृहत्तरमिति विशेष इति गाथार्थः ॥ २२१ ॥ अथ मिथ्यात्वकाल उच्यते, तत्र चानाद्यपर्यवसितादिभंगकचतुष्टयप्ररूपणा तावदवगन्तव्या, तद्यथा-

अनाद्यपर्यवसितमित्येको भंग १, अनादिसपर्यवसितमिति द्वितीयः २ साद्यपर्यवसितमिति तृतीयः ३ सादिसपर्यवसितमिति चतुर्थ ४, एतेषु च तृतीयभंगकं मुक्त्वा शेषेषु त्रिषु मिथ्यात्वमेकजीवमाश्रित्य सम्भवतीति दर्शयन्नाह–

मिच्छत्तमणाईयं अपज्जवसियं सपज्जवसियं च । साइयसपज्जवसियं मुहुत्त परियट्टमद्धूणं ॥२२२॥

'मिच्छत्तमणाईयं अपज्जवसियं' ति मिथ्यात्वं सम्यक्त्वावारकपुद्गलोदयापादितविपर्यस्तरुचिरूपं अभव्यलक्षणस्यैकस्य जीवस्यानाद्यपर्यवसितस्वरूपे प्रथमभंगे भवतीत्यर्थः, अनादिकालात्तस्य तत्र सद्भावाद् आगामिकालेऽपि च तदभावासम्भवादिति भावः, 'सपज्जवसियं' चेति अनादीत्यनुवर्त्तमानं सम्बध्यते, ततश्चानादिसपर्यवसितमिति द्वितीयभंगके मिथ्यात्वमेकस्यानादिमिथ्यादृष्टेर्भव्यजीवस्य प्राप्यत इत्यर्थः, अनादिकालात्तस्य तत्रापि सद्भावाद् आगामिकाले तु भव्यत्वान्यथाऽनुपपत्तेरवश्यं तत्र तत्पर्यवसानसम्भवाच्चेति, 'साइयसपज्जवसियं'ति इह कश्चिदनादिमिथ्यादृष्टिर्भव्यजीवस्तथाभव्यत्वपाकवशात् कदाचित् सम्यक्त्वं लब्ध्वा यदा केनापि कारणेन पुनरपि प्रतिपतितो मिथ्यात्वं गच्छति तदा तस्य तन्मिथ्यात्वं सादि भवति, सम्यक्त्वलाभादनन्तरं तत्प्राप्तेः सादित्वादिति, प्राप्तसम्यक्त्वस्य च यः पुनरपि मिथ्यात्वोपगमः सोऽवश्यं सपर्यवसान एव भवति, उत्कृष्टतोऽप्यपार्द्धपुद्गलपरावर्त्तपर्यन्ते तस्यावश्यं मुक्तिप्राप्तेरित्यस्य सम्बन्धि मिथ्यात्वं सपर्यवसितमेव भवति, तदेवं प्रतिपतितसम्यग्दृष्टेर्भव्यस्य यन्मिथ्यात्वं तत् सादिसपर्यवसितमिति चतुर्थभंगे लभ्यत इत्युक्तं भवति, साद्यपर्यवसितमिति तृतीयभंगे तु मिथ्यात्वं न सम्भवत्येव, प्रतिपतितसम्यग्दृष्टेरेव मिथ्यात्वसादितायाः सम्भवात्तस्य चापार्द्धपुद्गलपरावर्त्त

मिथ्यात्वस्यान्तर

पर्यन्तेऽवश्यं सम्यक्त्वभावेन मिथ्यात्वस्य नियमेन सपर्यवसितत्वादपर्यवसितताया: सर्वथैवासम्भवादिति प्ररूपणामात्रमेवैष भंगोऽत्रेति, कियन्तं पुनः कालं सादिसपर्यवसितं मिथ्यात्वमवतिष्ठत इत्याशंक्याह–' मुहुत्त परियट्टमद्धूणं ' ति इह गाथाभंगभयादन्तःशब्दानिर्देशेऽपि ' भीमो भीमसेन ' इत्यादिन्यायादेवं द्रष्टव्यम्- जघन्यतोऽन्तर्मुहूर्त्तमुत्कृष्टतस्तु देशोनमर्द्धपुद्गलपरावर्त्तं यावदेतत् सादिसपर्यसितं मिथ्यात्वमवतिष्ठते, तथाहि-कश्चिदनादिमिथ्यादृष्टिः सम्यक्त्वं लब्ध्वा पुनरपि प्रतिपतितो मिथ्यात्वमुपसङ्क्रान्तस्तत्र चान्तर्मुहूर्त्तं स्थित्वा पुनरपि सम्यक्त्वं लभत इति सादिसपर्यवसितमिथ्यात्वस्य जघन्यपदावस्थितिः, अपरस्तु सम्यक्त्वं प्राप्य पुनर्मिथ्यात्वं गतोऽर्हदाशातनादिपापबहुलतयाऽपार्द्धपुद्गलपरावर्त्तप्रमाणं कालं यावद्भवं परिभ्रम्य ततोऽवश्यं सम्यक्त्वमवाप्नोतीत्युत्कृष्टपदावस्थितिरिति गाथार्थः ॥ २२२ ॥ तदेवं नानाजीवाश्रयकालविचारोक्तानामष्टानां गुणानां मध्ये मिथ्यात्वसास्वादनमिश्रलक्षणगुणत्रयस्यैकजीवाश्रयोऽपि कालविचारो निर्दिष्टः, इदानीमविरतसम्यग्दर्शनदेशाविरतिसयोगित्वरूपस्य गुणत्रयस्य तमभिधित्सुराह–

तेत्तीस उयहिनामा साहीया हुंति अजयसम्माणं । देसजइसजोगीण य पुव्वाणं कोडिदेसूणा ॥ २२३ ॥

' अयतसम्यग्दृष्टीनाम् ' अविरतसम्यग्दृष्टीनां मध्ये एकमविरतसम्यग्दृष्टिजीवमाश्रित्य त्रयस्त्रिंशत् सागरोपमाणि साधिकान्युत्कृष्टा स्थितिर्भवति, तथाहि-कश्चिदितः ( ग्रन्थाग्रम् ५००० ) स्थानादुत्कृष्टस्थितिष्वनुत्तरविमानेषूत्पन्नः तत्र चाविरतसम्यग्दृष्टित्वेन त्रयस्त्रिंशत् सागरोपमाणि स्थितः, ततश्च्युत्वाऽत्राप्यायातो यावदद्यापि विरतिं न लभते तावत्तद्भा-

वेनैव स्थित इति, एवमेकस्याविरतसम्यग्दृष्टेरुत्कृष्टतः साधिकत्रयस्त्रिंशत्सागरोपमप्रमाण कालोऽवस्थितिः सिद्धा भवति, अत्राह–कश्चिन्ननु विजयादिविमानेषु त्रयस्त्रिंशत्सागरोपमाण्यविरतसम्यग्दृष्टित्वेन स्थित्वा योऽत्रायातोऽपि विरतिं न प्रतिपद्यते किन्तु तद्भावेनैव स्थित्वा पर्यन्ते द्वादशदेवलोके समुत्पद्यते तस्य निर्दिष्टादिना क्रमेण पञ्चपञ्चाशत्सागरोपमादिकोऽपि काल· सम्भाव्यते, तत् कथमेतावानेवोक्त ?, सत्यम्, किन्त्वनेन क्रमेण सन्ततमविरतसम्यग्दृष्टित्वमेव किं न भवति अन्यद्वा किंचित् कारणमिति बहुश्रुता एव विदन्तीति । ' देसजइसजोगीण ये ' त्यादि, ' देशयतिः ' देशविरत· ' सयोगी तु ' सयोगिकेवली, अनयोर्द्वयोरप्येकजीवाश्रयेण प्रत्येकमुत्कृष्टतो देशोनपूर्वकोटिं स्थितिकालो भवति, गर्भस्थो हि किल सातिरेकान् नव मासान् गमयति, जातोऽपि चाष्टौ वर्षाणि यावद् विरतेरनर्हो भवति, तत ऊर्ध्वं देशविरतिं प्रतिपद्य सर्वविरतिप्रतिपत्त्या केवलज्ञान चोत्पाद्य यौ देशविरतसयोगिकेवलिनौ प्रत्येक पूर्वकोटिं जीवतस्तयोरुक्तस्वरूपेण किंचिदूननववर्षलक्षणेन देशेन न्यूनः पूर्वकोटि स्वरूपोऽप्युत्कृष्टोऽवस्थितिकाल पृथगवगन्तव्य इति गाथार्थः ॥ २२३ ॥ अथैषामेवाविरतदेशविरतसयोगिकेवलिनां जघन्यकाल पूर्वमनुक्तानां तु गुणानां जघन्येतरभेदभिन्न च कालमभिधित्सुराह—

एएसिं च जहण्ण खवगाण अजोगि खीणमोहाण । नाणा जीवे एग परापराठिई मुहुत्तंतो ॥ २२४ ॥

' एएसिं च जहण्ण'ति चकारो भिन्नक्रमे उपरिष्टाद् योक्ष्यते, एतेषामनन्तरगाथोक्तानामविरतसम्यग्दृष्टिदेशविरतिसयोगिकेवलिनां प्रत्येक जघन्य कालमाश्रित्य ' मुहुत्ततो'त्ति अन्तर्मुहूर्त्तमवगन्तव्यमिति पर्यन्ते सम्बन्ध , तथाहि अनादि

मिथ्यादृष्ट्यादिः कश्चिदविरतसम्यग्दृष्टित्वं प्रतिपद्यान्तर्मुहूर्त्तात् पुनरपि मिथ्यात्वं गत इत्येवमविरतसम्यग्दृष्टेर्जघन्योऽन्तर्मुहूर्त्तमवस्थितिकालः, अविरतादिश्च कश्चिद्यदाऽन्तर्मुहूर्त्तमेकं देशविरतिं प्रतिपद्य पुनरप्यविरतादित्वमेवाभ्युपगच्छति तदा देशविरतेरपि जघन्यकालसिद्धिः, अन्तकृत्केवलिनश्च सयोगिकेवलित्वमन्तर्मुहूर्त्तमेव भवति, ततः परमयोगित्वं प्रतिपद्य निर्वाणप्राप्तेरिति, तदेवं नानाजीवाश्रितकालविचारोक्तगुणाष्टकस्य मध्ये मिथ्यादृष्टिसास्वादनमिश्राविरतदेशविरतित्वसयोगित्वरूपाणां षण्णां गुणानामेकजीवाश्रयोऽपि जघन्येतरभेदभिन्नोऽभिहितः कालः, प्रमत्ताप्रमत्तगुणद्वयस्य तूपरिष्टादेव वक्ष्यते, साम्प्रतं पूर्वमनुक्तानां क्षपकश्रेणिगतापूर्वकरणादिगुणानां नानाजीवाश्रितमेकजीवाश्रितं च जघन्येतरभेदभिन्नं कालमाह—' खवगाण अजोगी खीणमोहाणं ' ति मोहनीयं कर्म क्षपयन्तीति क्षपकास्ते चापूर्वकरणानिवृत्तिबादरसूक्ष्मसम्परायलक्षणाः क्षपकश्रेण्यन्तर्गतास्त्रयो मन्तव्या , अपूर्वकरणोऽपि हि यद्यपि मोहनीयं न क्षपयति तथापि तत्क्षपणार्हत्वाद्राज्यार्हकुमारो राजवत् क्षपक उच्यते, ततश्चैषां त्रयाणां क्षपकाणां तथाऽयोगिकेवलिनां सर्वथा क्षीणमोहानां च नानाजीवानाश्रित्य एकजीवं च प्रतीत्य परा- उत्कृष्टा अपरा तु-जघन्या स्थितिरन्तर्मुहूर्त्तमेव भवति, क्षपकश्रेणिर्हि सर्वाप्यन्तर्मुहूर्त्तमेव भवति, अतस्तदन्तर्गतानामपूर्वकरणादीनां क्षीणमोहान्तानां जघन्यत उत्कृष्टतश्चान्तर्मुहूर्त्तप्रमाणा स्थितिः सुखावबोधैव, अन्तर्मुहूर्त्तस्य बहुभेदत्वादिति, नानाजीवाश्रयपक्षेऽपि निरन्तरं क्षपकश्रेणिरन्तर्मुहूर्त्तमेव लभ्यते, परतोऽवश्यमन्तरस्य सम्भवात् , अतस्तदन्तर्वृत्तयोऽपूर्वकरणादयोऽप्यन्तर्मुहूर्त्तमेव भवन्ति, अयोगिकेवलिनस्तु शैलेश्यवस्थायां ह्रस्वपंचाक्षरोद्गिरणमात्रकालमेव भवन्ति, शैलेश्यवस्थाऽपि च निरन्तरं भवन्त्यपि अन्तर्मुहूर्त्तात् परं न भवत्येव, तस्मादेतेऽप्येकजीवं नानाजीवांश्चाश्रित्य जघन्यत उत्कृष्टतश्चान्तर्मुहूर्त्तमेव भवन्तीति गाथार्थः॥२२४॥

प्रमत्तादीनां जघन्येतरकालः

अथ प्रमत्ताप्रमत्तानामेकजीवाश्रितं उपशमकोपशान्तानां त्वेकजीवाश्रितं नानाजीवाश्रितं च प्रागनुक्त जघन्येतरभेदभिन्न कालमभिधित्सुराह—

एग पमत्त इयरे उभए उवसामगा य उवसंता । एग समय जहन्न भिन्नमुहुत्त च उक्कोस ॥ २२५ ॥

'पमत्त' त्ति प्रमत्तसयता' इतरे च अप्रमत्तसयताः 'एग' ति एकैकं जीवमाश्रित्य जघन्यत एकं समय भवन्ति, तदनन्तर मरणभावेनाविरतत्वोपगमादिति, उत्कृष्टतस्त्वन्तर्मुहूर्त्तं भवति, परतः प्रमत्तस्याप्रमत्तत्वादिभावान् मरणाद्वा, अप्रमत्तस्य तु प्रमत्ततादिसम्भवात् कालकरणाद्वेति, मोहनीय कर्मोपशमयन्तीत्युपशमका उपशमश्रेण्यन्तर्गताः, अपूर्वकरणानिवृत्तिबादरसूक्ष्मसम्परायाख्या इत्यर्थः, अपूर्वकरणो यद्यपि मोहनीय कर्म न किञ्चिदुपशमयति तथापि पूर्ववत्तदर्हत्वादुपशमक उच्यते, उपशान्ता'–सर्वथैवोपशान्तमोहनीयकर्माण , उपशान्तमोहच्छद्मस्थवीतरागा इत्यर्थ , एते सर्वेऽपि च ' उभए ' त्ति उभयपक्षेऽपि एकजीवाश्रितपक्षे नानाजीवाश्रितपक्षे चेत्यर्थ , किमित्याह-जघन्यत. समय भवन्ति, तदनन्तर मृत्वाऽनुत्तरविमानेषूत्पत्तिसम्भवेनाविरतत्वप्राप्ते', उत्कृष्टतस्त्वन्तर्मुहूर्त्तं भवति, परतो गुणस्थानकान्तरगमनात् कालकरणाद्वेति गाथार्थ ॥ २२५ ॥ तदेव सामान्येन चतुर्दशानामपि गुणस्थानकानामेकजीवाश्रितो नानाजीवाश्रितश्च जघन्येतरभेदभिन्नोऽप्युक्त. कालः, साम्प्रत तु केषांचिद् गुणस्थानकानां विशेषतो नरकादिगतिषु तमभिधातुकाम' प्राह—

मिच्छा भवट्ठिईया सम्म देसूणमेव उक्कोस । अतोमुहुत्तमवरा नरएसु समा य देवेसु ॥ २२६ ॥

मिथ्यादृष्टयो भवस्थितिका नरकेषु भवन्तीति सम्बन्धः, इदमुक्तं भवति-मिथ्यादृष्टिनारकाणां सर्वास्वपि नरकपृथ्वीषु यथास्वं भवस्थितिं यावन्मिथ्यात्वं भवति, ये ह्यतः स्थानान्मिथ्यात्वानुगता एव रत्नप्रभादिकास्वधःसप्तमीपर्यन्तासु पृथ्वीषूत्पद्यन्ते तत्र गताश्च सम्यक्त्वं न लभन्ते तेषामुत्कृष्टतः सागरोपमादिकं त्रयस्त्रिंशत्सागरोपमपर्यन्तमात्मीयात्मीयां भवस्थितिं यावन्मिथ्यात्वं भवतीति सुबोधम्, एवं 'सम्मं देसूणमेव उक्कोसं' ति सम्यक्त्वमप्युत्कृष्टं कालमाश्रित्य एवमेव सागरोपमादिभवस्थितिप्रमाणं वक्तव्यम्, केवलं देशोनं, कासुचिन्नरकपृथिवीषु भवस्थितेर्देशोनता वक्तव्येत्यर्थः, यासु हि नरकपृथ्वीषु सम्यक्त्वयुक्तस्योत्पत्तिः पूर्वं निषिद्धा तासु मिथ्यात्वसमनुगतः समुत्पन्नोऽपर्याप्तः सम्यक्त्वं न लभते, किंतु पर्याप्त एव तदाप्नोति, अतोऽपर्याप्तकालेन न्यूनता भवस्थितेर्द्रष्टव्या, सप्तमनरकपृथिव्यामप्यष्टाविंशतिसत्कर्मादिः कोऽपि पर्याप्तावस्थायां सम्यक्त्वं लभते, किन्तूद्वर्तनाकालेऽन्तर्मुहूर्त्तशेषे स्वायुष्यवश्यमेव तदसौ परित्यजति, तिर्यक्ष्वेव तत उत्पादात् तेषु च सम्यक्त्वस्योत्पत्तिनिषेधात्,तस्मात्तस्यां त्रयस्त्रिंशत्सागरोपमलक्षणा उत्कृष्टा सम्यक्त्वस्य भवस्थितिः किंचिद्बृहत्तरेण देशेन न्यूना द्रष्टव्येति विशेषः, यासु पुनर्नरकपृथिवीषु सम्यक्त्वान्वितोऽप्युत्पद्यते उद्वर्त्तते च तासु सम्यक्त्वस्यापि यथास्वमुत्कृष्टा भवस्थितिः सम्पूर्णाऽपि द्रष्टव्या, तदेवं मिथ्यात्वस्य सम्यक्त्वस्य चोक्तो नरकगतावुत्कृष्टः कालः,अथ तयोरेव जघन्यं तमभिधित्सुराह—'अंतोमुहुत्तमवर' त्ति सर्वास्वपि नरकपृथ्वीषु मिथ्यात्वस्य सम्यक्त्वस्य चापरा-जघन्या स्थितिः प्रत्येकमन्तर्मुहूर्त्तमेव भवति, तथाहि-सम्यग्दृष्टिर्नारकः कश्चित् प्रतिपत्त्य मिथ्यात्वं गतस्तत्र चान्तर्मुहूर्तं स्थित्वा पुनः सम्यक्त्वमवाप्नोतीत्येवं मिथ्यात्वस्य जघन्यतोऽन्तर्मुहूर्त्तप्रमाणा स्थितिः, योऽपि पूर्वभवाद् गृहीतमिथ्यात्वो नरकेषूत्पद्यतेऽन्तर्मुहूर्त्ताच्च परं सम्यक्त्वं लभते तस्यापि नारकस्येयमवा-

प्यते, नरकगतिमाश्रित्य तन्मिथ्यात्वस्याप्यन्तर्मुहूर्तस्थितिकत्वादिति, यस्तु मिथ्यादृष्टिर्नारकः सम्यक्त्वं प्रतिपद्यान्तर्मुहूर्तात् पुनरपि मिथ्यात्वमुपगच्छति तमाश्रित्य सम्यक्त्वस्यापि जघन्या अन्तर्मुहूर्तप्रमाणा स्थितिर्लभ्यत इति, 'समा य देवेसु' त्ति भवनपत्यादिषु देवेषु पुनर्मिथ्यात्वसम्यक्त्वयोरुत्कृष्टस्थित्या सह भवस्थिति समैव भवति, न तु देशोनेति भावः, तथाहि भवनपत्यादिषु नवमग्रैवेयकनिवासिपर्यन्तेषु देवेषूत्पत्तेः प्रभृति मरणान्तं यावन्मिथ्यात्वयुक्ता देवाः सम्भवन्त्येव, अत एतेषां या यस्य देवस्यात्मीया उत्कृष्टा एकत्रिंशत्सागरोपमपर्यन्ता भवस्थिति सा उत्कृष्टमिथ्यात्वस्थित्या सह समा भवतीति प्रतीतमेव, अनुत्तरविमानेषु तु मिथ्यादृष्टिः सर्वथैव न सम्भवतीति, येऽपि भवनपत्यादिष्वनुत्तरविमाननिवासान्तेषु देवेषूत्पत्तिसमयादारभ्य मरणकालं यावत् सम्यक्त्वसहिताः सुरा प्राप्यन्ते, तेषामपि या यस्यात्मीया उत्कृष्टा त्रयस्त्रिंशत्सागरोपमावसाना भवस्थितिः सा उत्कृष्टसम्यक्त्वस्थित्या समा भवतीत्यपि विदितमेवेति, आह-ननु वैमानिकदेवानामुत्पत्तेः प्रभृति सम्यक्त्वसम्पन्नता युक्तैव, पूर्वभवाद् गृहीतसम्यक्त्वस्य तेषूत्पत्तेः, भवनपतिव्यन्तरज्योतिष्केषु तु सा कथं?, प्राग्भविकसम्यक्त्वान्वितस्य तेषूत्पत्तेरभावात्, 'सम्मदिट्ठी जीवो विमाणवज्जं न बंधए आउं' मित्यादिवचनादिति, तद्भविकसम्यक्त्वलाभापेक्षया तेष्वप्यसौ भविष्यतीति चेन्नैतदेवम्, अपर्याप्तावस्थायां सम्यक्त्वलाभासम्भवादनापि तत्कालस्वरूपेण देशेन भवस्थितेर्न्यूनताप्रसंगात्, सत्यमुक्तं, किन्तु कार्मग्रन्थिकमतेनैव सम्यक्त्वसहितो भवनपत्यादिषु नोत्पद्यते, सैद्धान्तिकाभिप्रायेण तु विराधितश्रामण्यादिः कश्चित् सम्यक्त्वयुक्तोऽपि तेषु जायते, तदेव चेह विवक्षितमित्यदोष इति गाथार्थः ॥ २२६ ॥ तदेवं नरकगतिदेवगत्योर्दिङ्मात्रप्रदर्शनार्थं मिथ्यात्वसम्यक्त्वगुणयोर्दर्शितः कालः, साम्प्रतं तिर्यङ्मनुष्यगत्योस्तमुपदर्शयन्नाह—

**मिच्छाणं कायठिई उक्कोस भवट्ठिई य सम्माणं । तिरियनरेगिंदियमाइएसु एवं विभइयव्वा ॥ २२७ ॥**

'तिरियनर' त्ति सामान्येन तिर्यग्गतिवर्तिनां तिरश्चां मनुष्यगतिचारिणां मनुष्याणां च '**मिच्छाणं**' ति मिथ्यादृशां सम्बन्धिनो मिथ्यात्वस्योत्कृष्टः स्थितिकालो भवतीत्युपस्कारः, कियान् पुनः स इत्याह-'**कायठिई उक्कोस**' त्ति यावती सामान्येन तिरश्चां मनुष्याणां च प्रत्येकमुत्कृष्टा कायस्थितिरुक्ता तावानेव मिथ्यादृष्टितिर्यङ्मनुष्याणां सम्बन्धिनो मिथ्यात्वस्याप्युत्कृष्टः स्थितिकाल इत्यर्थः, इदमुक्तं भवति-सामान्येन तिरश्चां तावदसङ्ख्येयाः पुद्गलपरावर्ताः कायस्थितिरुत्कृष्टाऽत्रैव ग्रन्थे प्रागभिहिता, यदा च मिथ्यादृष्टिस्तिर्यक्षूत्पन्नस्तद्भावममुञ्चन्नुत्कृष्टत एतावन्तं कालमास्ते तदा तत्सम्बन्धिनो मिथ्यात्वस्याप्येवमसङ्ख्येयपुद्गलपरावर्तस्वरूप उत्कृष्टः स्थितिकालः सिद्धो भवति, मनुष्याणामपि सामान्येनाष्टसु भवेषु पूर्वकोटिपृथक्त्वाधिकं पल्योपमत्रयमुत्कृष्टा कायस्थितिरभिहिता, अतो मिथ्यादृष्टेरुत्कृष्टतो मनुष्येष्वप्यविच्छेदेनैतावन्तं कालं भ्राम्यतस्तत्सम्बन्धिनो मिथ्यात्वस्यायमुत्कृष्टः स्थितिकालो युक्तित एव भवति। तदेवं भावितस्तिर्यङ्मनुष्यगतिद्वये मिथ्यात्वस्योत्कृष्टः स्थितिकालोऽथ सम्यक्त्वस्यैष भाव्यते-तत्रैषां तिरश्चां मनुष्याणां च '**सम्माणं**' ति सम्यग्दृशां सम्बन्धिनः सम्यक्त्वस्योत्कृष्टः स्थितिकालो भवतीत्यत्राप्युपस्कारः, कियान् पुनः स इत्याह-'**भवट्ठिइय**' त्ति '**उक्कोस**' त्ति एतदिहापि योज्यते, ततश्च यावती तिरश्चां मनुष्याणां च प्रत्येकमुत्कृष्टा भवस्थितिरुक्ता तावानेव सम्यग्दृष्टितिर्यङ्मनुष्याणां सम्बन्धिनः सम्यक्त्वस्योत्कृष्टः स्थितिकालो भवतीत्यर्थः, इदमत्र हृदयं-तिरश्चां मनुष्याणां च प्रत्येकमुत्कृष्टा भवस्थितिः पल्योपमत्रयलक्षणा प्रागभिहिता, यदा च कर्मभूमिजमनुष्यः प्राग-

नरतिरश्चां सम्यक्त्व मिथ्यात्वयोःस्थितिः

सङ्ख्येयवर्षायुस्तिर्यक्षु बद्धायुष्कः पश्चाद्दर्शनसप्तकं क्षपयित्वा क्षायिकसम्यग्दृष्टिर्भूत्वा देवकुरूत्तरकुर्वादिवर्त्तिषु त्रिपल्योपमायुष्केषु तिर्यक्षूत्पद्यते तदा तस्य क्षायिकसम्यग्दृष्टितिर्यक्सम्बन्धिनः सम्यक्त्वस्य पल्योपमत्रयलक्षणोत्कृष्टभवस्थितिप्रमाणः उत्कृष्टः स्थितिकालः सिद्धो भवति, यदा तु स एव कर्मभूमिजमनुष्यः पूर्वमसङ्ख्येयवर्षायुष्कमनुष्येषु च बद्धायुष्कः पश्चात् क्षायिकसम्यक्त्वं प्राप्य देवकुर्वादिवर्त्तिषु त्रिपल्योपमस्थितिषु मनुष्येषूत्पद्यते तदा तस्य क्षायिकसम्यग्दृष्टिमनुष्यसम्बन्धिनोऽपि सम्यक्त्वस्यायमुत्कृष्टभवस्थितिप्रमाणः उत्कृष्टः स्थितिकालः सम्पद्यत इति, क्षायोपशमिकसम्यक्त्वं तु प्रतीत्य न प्राप्यते, तद्धि पारभविकमसङ्ख्येयवर्षायुषां न लभ्यते, तद्युक्तस्य वैमानिकेष्वेवोत्पादात्,ताद्भविकं तु पर्याप्तावस्थायामेव भवति, नत्वपर्याप्तकाले, तथा च सति भवस्थितिकालो देशोन एव स्यात्, न सम्पूर्ण इति । आह-कथितं ननु भवत्वेवं, किन्तु तिरश्चां तावत् क्षपकश्रेण्यारम्भस्य निषेधात्तत्सम्यक्त्वस्थितिकालस्य भवस्थितिकालसमानताऽस्तु, मनुष्यस्तु यदा कर्मभूमिजावस्थायां प्रागेव क्षायिकसम्यक्त्वं प्राप्य त्रिपल्योपमस्थितिषु मनुष्येष्वेव जायत इति भवताऽप्युक्तम्, तदाऽवस्थाद्वयेऽपि मनुष्यगतित्वस्य समानत्वान्मनुष्यसम्यक्त्वस्थितिकालस्य प्राग्भविकेन सम्यक्त्वलाभकालेन भवस्थितिकालात् सातिरेकता भवन्ती केन वार्यत इति, सत्यं, न कोऽपि निवारयिता, केवलं स्वल्पत्वेन ग्रन्थकृता तदिह न विवक्षितं, उपलक्षणव्याख्यानात्तु स्वयमेवैतद्भवस्थितेरिह सातिरेकत्वं द्रष्टव्यम्, जघन्या च मिथ्यात्वसम्यक्त्वस्थितिरिह प्रागुक्तानुसारेण स्वयमेव बोद्धव्येति तदेवं मनुष्यगतौ मिथ्यात्वसम्यक्त्वयोः प्रोक्तः स्थितिकालः, तिर्यग्गतावप्ययमभिहितः सामान्येन नत्वेकेन्द्रियादिभेदतः अत एकेन्द्रियादीनां तमतिदिशन्नाह—'एगिंदियमाइएसु' इत्यादि, एकेन्द्रियादिष्वादिशब्दाद् द्वीन्द्रियादिपरिग्रहः, एवमुक्तानुसारेण सम्भवन्मिथ्यात्वादिगुणानां स्थितिर्विभजनीया, स्वयमेवाभ्यूह्य ज्ञातव्या, इह तु साक्षान्नोच्यते,

ग्रन्थगहनताभयात्, तथाविधोपयोगाभावाच्चेति गाथार्थः॥ २२७ ॥ तदेवं विशेषचिन्तायामपि मिथ्यात्वसम्यक्त्वगुणयोरभिहितो गतिचतुष्टयेऽपि स्थितिकालः, साम्प्रतं पुनर्मनुष्यगतावेव सास्वादनमिश्रगुणयोर्नानाजीवानेकजीवं चाश्रित्य तमभिधित्सुराह—

**सासायणमिस्साणं नाणाजीवे पडुच्च मणुएसु । अंतोमुहुत्तमुक्कोसकालमवरं जहुद्दिट्ठं ॥ २२८ ॥**

सास्वादनसम्यग्दृष्टीनां सम्यग्मिथ्यादृष्टीनां च मनुष्येषु नानाजीवानाश्रित्य उत्कृष्टकालं च प्रतिपादयितव्यं प्रतीत्यान्तर्मुहूर्तं यावदवस्थितिः, इदमुक्तं भवति-सास्वादना मिश्राश्च मनुष्येषु नानाजीवानाश्रित्य निरन्तरं भवन्त उत्कृष्टतः प्रत्येकमन्तर्मुहूर्त्तमेव भवन्ति, न परतः, परतोऽवश्यमन्तरस्य सद्भावादिति, आह शिष्यो-यदि नाना जीवानाश्रित्येयमुत्कृष्टा भवस्थितिस्तर्हि जघन्या किंप्रमाणेति कथ्यतां? तथैकजीवं समाश्रित्योत्कृष्टा जघन्या च किंमाना सेत्यपि चविंधतामित्यत्राह—'अवरं जहुद्दिट्ठं' ति अवरम्-अन्यदुक्तशेषं नाना जीवानाश्रित्य जघन्यस्थितेर्मानं एकजीवाश्रितायास्तु जघन्याया उत्कृष्टायाश्च तस्याः प्रमाणं यथोद्दिष्टं विज्ञेयम् 'यथा' येन प्रकारेणाविशेपितगतिचतुष्टयाश्रिते औघिकविचारे सास्वादनमिश्राणामेतत्स्थितिप्रमाणं "पल्लासंखियभागो सासण मिस्सा य हुंती" त्यादिना ग्रन्थेन प्रागुद्दिष्टं-कथितं तथैवेहापि वाच्यमित्यर्थः, इदमुक्तं भवति-अविशेषितगतिचतुष्टयाश्रितसामान्यविचारे सास्वादनमिश्राणां नानाजीवानाश्रित्य प्रत्येकमुत्कृष्टतः पल्योपमासंख्येयभागप्रमाणोऽवस्थितिकालः प्रागभिहितः, अत्र त्वेकामेव मनुष्यगतिमाश्रित्य विशेषतोऽमीषामसौ चिन्त्यमानोऽन्तर्मुहूर्त्तमान एव निर्दिष्ट इति विशेषः, शेषं त्ववस्थितिकालमानममीषां प्रागुद्दिष्टमेवेहापि मन्तव्यम्, तच्चेदम्—सास्वादनानां नानाजीवान् प्रतीत्य जघन्यतः समयः, सम्यग्मिथ्यादृष्टीनां

त्वन्तर्मुहूर्त, एकजीवं त्वाश्रित्य सास्वादनानां जघन्यतः समय उत्कृष्टतस्तु षडावलिकाः, मिश्राणां जघन्यत उत्कर्षतश्चान्तर्मुहूर्त्तमेवेति गाथार्थः ॥ २२८ ॥ तदेव मिथ्यात्वसास्वादनत्वमिश्रत्वादिगुणानां मार्गणाद्वारेषु मध्ये गतिद्वारेऽपि दिक्प्रदर्शनार्थं दर्शितोऽवस्थितिकालः, ततोऽनया दिशा शेषेष्वपीन्द्रियादिद्वारेष्वमीषां गुणानां स्वबुद्ध्यैवावस्थितिकालोऽभ्यूह्यः, साम्प्रत गुणकालाभिधानप्रस्तावायोगवेदसञ्ज्ञित्वादीनामपि गुणानां तमभिधित्सुराह—

**काओगऽणतकाल वाससहस्सा उराल बावीस। समयतिग कम्मइओ सेसा जोगा मुहुत्तंतो ॥ २२९ ॥**

'काओगऽणतकाल' ति चीयत इति कायः-शरीर युज्यते- सम्बध्यते कर्मादिभिः सह जीवोऽनेनेति योग' कायश्चासौ योगश्च काययोगस्तस्मिन्नेव च केवले वर्त्तमानो जन्तुरनन्तकालमवतिष्ठते, स च जन्तुरत्रैकेन्द्रिय इति प्रतिपत्तव्यम्, तस्य हि प्रागसङ्ख्येयपुद्गलपरावर्त्तलक्षणोऽनन्तः कालः कायस्थितौ निर्दिष्ट, एतावन्तं च कालमसौ केवले काययोग एव वर्तते, एकेन्द्रियाणां वाङ्मनोयोगयोरभावादित्युत्कृष्टत काययोगस्यानन्तोऽवस्थितिकाल इति, अथ काययोगस्यैव विशेषतोऽवस्थितिकालमाह- 'वाससहस्सा उराल बावीस' त्ति औदारिककाययोगो द्वाविंशतिर्वर्षसहस्राणि खरबादरपृथ्वीकायिकस्योत्कृष्टत प्राप्यते, आह- नन्वयमौदारिककाययोगस्य किं नाना भवानाश्रित्यावस्थितिकाल उच्यते आहोस्विदेकमेव भवं?, यद्याद्य पक्षस्तर्हि प्रतिभव निरन्तरमृजुगत्योत्पद्यमानस्यैकेन्द्रियादेरुत्कृष्टतोऽसङ्ख्येयमपि कालमौदारिककाययोग' समये निर्दिश्यते, किमित्येतावानवोक्त', अथ द्वितीय पक्षस्तर्हि सङ्ख्येयवर्षायुषामेकस्मिन्नपि भवे त्रीणि पल्योपमान्युत्कृष्टत औदारिककाययोगो लभ्यते, किमिति द्वाविंशतिवर्षसहस्रमान

एवोक्तः१, सत्यं, द्वितीय एव पक्षोऽत्राश्रितः, ततः केवलं य एव वाङ्मनोयोगरहितः केवल औदारिककाययोगस्तस्यैवावस्थितिकालश्चि-न्तयितुमत्राभिप्रेतः, एवंभूतश्चासंख्येयवर्षायुषां न प्राप्यते, वाङ्मनोयोगयोरपि तेषां सद्भावाद्, एकेन्द्रियाणां तु केवल एवासौ लभ्यते, तस्य चैकभविकस्योत्कृष्टो द्वाविंशतिवर्षसहस्रमान एवावस्थितिकालो भवतीत्यलं विस्तरेण । '**समयातिगं कम्मइगो**' त्ति कार्मणकाययोगः केवलो भवान्तराल एव लभ्यते, नान्यत्र, तत्र च पूर्वप्रतिपादितचतुःसामयिकविग्रहे त्रीन् समयानुत्कृष्टतोऽसौ प्राप्यते, पंचसामायिकस्तु विग्रहः स्वल्पजीवभावित्वेनेह न विवक्षित इति, आह विनेयः-ननु तैजसकाययोगः कार्मणात् पृथक् केवलः कदाचिदपि न लभ्यते, अतः कार्मणकाययोगावस्थितिकालप्रतिपादनेनैव तैजसस्यासौ प्रतिपादित एवेत्यवगच्छामः, शेषयोस्तु वैक्रियाहारककाययोगयोः वाङ्मनोयोगयोश्चावस्थितिकालः प्रतिपाद्यतामित्याशंक्याह-'**सेसा जोगा मुहुत्तंतो**' त्ति उक्तशेषा योगा वैक्रियाहारकवाङ्मनोयोगलक्षणा प्रत्येकमुत्कृष्टतोऽप्यन्तर्मुहूर्त्तमेव भवन्ति, तथाहि-य एव वाङ्मनोयोगरहितः केवलो वैक्रियकाय-योगस्तस्यैवेह स्थितिकालोऽभिधित्सितः, केवलश्चायं वैक्रियलब्धिमतां वायूनामेव लभ्यते, न देवादीनाम्, तेषां वाङ्मनोयोगयो-रपि सद्भावाद्, वायूनां चोत्कृष्टतोऽपि वैक्रियकाययोगोऽन्तर्मुहूर्तमेवावतिष्ठते, आहारककाययोगस्य तु चतुर्दशपूर्वविदो विहायान्यत्र सम्भव एव नास्ति, स च तेषामन्तर्मुहूर्त्तात् परं न तिष्ठतीति प्रतीतमेव, वाग्योगमनोयोगावपि प्रत्येकमन्तर्मुहूर्त्तमेव भवतः, अयं च योगानामुत्कृष्टोऽवस्थितिकालः प्रोक्तः, जघन्यतस्तु समयमेव काययोगवाग्योगमनोयोगानां प्रत्यवसेयः, स चायं-सामान्येन काय-योगस्य विशेषत औदारिकाहारककाययोगयोश्च प्रत्येकमन्तर्मुहूर्त्तं जघन्योऽवस्थितिकालः, वैक्रियकार्मणकाययोगवाग्योगमनो-योगानां प्रत्येकं प्रत्येकं जघन्यतः समय एवेति गाथार्थः ॥ २२९ ॥ अथ वेदादिगुणावस्थितिकालमाह-

वेद स्थितिः

देवी पणपण्णाऊ इत्थित्त पल्लसयपुहुत्त तु। पुरिसत्त सण्णित्त च सयपुहुत्त च उयहीण ॥ २३० ॥

इह वेदस्यैकभविकी नानाभवाश्रया च स्थितिरुच्यते, तत्रैकभविकीं स्थितिमाश्रित्याह- ' देवी पणपण्णाऊ इत्थित्त ' ति पच-पचाशत्पल्योपमायुषो द्वितीयकल्पापरिगृहीतदेव्या एक भवमाश्रित्योत्कृष्टत पचपचाशदेव पल्योपमानि स्त्रीत्व, प्राप्यत इति शेष, अथ स्त्रीवेदस्यैव नानाभविकीमुत्कृष्टां स्थितिमाह— ' पल्लसय'त्ति पल्योपमशत तथा ' पुहुत्त'ति, पूर्वकोटी-पृथक्त्व च नानाभवेषु निरन्तरमुत्कृष्टत स्त्रीत्व प्राप्यत इतीहाप्युपस्कार, इह च निरन्तरस्त्रीवेदस्थितिविषये सिद्धान्ते पचादेशा-न्तराण्यभिहितानि, तद्यथा इत्थीवेए ण भंते ! इत्थीवेएत्ति कालओ केच्चिर होइ ?, गोयमा ! एगेण आएसेण जहण्णेण एक्क समय उक्कोसेण दसुत्तरपलिओवमसय पुव्वकोडिपुहुत्तमब्भहिय ति, १ एगेण आएसेण जहण्णेण एक्क समय उक्कोसेण अट्ठारसपलिओव-माइं पुव्वकोडिपुहुत्तमब्भहियाइति २, एगेण आएसेण जहण्णेण एक्क समय उक्कोसेण चोद्दस पलिओवमाइ पुव्वकोडिपुहुत्तमब्भ-हियाइति ३, एगेण आएसेण जहण्णेण एक्क समय उक्कोसेण पलिओवमसय पुव्वकोडिमब्भहियति ४, एगेण आएसेण जहण्णेण एक्क समय उक्कोसेण पलिओवमपुहुत्त पुव्वकोडिपुहुत्तमब्भहियाति ५, इह च प्रथमे आदेशान्तरे इय भावना-काचिद्योषिदुपशम-श्रेण्यां वेदत्रयोपशमेनावेदकत्वमनुभूय प्रतिपतन्ती स्त्रीवेदोदयप्रथमसमय एव काल कृत्वा देवेषूत्पद्यते, तत्र च तस्या पुस्त्व-मेव भवतीति एव जघन्यत' समय, यदा तु कश्चिज्जीव पूर्वकोट्यायुष्कासु नारीतिरश्चीषु काश्चिद् भवान् ईशानदेवलोके चोत्कृष्टायु-ष्कास्वपरिगृहीतदेवीषु भवद्वय निरन्तरमुपजायते तदा पूर्वकोटिपृथक्त्वाधिक दशोत्तरपल्योपमशत स्त्रीवेदस्योत्कृष्टा स्थितिर्भव-

ति, आह- यदि देवकुरूत्तरकुर्वादिषु पल्योपमत्रयस्थितिकासु स्त्रीषूत्पद्यते तदाऽधिकाऽप्यस्य स्थितिरवाप्यते, किमित्येतावत्येवोच्यते ?, सत्यं, किन्तु देवेभ्यस्तावदसंख्येयवर्षायुष्केषु नोत्पद्यते, असंख्येयवर्षायुष्कापि योषिदुत्कृष्टायुष्कासु देवीषु नोत्पद्यते, अतो यथोक्तैव स्त्रीवेदस्योत्कृष्टा स्थितिर्भवति, एवमन्येष्वपि चतुर्ष्वादेशान्तरेषु भावना कार्या, नवरं द्वितीये आदेशान्तरे ईशानदेवलोकपरिगृहीतास्वेव नवपल्योपमलक्षणोत्कृष्टायुष्कासु देवीषु वारद्वयं समुत्पादनीयः, शेषं सर्वं तथैव, तृतीये तु सौधर्मदेवलोकपरिगृहीतास्वेव सप्तपल्योपमलक्षणोत्कृष्टायुष्कास्वमरीषु वारद्वयमुत्पादनीयः, चतुर्थे त्वादेशे सौधर्मदेवलोक एवापरिगृहीतासु पञ्चाशत्पल्योपमलक्षणोत्कृष्टायुष्कासु सुरसुन्दरीषु वारद्वयं नेतव्यः, पञ्चमे त्वादेशान्तरे देवकुर्वादिषूत्पद्यमानस्य जन्तोः पूर्वकोटीपृथक्त्वाधिकपल्योपमपृथक्त्वलक्षणा स्त्रीवेदस्योत्कृष्टा स्थितिर्भावनीया, एतानि च पञ्चाप्यादेशान्तराण्यस्मादृशां छद्मस्थानां प्रमाणानि, केवलिनां त्वेकमेव किञ्चित् प्रमाणं, सूत्रकारेण त्विह ग्रन्थ एकमेव चतुर्थमादेशान्तरमभिहितं, न शेषाणि, ग्रन्थविस्तरभयादिकारणादित्यलं विस्तरेण । अथ पुरुषवेदादीनां स्थितिमाह—'पुरिसत्त'मित्यादि, पुरुषत्वं-पुरुषवेदस्तावन्नानाभवेषु निरन्तरमुदधीनां-सागरोपमाणां शतपृथक्त्वं सातिरेकं, जघन्यतस्त्वन्तर्मुहूर्त्तं भवतीति स्वयमपि द्रष्टव्यम्, परतो वेदान्तरस्यावेदकत्वस्य वा भावात्, तदुक्तम्—"पुरिसवेए णं भंते ! पुरिसवेएत्ति कालओ केच्चिरं होइ ?, गोयमा ! जहण्णेणं अंतोमुहुत्तं उक्कोसेणं सागरोवमसयपुहत्तं साइरेगं" ति, जघन्यपदे स्त्रीवेदवदस्य समयो न लभ्यते, उपशान्ताद्धायां मृतस्य देवेष्वपि पुरुषवेदस्यैव सद्भावाद्, अन्तर्मुहूर्त्तं तु पुरुषवेदवतोऽन्तर्मुहूर्त्तं जीवित्वा मृतस्य वेदान्तरे उत्पन्नस्य प्राप्यत इति भावनीयम्, नपुंसकवेदस्येह स्थितिर्नोक्ता, सा चोपलक्षणव्याख्यानाज्जघन्यतः समयलक्षणा उत्कृष्टतस्त्वनन्तकालात्मिका स्वयमेव द्रष्टव्या, यदाह—"नपुंसकवेयए णं भंते ! नपुंसग-

पुरुषादिवेद स्थितिः

वेयएत्ति कालओ केचिर होइ ?, गोयमा ! जहण्णेण एक्कं समयं उक्कोसेण अणंतं कालं, अणंता ओसप्पिणिउस्सप्पिणीओ कालओ खेत्तओ अणंता लोगा असंखेज्जा पोग्गलपरियट्टा, ते ण पोग्गलपरियट्टा आवलियाए असंखेज्जइभागो " त्ति, अत्र च नपुंसकस्य वेदत्रयमुपशमय्य प्रतिपतितस्य समयमेकं नपुंसकवेदमनुभूय मृत्वा देवेषूत्पन्नस्य जघन्यतः समयो लभ्यते, उत्कृष्टकालस्तु वनस्पत्यादिषु निरन्तरनपुंसकवेदमनुभवतो भावनीयः, संज्ञित्वमपि पुरुषवेदवज्जघन्यतोऽन्तर्मुहूर्तं उत्कृष्टतस्तु सातिरेकं सागरोपमशतपृथक्त्वं प्राप्यते, परतस्तदभावाद्, असंज्ञित्वमपि जघन्यत एवमेव, उत्कृष्टतस्तु नपुंसकवेदवदेव स्वयमपि द्रष्टव्यमिति गाथार्थः ॥ २३० ॥ अथ योगोपयोगादिगुणानां स्थितिकालमाह—

अंतमुहुत्तं तु परा जोगुवओगा कसाय लेसा य । सुरनारएसु य पुणो भवट्ठिई होइ लेसाणं ॥ २३१ ॥

'योगा' कायवाङ्मनोयोगलक्षणास्तेषां उपयोगा'-तद्विषयज्ञानोपयोगरूपा , विभक्तिव्यत्ययात्तेषां योगोपयोगानां परा-उत्कृष्टा स्थितिः प्रत्येकं भवति, कियतीत्याह—अन्तर्मुहूर्तमिति, इदमुक्तं भवति-इह यदा कायेन धावनवल्गनचपेटाप्रदानभङ्गकवर्त्तनादिकं व्यापारमुपयुक्तः करोति तदा काययोगस्य प्राधान्येन व्यापारात् काययोगस्योपयोगः काययोगोपयोग इत्यसौ व्यपदिश्यते, अयं चोत्कृष्टतोऽप्यन्तर्मुहूर्तमेव भवति, परतोऽनुपयोगस्योपयोगान्तरायस्य वा सद्भावादिति, यदा तु निश्चलगात्रो वचनाविशेषोपयुक्तोऽनवरतं वक्त्येव केवलं तदा वाग्योगस्य प्राधान्येन व्यापारादयं वाग्योगोपयोगोऽभिधीयते, यदा पुनर्निष्प्रकम्पशरीरो निरुद्धवाग्व्यापारश्च केवलेनैव मनसा उपयुक्तः किञ्चिद्विचिन्तयति तदा मनोयोगस्यैव प्राधान्येन व्यापारादसौ मनोयोगोपयोग इत्युच्यते,

एतावपि च वाग्योगोपयोगमनोयोगोपयोगौ प्रत्येकमुत्कृष्टतोऽप्यन्तर्मुहूर्त्तमेव भवतः, इह यद्यप्येकयोगव्यापारकालेऽन्ययोगव्यापारोऽप्यन्तर्गतः सम्भाव्यते तथापि वातादिदोषाणामिवोत्कटानुत्कटतामाश्रित्य तत्तद्व्यपदेशाव्यपदेशासिद्धिः, उक्तञ्च–' वायाईधाऊणं जाहे जो होइ उक्कडो धाऊ । कुविओत्ति सो पवुच्चइ न य इयरे तत्थ दो नत्थि ॥ १ ॥ एमेव य जोगाणं तिण्हवि जो जाहे उक्कडो जोगो । तस्स तहिं निद्देसो इयरे तत्थेक दो व न वा ॥२॥ ' इयरे तत्थेक दो व न व ' त्ति उत्कटाद्योगादितरोऽनुत्कटस्तत्रैको वा भवेत् द्वौ वा भवेतां न वा भवेदिति, इयमत्र भावना-केवलिनो वाच्युत्कटायां कायोऽप्यस्ति, अस्मदादीनां तु मनःकायाविति, शैलेश्यवस्थायां तु केवलिनः कायनिरोधकाले स एव केवलो भवति नान्य इति । ' कसाय ' त्ति कषायाः क्रोधमानमायालक्षणास्तेषामपि परा-उत्कृष्टा स्थितिः प्रत्येकमन्तर्मुहूर्त्तमेव, जघन्यतोऽपि त्रयाणामन्तर्मुहूर्त्तमेव, लोभस्य तु समयोऽवस्थितिः, विशिष्टं चोपयोगमाश्रित्य क्रोधादीनामियं स्थितिः, अन्यथा सत्तामात्रेण क्रोधादयः सदैव विद्यन्त एवेति, ततश्चेदमुक्तं भवति-क्रोधमानमायाद्युपयुक्तः प्रत्येकं जघन्यत उत्कृष्टतश्चान्तर्मुहूर्त्तमवतिष्ठते, लोभोपयुक्तस्तु जघन्यतः समयमुत्कृष्टतस्त्वन्तर्मुहूर्त्तमेव; उक्तञ्च-' कोहकसाईणं भंते ! कोहकसाइत्ति कालओ केच्चिरं होइ ?, गोयमा ! जहण्णेणऽवि उक्कोसेणऽवि अंतोमुहुत्तं, एवं माणमायाकसाइवि, लोभकसाई जहण्णेणं एक्कं समयं उक्कोसेणं अंतोमुहुत्तं 'ति, अयमत्रार्थः-क्रोधमानमायोपयुक्तः प्रत्येकं जघन्यतोऽन्तर्मुहूर्त्तमुत्कृष्टतोऽपि तदेव बृहत्तरमवतिष्ठते, लोभोपयुक्तस्तु जघन्यतः समयं, कथमिति ?,उच्यते, य उपशान्तमोहः प्रतिपतन्नेकं समयं लोभपुद्गलान् वेदयित्वाऽनन्तरं कालकरणादनुत्तरसुरेषूत्पद्यते, तस्य किल युगपत् सर्वेऽपि कषायाः प्रदेशोदयेनोदयमागच्छन्ति, न तु केवलो लोभ एवेत्येवं जघन्यतो लोभकषायोदयः केवलः समयमेकमवाप्यते, उत्कृष्टतस्त्वन्तर्मुहूर्त्तं क्रोधादिवदेव मन्तव्यम्,

आह–यद्येवमनया नीत्या क्रोधाद्युपयोगोऽपि जघन्यपदे समयप्रमाणः कस्मान्न लभ्यते ?, सत्य, किन्तु श्रेणिमस्तकात् प्रतिपततो यदा क्रोधादय उदयमागच्छन्ति तदोदयप्राप्तकषायादपरेऽपि कषायाः प्रदेशोदयेन युगपदेव वेद्यन्ते, अतो लोभवत् केवल क्रोधाद्युदयो न लभ्यते इति वृद्धा व्याचक्षत, तत्त्व तु केवलिनो विदन्तीति, 'लेसा य' त्ति लेश्यानामपि कृष्णनीलादीनां षण्णां तिर्यग्मनुष्येषु द्रव्यलेश्यां भावलेश्यां चाश्रित्य जघन्यत उत्कृष्टतश्चान्तर्मुहूर्त्तं स्थिति, देवनारकयोस्तु भावलेश्यामेवाधिकृत्य जघन्यत उत्कृष्टतश्चान्तर्मुहूर्त्तं स्थिति, द्रव्यलेश्याना तर्हि देवनारकयो कियती स्थितिरित्याह–'सुरनारएसु ये' त्यादि, सुरेषु यथासम्भव तिसृणां कृष्णाद्यशुभलेश्यानां या यस्य देवस्य नारकस्य वाऽऽत्मीया भवस्थितिरुक्ता तत्प्रमाणैव स्थितिरवगन्तव्या, तत्र सप्तमपृथ्वीनारकाणामुत्कृष्टत कृष्णलेश्या त्रयस्त्रिंशत्सागरोपमानि प्राप्यते, नीललेश्या तूत्कृष्टतः पञ्चमपृथिव्यामाद्यप्रस्तटे पल्योपमासंख्येयभागाधिकानि दश सागरोपमान्यवाप्यते, कापोतलेश्या तूत्कर्षतस्तृतीयपृथिव्यामाद्यप्रस्तटे पल्योपमासंख्येयभागाभ्यधिकानि त्रीणि सागरोपमानि लभ्यते, तैजसी पुनरुत्कृष्टत ईशानदेवलोके पल्योपमासंख्येयभागाधिक सागरोपमद्वयमवाप्यते, पद्मलेश्या तूत्कृष्टतो ब्रह्मलोके दश सागरोपमानि शुक्ललेश्या पुनरुत्कृष्टतोऽनुत्तरविमानेषु त्रयस्त्रिंशत्सागरोपमानि प्राप्यते, कृष्णनीलकापोतलेश्या भवनपतिव्यन्तरेषु देवेष्वपि सम्भवन्ति परमुत्कृष्टस्थितिप्रतिपादनार्थं नरकेष्वेव भाविता इति गाथार्थः ॥ २३१ ॥ अथ मतिज्ञानादिगुणानां स्थितिमाह–

छावट्ठिउयहिनामा साहिया मइसुओहिनाणाण । ऊणा य पुव्वकोडी मणसमइयछेयपरिहारे ॥ २३२ ॥

मतिश्रुतावधिज्ञानानि नैरन्तर्येणोत्कृष्टतः सातिरेकानि षट्षष्टिः सागरोपमानि प्राप्यन्ते, तथाहि-अत्रोत्पन्नमतिश्रुतावधिज्ञानः कश्चिद्देशोनां पूर्वकोटिं जीवित्वा त्रयस्त्रिंशत्सागरोपमस्थितिष्वनुत्तरविमानेषूत्पन्नः, ततः पुनरत्रागतो नरजन्मन्यप्रतिपतितप्रस्तुतज्ञानत्रयः पूर्वकोटिं जीवित्वा तावत्स्थितिष्वेवानुत्तरविमानदेवेषूत्पन्नः, पुनरप्रतिपतितप्रकृतज्ञानत्रयो मनुष्येष्वागत इत्येवं वारात्रयं मनुष्यभवायुष्केनाधिकानि षट्षष्टिः सागरोपमान्यधिकृतज्ञानत्रयमुत्कृष्टतोऽवाप्यते, अथवा स एव मनुष्योऽप्रतिपतितानुत्क्रान्तज्ञानत्रयो द्वाविंशतिसागरोपमस्थितिष्वच्युतदेवेष्वनेनैव क्रमेण वारात्रयमुत्पाद्येत इत्येवमपि प्रस्तुतः स्थितिकालो लभ्यते, तदुक्तम्-'दो वारे विजयाइसु गयस्स तिण्णच्चुए अहव ताइं । अइरेगं नरभवियं नाणाजीवाण सव्वद्धं ॥ १ ॥' अयं चोत्कृष्टोऽमीषां स्थितिकालः सूत्रेऽभिहितः, जघन्यतस्तु मतिश्रुतज्ञानयोरन्तर्मुहूर्त्तं, अवधिज्ञानस्य तु समयः, कथमिति चेदुच्यते, तिर्यङ् मनुष्यो वा विभङ्गज्ञानी कश्चित् सम्यक्त्वं प्रतिपद्यते, तस्य च तद्विभंगज्ञानं प्रथमं समयमेकमवधिरूपतां प्रतिपद्यते, ततोऽवधिज्ञानावरणोदयान्मूलत एव यदा प्रतिपतति तदाऽवधिज्ञानं जघन्यतः समयमेकमवाप्यत इति, उक्तञ्च-' मइनाणी जहण्णेणं अंतोमुहुत्तं, एवं सुयनाणीवि, ओहीनाणी जहण्णेणं एकं समयं ' ति, ' ऊणा य पुव्वकोडी'त्यादि, मनःपर्यायज्ञानस्य किञ्चिन्न्यूनवर्षनवकेन न्यूना पूर्वकोटिरुत्कृष्टा स्थितिः, चारित्रिण एव मनःपर्यायज्ञानं भवति, चारित्रं च गर्भकालादारभ्य किञ्चिन्न्यूनवर्षनवक एवातिक्रान्ते प्रायः सम्पद्यते, अत एतावता न्यूना पूर्वकोटिः, जघन्यतस्त्विदमेकमेव समयमवाप्यते, समुत्पन्नमनःपर्यायज्ञानस्याप्रमत्तसंयतस्य समयादूर्ध्वं मरणसम्भवेन देवेषूत्पादात् तेषु च मनःपर्यायज्ञानस्याभावादिति, सामायिकच्छेदोपस्थापनीये अपि चारित्रे, अतोऽनयोरप्येतावत्येव न्यूना पूर्वकोटिः प्रत्येकमुत्कृष्टा स्थितिः, जघन्यतोऽनयोरपि प्रत्येकं समयमानैव स्थितिरवसेया,

तदनन्तरं मृत्वा देवेषूत्पादसम्भवादिति, परिहारविशुद्धिकचारित्रस्यापि जघन्यत' समय', उत्कृष्टतस्तु किंचिन्न्यूनैरेकोनत्रिंशद्भिर्वर्षैरूना पूर्वकोटि स्थिति, उक्तञ्च—" परिहारविसुद्धिए ण भंते ! परिहारविसुद्धिएत्ति कालओ केचिरं होइ ?, गोयमा ! जहण्णेणं एकं समयं उक्कोसेणं देसूणाए एगूणतीसाए वासेहिं ऊणिया पुव्वकोडि " त्ति, इह जघन्यपदं पूर्ववन्मरणापेक्षयैव, उत्कृष्टपदभावना त्वेयम्–इह परिहारविशुद्धिकचारित्रं जघन्यतोऽपि नवमस्य पूर्वस्य तृतीयमाचारवस्तु यावद् दृष्टिवादेऽधीत एव सति प्रतिपद्यते, ततश्च देशोननवर्षपर्यायेण केनापि पूर्वकोट्यायुषा प्रव्रज्या प्रतिपन्ना, तस्य च विंशतिवर्षपर्यायस्य दृष्टिवादोऽनुज्ञात , एतावत्प्रव्रज्यापर्यायादर्वाग् दृष्टिवादानुज्ञाया समये प्रतिषिद्धत्वात् , ततश्चासौ परिहारविशुद्धिकचारित्रं प्रतिपद्यते, तच्चाष्टादशमासमानमप्यविच्छिन्नतत्परिणामेनैतेनाजन्म परिपालितमिति देशोनैकोनत्रिंशद्वर्षोना पूर्वकोटिस्तस्योत्कर्षत. स्थितिकालो भवति, सूक्ष्मसम्परायचारित्रस्य जघन्यत समय उत्कृष्टतस्त्वन्तर्मुहूर्त्तं, यथाख्यातचारित्रस्य तु जघन्यत समय उत्कृष्टतस्तु देशोना पूर्वकोटि स्थितिकाल इति प्रागपि वस्तुतो निर्णीतप्रायमिति नेहोक्तम् , केवलज्ञानस्यापि सादिरपर्यवसित. स्थितिकाल प्रतीत एवेति, इह ज्ञानस्थितिकालाभिधानप्रस्तावेऽपि नोक्त इति गाथार्थ ॥ २३२ ॥ अथ विभगज्ञानादिगुणाना स्थितिकालमाह–

विब्भगस्स भवट्ठिइ चक्खुस्सुदहीण बे सहस्साइं । साइ अपज्जवसिओ सपज्जवसिओ त्तिय अचक्खु ॥२३३॥

ज्ञानस्य स्थितिकालस्तावदनन्तरमभिहितः, साम्प्रतं तु ज्ञानप्रतिपक्षत्वादज्ञानस्य स्थितिकालोऽभिधानीय., तच्चाज्ञानं त्रिविधम्-मत्यज्ञानं श्रुताज्ञानं विभङ्गज्ञानं च, तत्र मत्यज्ञानं श्रुताज्ञानं चानाद्यपर्यवसितमभव्यानां भव्यानां त्वनादिमिथ्यादृशां तदेवानादि-

सपर्यवसितं भवति, प्रतिपतितसम्यग्दृष्टीनां पुनर्जघन्यतोऽन्तर्मुहूर्त्तमुत्कृष्टतस्त्वपार्द्धपुद्गलपरावर्त्त इत्येवंरूपं सादिसपर्यवसितं कालं यावत् प्राप्यते, उपलक्षणव्याख्यानादिदं तावत् स्वयमेव द्रष्टव्यम्, विभङ्गज्ञानस्य तु स्थितिं सूत्रकार एवाह- 'विब्भंगस्स भवट्ठिइ' त्ति यत्र तिर्यग्भवे मनुष्यभवे वा स्थितस्य जन्तोर्विभंगज्ञानमुत्पन्नं यत्र च भवे तेन गृहीतेन गच्छति तयोर्भवयोरुत्कृष्टा स्थितिः सा किंचिन्न्यूना विभंगज्ञानस्य नैरन्तर्येणोत्कृष्टाऽवस्थितिकालरूपतया विज्ञेयेति तात्पर्यम्, तथाहि-तिरश्चो मनुष्यस्य वा किंचिद् व्यक्तस्य सतः कस्यचिद् विभंगज्ञानमुत्पन्नम्, तेन चोत्पन्नेन देशोनां पूर्वकोटिमिहासौ जीवितः, गुणाभासेन हि केनचिद् विभंगज्ञानमुपजायते, स च गुणाभासः किंचिदव्यक्तस्यैव भवति, अतः पूर्वकोटेर्देशोनता, ततश्चाप्रतिपतितविभंग एव अधःसप्तम-पृथिव्यामुत्पन्नस्त्रयस्त्रिंशत्सागरोपमानि जीवित इत्येवं विभंगज्ञानस्य भवद्वयं नैरन्तर्येण देशोनपूर्वकोट्याऽधिकानि त्रयस्त्रिंशत् सागरो-पमान्युत्कृष्टतः स्थितिकालः सिद्धो भवति, जघन्यतस्तु समयरूपः, स चेत्थमवगन्तव्यः-मिथ्यादृष्टेः कस्यचिद्विशुद्धिमासादयतः समयमेकं विभंगज्ञानमुत्पन्नं, तदनन्तरं च प्रकर्षमनुभवन्त्यां विशुद्धौ सम्यक्त्वे लब्धे तदेव विभंगज्ञानमवधिरूपतया परिणतमित्येवं जघन्यतः समयप्रमाणोऽस्यावस्थितिकालः, उक्तं च- "विभंगनाणी णं भंते! विभंगनाणित्ति कालओ केच्चिरं होइ, गोयमा! जहण्णेणं एकं समयं उक्कोसेणं तेत्तीसं सागरोवमाइं देसूणाए पुव्वकोडीए अब्भहियाइं" ति, तदेवं ज्ञानानामज्ञानानां च प्रोक्तः स्थिति-कालः,अथ चक्षुरादिदर्शनानां तमभिधित्सुराह- 'चक्खुस्सुदहीण वेसहस्साइं' ति चक्षुषः-चक्षुर्दर्शनलब्धिरूपस्य सागरोपम-सहस्रद्वयं नैरन्तर्येणोत्कृष्टोऽवस्थितिकाल इति तावत् सूत्रकाराभिप्रायः, एष चासंगत इव लक्ष्यते, समयविसंवादाद्युक्तिविरोधाच्च, तथाहि-समये तावदुक्तम्-'चक्खुदंसणी णं भंते ! चक्खुदंसणित्ति कालओ केच्चिरं होइ ?, गोयमा ! जहण्णेणं अंतोमुहुत्तं उक्कोसेणं

सागरोवमसहस्सं साइरेग ' त्ति, तदनेन सातिरेकसागरोपमसहस्रस्थितिप्रतिपादकेन सिद्धान्तवचनेन सह एतत् सागरोपमसहस्रद्वयस्थित्यभिधायक वचन विसवदति, अपर च- पज्जत्तयसथालिन्दिय सहस्समब्भहियमुयहिनामाण । दुगुण च तसत्ति भवे ' इत्यादिप्रागुक्तगाथायामस्मिन्नेव ग्रन्थे तथा सिद्धान्ते च सर्वेषामेव द्वीन्द्रियादित्रसानां सातिरेकसागरोपमसहस्रद्वयलक्षणः स्थितिकाल' प्रतिपादित स कथ केवलानामेव चक्षुर्दर्शनिनां चतुरिन्द्रियपचेन्द्रियाणा सम्भवति ?, चतुरिन्द्रियाणा हि सख्येय काल पंचेन्द्रियाणा तु सातिरेक सागरोपमसहस्रमेक प्रस्तुतग्रन्थे सिद्धान्ते च कायस्थितिरुक्ता, न चैतांश्चतु'पचेंद्रियान् विहायान्येषा चक्षुर्दर्शन सम्भवति, तत सिद्धान्तोक्त एव चक्षुर्दर्शनस्य स्थितिकालो युक्त्या सगच्छते, न तु प्रस्तुतग्रन्थोक्तो, युक्तिविरोधादिति, ' अचक्खु ' त्ति, अचक्षुर्दर्शनी जीव चक्षुर्वर्जशेषेन्द्रियचतुष्टयदर्शनलब्धिमान् जन्तुरिति तात्पर्यम्, अभव्यमाश्रित्यासौ अकारस्य लुप्तस्येह दर्शनादनादिरपर्यवसितश्च भवति, अभव्याना स्पर्शनेन्द्रियमाश्रित्याचक्षुर्दर्शनलब्धेरनादित्वादपर्यवसितत्वाच्चेति, 'सपज्जवसिओत्ति य' त्ति अनादिरित्यनुवर्त्तमानमेव सम्बध्यते, ततश्च स एवाचक्षुर्दर्शनी जन्तुर्भव्यमाश्रित्यानादि सपर्यवसितश्च भवति, भव्यानां स्पर्शनेन्द्रियमपेक्ष्याचक्षुर्दर्शनलब्धेरनादित्वात् केवलज्ञानोत्पत्तिकाले पर्यवसितत्वाच्चेति, अवधिदर्शनकेवलदर्शनयोस्तु स्थितिकालो ग्रन्थविस्तरभयादिकारणात् सूत्रकृता नोक्त, स चागमे इत्थ प्रतिपादित स्वयमेव द्रष्टव्य - ' ओहिदसणी ण भते ! ओहिदसणित्ति कालओ केच्चिर होइ ? गोयमा ! जहण्णेण एक्क समय उक्कोसेण दोछावट्ठीओ सागरोवमाण साइरेगाउ 'त्ति, अस्य भावना- इह तिर्यङ्मनुष्याणामन्यतर. कश्चिद्विभगज्ञानी सप्तमनरकपृथिव्या त्रयस्त्रिंशत्सागरोपमस्थितिषु नरकेषूत्पन्नः, तत्र चोद्वर्त्तनाकालासन्न सम्यक्त्व प्रतिपद्य पुन' प्रतिपत्य च विभगज्ञानान्वित एवाविग्रहेण पूर्वकोटीस्थितिषु तिर्यक्षु जात., स्वायुःपर्यन्ते

||२४०||

चाप्रतिपतिताविभंग एव पुनरपि सप्तमपृथिव्यां त्रयस्त्रिंशत्सागरोपमायुर्नारको जातः, पुनरप्युद्वर्त्तनाकालप्रत्यासत्तौ सम्यक्त्वं
प्रतिपद्य पुनः परित्यज्य चाप्रतिपतितविभंग एवाविग्रहेण पूर्वकोट्यायुष्केषु तिर्यक्षूत्पन्नः, इत्येवं तावदेका षट्षष्टिः सागरोपमाणां
सातिरेका सिद्धा, द्वितीया त्वसावितथमवगन्तव्या-स एव जीवोऽप्रतिपतितविभंगस्तिर्यग्भ्यो मनुष्येष्वविग्रहेणोत्पन्नः, तत्र च
सम्यक्त्वं अवधिं च प्राप्य 'दो वारे विजयाइसु गयस्स तिन्नच्चुए अहव ताइं' इत्यादिप्रागुक्तक्रमेणाप्रतिपतितमवधिज्ञानं धारयन्न-
वधिदर्शनस्य द्वितीयां सातिरेकषट्षष्टिसागरोपमाणां पूरयति, परतस्तु मुक्तिमवाप्नोतीति, इह च विभंगज्ञानावधिज्ञानयोः परस्परं
भेदो दर्शनं तु सामान्याववोधरूपं द्वयोरपि तुल्यत्वादवधिदर्शनमुच्यते, आगमे तथैवाभ्युपगतत्वादित्यवधिदर्शनस्य सातिरेके द्वे प-
ट्षष्टी सागरोपमाणां नैरन्तर्येणावस्थितिकालः सम्पन्नो भवति, आह-कस्मात् पुनः सप्तमनरकपृथिव्यां विभंगज्ञानी वाराद्वयं स्वायुःपर्यन्ते
सम्यक्त्वं ग्राहितः?, उच्यते, विभंगज्ञानस्य निरन्तरं परतः स्थित्यभावात्,तथा च प्रागुक्तम्-'विभंगणाणी जहण्णेणं एक्कं समयं उक्कोसेणं
तेत्तीसं सागरोवमाइं देसूणाए पुव्वकोडीए अब्भहियाइं' ति, पुनरप्याह-तिर्यङ्मनुष्येषु तर्हि किमर्थमविग्रहेण विभंगज्ञानी उत्पादितः?
सत्यं, विग्रहेण अनाहारकत्वप्रसङ्गात्, तिर्यग्मनुष्येषु च विभंगज्ञानिनोऽनाहारकत्वस्य निषेधात्,तदुक्तम्-विभंगनाणिपंचेंदियति-
रिक्खजोणिया मणूसा य आहारगा अणाहारगा?, आहारगा नो अणाहारग" त्ति,तदेवमेतेषां व्याख्यानमुपदर्शितम्, अन्ये त्वेवं व्याचक्षते
किं नः सप्तमनरकपृथिवीनिवासिनारकादिपरिकल्पनया?, सामान्येनैव नारकतिर्यङ्नरामरभवेषु पर्यटतः खल्ववधिविभंगौ निरन्तरं
सातिरेकसागरोपमषट्षष्टिद्वयं भवतस्ततोऽवधिदर्शनस्य निरन्तरमेतावानवस्थितिकाल इत्यलं विस्तरेण, केवलसामान्यावबो-
धस्वरूपस्य तु केवलदर्शनस्य सादिरपर्यवसितः स्थितिकाल इति गाथार्थः ॥ २३३ ॥ अथ भव्यत्वादिगुणानां स्थितिकालमाह—

भव्वो अणाइ सन्तो अणाइऽणंतो भवे अभव्वो य । सिद्धो य साइऽणंतो असंखभागंगुलाहारो ॥ २३४ ॥

भव्यस्तावदनादिः सान्तश्च भवति, इदमुक्तं भवति भव्यस्य जन्तोर्योऽसौ भव्यत्वगुणः सोऽनादिकालात् प्रवृत्तत्वादनादिरुच्यते, सिद्धावस्थायां तु नियमान्निवर्तिष्यतीति सान्तः प्रतिपाद्यते, सिद्धो हि न भव्यो नाप्यभव्यः, तथाहि भविष्यति मुक्तिपर्यायेणेति भव्य उच्यते, न भविष्यति मुक्तिपर्यायेण कदाचिदपीति चाभव्यो व्यपदिश्यते, सिद्धस्य चैतद् द्वितयमपि नास्ति, मुक्तिपर्यायस्य तेनानुभूयमानत्वात्, तस्माद्भव्यत्वस्य सिद्धावस्थायां निवृत्तत्वात् सान्तत्वमवसेयम्, अभव्यस्त्वनाद्यनन्तः अनादिकालात् प्रवृत्तत्वादनादि तस्याभव्यत्वं, मुक्तिपर्यायस्य च कदाचिदप्यप्राप्तेस्तस्य तदनन्तमित्यर्थः, 'सिद्धो य साइऽणंतो'त्ति सिद्धस्य सिद्धत्वं विशुद्धज्ञानदर्शनचारित्रानुष्ठानानन्तरभावित्वात् सादि भवति, लब्धस्य च कदाचिदपि प्रतिपाताभावादनन्तमितिभावः, आहारकत्वगुणस्य स्थितिकालमाह—'असंखभागंगुलाहारो' त्ति, आहारको जीवस्तद्भावेन निरन्तरमङ्गुलासङ्ख्येयभागक्षेत्रप्रमाणं कालं यावदवतिष्ठते, इदमुक्तं भवति 'अंगुलअसंखभागो ओसप्पिणिओ असंखेज्जा' इति वचनादङ्गुलासङ्ख्येयभागप्रमाणे क्षेत्रेऽसङ्ख्येया उत्सर्पिण्यो भवन्ति, ततश्चाहारकः प्राणी निरन्तरमाहारकपुद्गलान् गृह्णानः कश्चिज्जघन्यतस्त्रिसमयोनक्षुल्लकभवग्रहणं यावत् प्राप्यते इत्येतत् सूत्रेऽनुपात्तमपि स्वयमेव द्रष्टव्यम्, उत्कृष्टतस्त्वसङ्ख्येया उत्सर्पिण्यवसर्पिणीर्यावन्निरन्तरमाहारको लभ्यत इत्येतत्तु सूत्रेऽप्यभिहितमिति, तत्र जघन्यपदमित्थं भावनीयम्—कश्चिदेकेन्द्रियादिर्जीवो मृतः पूर्वाभिहितप्रकारेण च विग्रहे समयत्रयमनाहारको भूत्वा क्षुल्लकभवग्रहणायुष्केषु पृथिव्यादिषूत्पन्नः, तत्र च तावन्तं कालं निरन्तरमाहारको भूत्वा मृतः पुनरपि विग्रहेऽनाहारको जात

भव्याभव्य सिद्ध स्थिति काल.

इत्येवं जघन्यतस्त्रिसमयोनं क्षुल्लकभवग्रहणमाहारकत्वमिति, उत्कृष्टपदभावनायां त्वसंख्येया उत्सर्पिण्यवसर्पिणीर्यावदृजुवान्तरेषूत्पद्यमानोऽविग्रहेणैवोत्पद्यते, ततश्चैतावन्तं कालं उत्कृष्टतो निरन्तरमाहारको लभ्यते; उक्तञ्च—"छउमत्थाहारए णं भंते! छउमत्थाहारएत्ति कालओ केच्चिरं होइ ?, गोयमा! जहण्णेणं खुड्डागभवग्गहणं तिसमऊणं उक्कोसेणं असंखेज्जं कालं, असंखेज्जाओ कालओ ओसप्पिणीउस्सप्पिणीओ खेत्तओ अंगुलस्स असंखेज्जइभागं "ति इति गाथार्थः ॥ २३४ ॥ अथ काययोगादिगुणानां पूर्वसूत्रेऽनभिहितं जघन्यस्थितिकालमाभिधित्सुराह—

**काओगी नरनाणी मिच्छं मिस्सा य चक्खु सण्णी य। आहारकसायीवि य जहण्णमंतोमुहुत्तंतो ॥ २३५ ॥**

चीयत इति कायः-शरीरं तस्य केवलस्य सम्बन्धी योगो-व्यापारः स यस्यास्त्यसौ काययोगी, अस्य च जघन्यतोऽन्तर्मुहूर्त्तमवस्थितिकालः, उत्कृष्टतस्तु प्रागेव 'काओओऽणंतकाल' मित्यादिगाथायामभिहितः, जघन्यकालस्य भावनाऽप्येतद्गाथावृत्तौ प्रागुक्तेति नेहोच्यते, 'नर' त्ति भावप्रधानत्वान्निर्देशस्य नरत्वमित्यर्थः, तच्चेह पुरुषवेदरूपं पुंस्त्वं मनुष्यत्वं वा, तत्र पुरुषवेदस्य जघन्यतोऽन्तर्मुहूर्त्तलक्षणः स्थितिकालः पूर्वमेव 'देवी पणपण्णाऊ इत्थित्त' मित्यादिगाथावृत्तौ भावितः, मनुष्यत्वं तु जघन्यतोऽन्तर्मुहूर्त्तं भवतीति प्रतीतमेव, मनुष्याणां जघन्यतोऽन्तर्मुहूर्त्तायुष्कत्वेन प्रागत्रैव प्रतिपादितत्वादिति, उत्कृष्टोऽप्येतत्कालः प्रागेवोक्तः; 'नाणि' त्ति सामान्येन ज्ञानमस्यास्तीति ज्ञानी, स च जघन्यतोऽन्तर्मुहूर्त्तमुत्कृष्टतोऽपर्यवसितलक्षणमनन्तं कालमवाप्यते, तत्र मिथ्यादृष्टिः सम्यक्त्वे प्राप्ते ज्ञानी सञ्जातस्तद्भावेन चान्तर्मुहूर्त्तं स्थित्वा पुनर्मिथ्यात्वं गतोऽज्ञानी सम्पन्न इत्येवं जघन्येन

ज्ञानिनोऽन्तर्मुहूर्तमवस्थितिकाल इति, उत्कृष्टतस्तु केवलज्ञानलक्षणं ज्ञानमाश्रित्य ज्ञानी अपर्यवसितलक्षणमनन्त काल लभ्यत इति गुरवोऽभिदधतीति, 'मिच्छ' त्ति मिथ्यात्व जघन्यतोऽन्तर्मुहूर्त भवति, तच्च सम्यग्दृष्टे प्रतिपत्य मिथ्यात्व गतस्य तत्र चान्तर्मुहूर्त स्थित्वा पुनर्लब्धसम्यक्त्वस्य प्रायेण 'मिच्छत्तमणाईय अपज्जवसिय'मित्यादिगाथावृत्तौ उत्कृष्टकालभावना प्रक्रमे भावितमेव, 'मिस्सा य' त्ति मिश्र सम्यग्मिथ्यात्वमिति तात्पर्यम्, तदपि जघन्यतोऽन्तर्मुहूर्त भवति, अस्य च सम्यग्मिथ्यात्वस्य जघन्य उत्कृष्टश्च स्थितिकाल 'सासायणेगजीविये'त्यादिगाथायां यद्यकृता प्रागप्युक्त, किन्तु जघन्यतोऽन्तर्मुहूर्तस्थितिकगुणाभिधानप्रस्तावात् पुनरप्यभिहित इति, 'चक्खु'त्ति चतु पञ्चेन्द्रियाणां चक्षुर्द्वारोत्पन्नसामान्योपयोगलक्षण चक्षुर्दर्शन, तदपि जघन्यतोऽन्तर्मुहूर्तमेव भवति, उत्कृष्टस्त्वेतदवस्थितिकाल पूर्वं 'विब्भगस्स भवट्ठिई'त्यादिगाथायामुक्त', 'सण्णी य'त्ति संज्ञिपञ्चेन्द्रियगर्भजो जीव, सोऽपि निरतर तद्भावेन जघन्यतोऽन्तर्मुहूर्तमवाप्यते, उत्कृष्टावस्थितिकालस्तु 'पुरिसत्त सण्णित्त च सयपुहुत्त च उदहीण' मित्यत्रैव प्रतिपादित, 'आहार'त्ति आहारयतीत्याहारको जीव', सोऽपि निरतर तद्भावे जघन्यतोऽन्तर्मुहूर्तमवाप्यते, आह ननु 'असखभागगुलाहारो'त्ति उत्कृष्टाहारकस्थितिकालप्रतिपादकगाथाऽवयवविवरणप्रक्रमे त्रिसमयोन क्षुल्लकभवग्रहणमाहारकत्वस्य जघन्य स्थितिकाल उक्तोऽत्र त्वन्तर्मुहूर्तलक्षण इति कथ न विरोध इति, नैतदेव, भावार्थापरिज्ञानात्, अत्राप्याहारकत्वस्य जघन्यस्थितिरूपतया यदन्तर्मुहूर्तमुच्यते तदपि त्रिसमयोनक्षुल्लकभवग्रहणमानमेवावसेयम्, अन्तर्मुहूर्तस्यानेकभेदत्वादिति न कश्चिद्विरोध इति, 'कसायाणि य'त्ति कषाया सामान्येन कषायमोहनीयकर्मोदयरूपा इह गृह्यन्ते, सामान्येन गरणापित्वमात्र कषायशब्दाच्यत्वेनेह विवक्षितमित्यर्थ', तच्चागमे स्थितिकालमपेक्ष्य भगवत्यवयवर्तित्वेनोक्तम्,

तद्यथा-" सकसाई णं भंते ! सकसाइत्ति कालओ कीच्चरं होइ ?, गोयमा ! सकसाई तिविहे पण्णत्ते, तंजहा-अणाईए वा अपज्जवसिए अणाईए वा सपज्जवसिए साईए वा सपज्जवसिए, तत्थ णं जे से साई सपज्जवसिए से जहण्णेणं अंतोमुहुत्तं उक्कोसेणं अवड्ढपोग्गलपरियट्टं देसूणं"ति, तत्र मिथ्यात्वस्येव प्रथमभंगकोऽत्राप्यभव्यानां, द्वितीयस्त्वनादिमिथ्यादृशां भव्यानां, तृतीयभंगके तु य उपशान्तवीतरागावस्थायामकषायीभूत्वा प्रतिपत्य पुनः सकषायित्वं प्रतिपद्यतेऽन्तर्मुहूर्त्ताच्च पुनरप्युपशमश्रेणौ कृतायामकषायी सम्पद्यते तस्यान्तर्मुहूर्त्तप्रमाणं जघन्यपदवर्त्ति सकषायित्वं लभ्यते, यस्तूपशान्तवीतरागावस्थायाः प्रतिपत्य सकषायीभूत्वाऽपार्द्धपुद्गलपरावर्त्तं यावत् संसारसागरं परिभ्रम्य पुनरप्यकषायी भवति तस्योत्कृष्टपदोक्तं सकषायित्वं द्रष्टव्यम् , प्रस्तुतविचार्यमाणगाथायां तु सकषायित्वस्य तृतीयभंगकजघन्यपदमेवोक्तम्, शेषं तूपलक्षणत्वात् स्वयमेव द्रष्टव्यम् , अन्तर्मुहूर्त्तस्थितिगुणकालस्यैव प्रस्तुतगाथायामभिधातुमिष्टत्वादिति, 'जहण्णमंतोमुहुत्तंतो' त्ति एतत् पदं काययोगादिषु प्रत्येकं सर्वत्र योजनीयं, तच्च योजितमेवेति गाथार्थः ॥ २३५ ॥ तदेवमन्तर्मुहूर्त्तस्थितिकगुणाः सम्पिण्ड्योक्ताः, साम्प्रतं तु जघन्यतः समयस्थितिकान् मनोयोगादीन् गुणान् संगृह्य विवक्षुराह-

**मणवइउरलविउव्विय आहारयकम्म जोग अणरित्थी । संजमविभागविब्भंग सासणे एगसमयं तु ॥ २३६ ॥**

समयमात्र स्थितिका भावाः

जघन्यत इति पूर्वगाथातोऽनुवर्त्तमानं सम्बध्यते, योगशब्दोऽपि ' कम्मजोग ' त्ति अस्मिन् पदे उपात्तोऽपि यथासम्भवमन्यत्रापि योज्यते, ततश्च मनोयोगस्तावज्जघन्यतः समयमेकं भवति,कस्यचिद्गर्भजपंचेंद्रियस्य समयमेकं मनःपर्याप्त्या पर्याप्तत्वमा-

साध तदनन्तर मरणसम्भवादिति, एव वाग्योगोऽपि जघन्यत समयमेकं भवति, कस्यापि द्वीन्द्रियादिजीवस्य समयमेक मापापर्याप्त्या पर्याप्तत्वमनुभूय तदनन्तर मरणभावादिति, ' उरल'त्ति, औदारिकशरीरी वैक्रिय कृत्वा प्रयोजनसिद्धौ परित्यज्य च पुनरौदारिकमागत समयमेक जीवित्वा मृत कार्मणयोगी वैक्रिययोगी वा सञ्जात इत्यनया विवक्षया औदारिककाययोगो जघन्यत' समयस्थितिको भवति, वैक्रियलब्धिरहितानां तु पृथिव्यादीनामौदारिककाययोगो जघन्यतोऽप्यन्तर्मुहूर्त्तिक एव विज्ञेय', ' वेउव्विय ' त्ति औदारिकशरीरिणा वाग्गादिना वैक्रियमारब्ध, तदारम्भे च समयमेक जीवित्वा मृतो योगान्तर चापन्न इत्येव वैक्रियकाययोगोऽपि जघन्यत' समयमवाप्यते, ' आहारय '-त्ति चतुर्दशपूर्वधर आहारकशरीरयोग्यान् पुद्गलान् समयमेक गृहीत्वा मृत इत्याहारककाययोगो जघन्यत समय इत्येव तावत् केचिद् व्याचक्षते, एतच्चानागमिकमिव लक्ष्यते, आहारकशरीरस्यागमे जघन्यत उत्कृष्टतश्चान्तर्मुहूर्त्तस्थितिकत्वेनोक्तत्वात्,तस्मात् कृताहारकशरीरश्चतुर्दशपूर्वधर कार्यसिद्धिप्रत्यासत्तिकाले मनोयोगाद्वाग्योगाद्वा उत्तीर्य पुनरपि च समयमेकमाहारककाययोगमनुभूयौदारिकशरीर प्रतिपद्यत इत्यनया कयाचिद् विवक्षया यदि पर जघन्यत समयस्थितिकोऽयमाहारककाययोगो भवतीत्यल विस्तरेण । 'कम्मजोग'त्ति विग्रहे यदा एक समयमनाहारको भवति तदा कार्मणकाययोगस्य जघन्यत' समयस्थितिकत्वमवगन्तव्यम्, ' अणरित्थि ' त्ति न नरोऽनरः पर्युदासाश्रयणान्नपुसकोऽत्र विवक्षित ततश्चानरश्च स्त्री चानरस्त्रियौ, नपुमकवेदस्त्रीवेदाविति भावः, तयोरपि प्रत्येक जघन्यत समय स्थितिकालः, एतच्च ' देवी पणपण्णाऊ 'इत्यादिगाथावृत्तौ भावनासहित निर्दिष्टमेवेति, ' सजमविभाग'त्ति सयम सामान्येन चारित्ररूपोऽत्र विवक्षितस्तस्य विभागा भेदाः सामायिकच्छेदोपस्था-

पनीयपरिहारविशुद्धिकसूक्ष्मसम्परायथाख्यातचारित्रलक्षणाः पंच, एतेऽपि प्रत्येकं जघन्यतः समयस्थितिका भवंति, एतदपि भावनासहितं 'छावट्ठिउयहिनामा साहीया' इत्यादिगाथाविवरणे दर्शितमेवेति, 'विब्भंग' त्ति विभङ्गज्ञानमपि जघन्यतः समयस्थितिकमेव, यथा चैवं तथा 'विब्भंगस्स भवट्ठिई' त्यादिगाथावृत्तौ प्रोक्तमेवेति, 'सासणे' त्ति सासादनसम्यक्त्वमपि जघन्यतः समयस्थितिकं, एतच्च सूत्रकृताऽपि 'सासायणेगजीवियं' त्यादिगाथायां प्रागुक्तमेव, केवलं समयस्थितिकगुणसंग्रहप्रक्रमात् पुनरप्युक्तमिति न पुनरुक्ततादोषो भावनीय इति, मनोयोगादीनां चोत्कृष्टोऽवस्थितिकालः सूत्रे तत्र प्रागेवोक्त इति नेहाभिहित इति गाथार्थः ॥ २३६ ॥ पूर्वं सामायिकादिचारित्रविभागानां पंचानामप्येकैकजीवाश्रितो जघन्य उत्कृष्टश्चोक्तः स्थितिकालः, साम्प्रतं छेदोपस्थापनीयं परिहारविशुद्धिकं च चारित्रं नानाजीवेष्वव्यवच्छिन्नं जघन्यत उत्कृष्टतश्च कियन्तं कालमवाप्यते इत्येतद्विशेषतश्चिन्तयितुकामो जघन्यतस्तावच्चिन्तयति—

**अड्ढाइज्जा य सया वीसपुहुत्तं च होइ वासाणं । छेयपरिहारठाणं जहण्णकालाणुसारो उ ॥ २३७ ॥**

जघन्यतः सार्द्धं वर्षशतद्वयं नानाजीवेष्वव्यवच्छिन्नं 'छेय'त्ति छेदोपस्थापनीयं चारित्रमवाप्यत इति सम्बन्धः, एतच्चोत्सर्पिण्यास्तृतीयारके नवाशीतिपक्षेषु गतेषु प्रथमतीर्थकरोत्पत्तौ छेदोपस्थापनीयचारित्रे प्रवृत्तेऽर्द्धतृतीयवर्षशतलक्षणे तत्तीर्थे द्रष्टव्यम्, द्वितीयतीर्थकरतीर्थे छेदोपस्थापनीयचारित्राभावादिति, 'परिहारगाणं' ति परिहारविशुद्धिकचारित्रिणां पुनर्जघन्यकालस्यानुसारः-अनुसरणं निरन्तरप्रवृत्तिरित्यर्थः, विंशतिपृथक्त्वं वर्षाणां भवति, कथमिति चेदुच्यते, वर्षशतायुषा केनापि नवकेन

गणेन पूर्वोक्तहेतोरेकोनत्रिंशद्वर्षेषु गतेष्ववसर्पिणीचरमतीर्थकरसमीपे परिहारविशुद्धिकचारित्र प्रतिपद्यैकसप्तति वर्षाणि निरन्तरमनुपालित, तदायु पर्यन्ते च तत्समीपे वर्षशतायुषैवान्येन नवकगणेन पूर्वोक्तयुक्तेत एवैकोनत्रिंशद्वर्षेषु स्वायुषोऽतिक्रान्तेषु प्रस्तुतचारित्रमङ्गीकृत्यैकसप्ततिमेव वर्षाणि निरन्तरमनुष्ठित, अत परमिद न कोऽपि प्रतिपद्यते, तीर्थकर तत्समीपप्रतिपन्नसक्त तच्चारित्र वा विहायान्यस्यान्तिके तत्प्रतिपत्तेर्निषेधादिति, एव च सति द्विचत्वारिंश वर्षशत निरन्तरमेतत्प्रतिपत्तिरुक्ता भवति, एतदेव च विंशतिपृथक्त्ववाच्यत्वेन विवक्षितमत्रावगन्तव्यम्, वर्षद्वयाधिकाभि सप्तभिर्विंशतिभिर्मध्यमस्य विंशतिपृथक्त्वस्य भावादिति गाथार्थ ॥ २३७ ॥ एतयोरेव चारित्रयोर्नानाजीवगतमुत्कृष्ट कालमाह—

कोडिसयसहस्साइ पन्नास हुति उयहिनामाण । दो पुव्वकोडिऊणा नाणाजीवेहि उक्कोसं ॥ २३८ ॥

नानाजीवैरुत्कृष्ट कालमाश्रित्य पूर्वगाथातोऽनुवर्त्तमान छेदोपस्थापनीयचारित्र पञ्चाशत्कोटिशतसहस्राण्युदधिनाम्ना—सागरोपमाना भवति, पञ्चाशत्कोटिलक्षसागरोपमप्रमाणेऽवसर्पिणीकालप्रथमतीर्थकरतीर्थे निरन्तरमव्यवच्छिन्न प्राप्यत इत्यर्थः, द्वितीयादितीर्थकृत्तीर्थेषु छेदोपस्थापनीयचारित्राभावादिति, पूर्वगाथाया एवानुवर्त्तमान परिहारविशुद्धिक चारित्र नानाजीवैरुत्कृष्टतो द्वे पूर्वकोटी देशोने निरन्तरमवाप्यते, तथाहि-अवसर्पिणीकालप्रथमतीर्थकरस्यान्तिके पूर्वकोट्यायुषा नवकेन गणेनैकोनत्रिंशद्वर्षे स्वायुषोऽतिक्रान्ते. परिहारविशुद्धिकचारित्र प्रतिपन्नमामरणान्त च परिपालित, तदायु पर्यन्ते च तत्समीपे पूर्वकोट्यायुषैवान्येन नवकगणेन स्वायुष्कादेकोनत्रिंशद्वर्षः स्वायुष समतिक्रान्ते. परिहारविशुद्धिकचारित्र प्रतिपन्नमामरणान्त च परिपालितम्, अत. परमिद न

कोऽपि प्रतिपद्यते, तीर्थकरतदासेवकौ विहायान्यसमीपे तत्प्रतिपत्त्यनुज्ञाऽभावाद्, एवं च सत्यष्टपंचाशद्वर्षलक्षणेन देशेन न्यूने द्वे पूर्वकोटी यावदुत्कृष्टतो निरन्तरमिदमवाप्यत इत्युक्तं भवति, एते च छेदोपस्थापनीयपरिहारविशुद्धिकचारित्रे उत्सर्पिण्यवसर्पिणीकाल-प्रथमचरमतीर्थकरतीर्थेष्वेव भवतः, मध्यगतद्वाविंशतितीर्थकरकाले महाविदेहेषु च तदभावाद्, अतो न तत्र ते दर्शिते इति भावः, उक्तं च प्रज्ञप्तौ–"छेओवट्ठावणियसंजये णं भंते ! कालओ केचिरं होंति ?, गोयमा ! जहण्णेणं अड्ढाइज्जाइं वाससयाइं उक्कोसेणं पन्नासं सागरोवमकोडिसयसहस्साइं" ति, "परिहारविसुद्धियसंजया णं भंते ! कालओ केच्चिर हुंति ?, गोयमा ! जहण्णेणं देसूणाइं दो वाससयाइं उक्कोसेणं देसूणाओ दो पुव्वकोडिउ" त्ति, आह–यद्येवमनेन रूपेण सामायिकादिचारित्राणामपि कालो वक्तव्यः सम्भवत्येव, किमिति तत्परिहारेण प्रस्तुतचारित्रद्वयस्यैवायमुक्त इति, सत्यं, किन्तु सामायिकयथाख्यातचारित्रे तावन्महाविदेहादिषु सर्वकालं भावात् सर्वदैव भवतः, सूक्ष्मसम्परायचारित्रं तु जघन्यतः समय उत्कृष्टतस्त्वन्तर्मुहूर्त्तं भवतीति स्वयमेव द्रष्टव्यम्, उक्तं च-" सुहुमसंपरायसंजया णं भंते ! कालओ केच्चिरं हुंति ?, गोयमा ! जहण्णेणं एक्कं समयं उक्कोसेणं अंतोमुहुत्तं " ति, ततः परं क्षपकश्रेण्युपशमश्रेण्योरन्तरसद्भावाच्छेणेश्चान्यत्र सूक्ष्मसम्परायचारित्राभावादिति भाव इति गाथार्थः॥२३८॥ योगानामप्येकजीवाश्रितः स्थितिकालः प्रागभिहितो, नानाजीवाश्रितं तु तमभिधित्सुराह–

पल्लासंखियभागो वेउव्वियमिस्सगाण अणुसारो। भिन्नमुहुत्तं आहारमिस्ससेसाण सव्वद्धं ॥ २३९ ॥

वैक्रियं कार्मणेन सह मिश्रं येषु ते वैक्रियमिश्राः काययोगास्तेषां पल्योपमासंख्येयभागं यावदनुसरणमनुसारो–निरन्तरप्रवृत्ति-

वैक्रियाहारक मिश्र-कालः

रित्यर्थ , नरकगतिदेवगत्यो पल्योपमासख्येयभाग यावदुत्कृष्टतो वैक्रियमिश्रकाययोगो निरन्तरमवाप्यते, परतोऽन्तरसद्भावादिति भाव: यदि पुनर्वैक्रियलब्धिमतां तिर्यङ्मनुष्याणा वैक्रियशरीरारम्भकाले तत्परित्यागसमये वा यो वैक्रियामिश्रकाययोगोऽन्यत्राभिहित सोऽपीह विवक्ष्यते तदा सर्वदैवासौ निर्दिश्यते, न कदाचनापि तद्व्यवच्छेदो, यदाह-" ओघतो वैक्रियमिश्रशरीरकाययोगिनो नारकादय सदैव भवन्तीति, " ' भिन्नमुहुत्त आहारमिस्स 'त्ति आहारकमौदारिकेण मिश्र यत्रासौ आहारकमिश्र काययोग , स भिन्नमुहूर्त्तमन्तर्मुहूर्त्तं यावन्निरन्तरमवाप्यते न परत , इदमुक्त भवति-पचदशस्वपि कर्मभूमिष्वाहारकामिश्रकाययोगवृत्तयश्चतुर्दशपूर्वविदो निरन्तरमन्तर्मुहूर्त्तमेव लभ्यन्ते, परत सम्पूर्णाहारकवृत्तेस्तदभावस्य वा सम्भवादिति, ' सेसाण सव्वद्ध ' ति उक्तयोगद्वय आहारककाययोग च तृतीय वर्जयित्वा शेषयोगाना सत्यासत्यादिभेदभिन्नमनोवाग्योगौदारिकामिश्रवैक्रियकार्मणकाययोगलक्षणानां नानाजीवेषु सर्वाद्ध-सर्वकालमवस्थिति , नानाजीवेषु हि द्वित्रिचतु पचेन्द्रियेषु सत्यासत्योभयानुभयभेदभिन्ना मनोवाग्योगास्तावत् सर्वदैवाव्यवच्छिन्ना' प्राप्यन्ते, तथौदारिकाण्यौदारिकामिश्राणि च शरीराणि प्रत्येकमसख्येयलोकाकाशप्रदेशराशिप्रमाणानि सामान्येन तिर्यङ्मनुष्येषु सर्वदैवाव्यवच्छिन्नानि लभ्यन्ते, वैक्रियशरीराण्यपि नारकादिनानाजीवेष्वसख्येय श्रेणिप्रदेशराशिप्रमाणानि सर्वदैव लोकेऽस्मिन्नव्यवच्छिन्नानि भवन्ति, कार्मणशरीराणि तु सर्वससारिजीवानामनन्तानि सदैव न व्यवच्छिद्यन्ते, आहारककाययोगस्तर्हि किं सर्वकाल न लभ्यते येनात्र वर्जित इति चेदेवमेवैतत्, तथा चोक्तम्-" आहारगाइ लोए छम्मास जा न हुतिवि कयाइ। उक्कोसेण नियमा एक्क समय जहण्णेण ॥ १ ॥ हुताइ जहण्णेण एक्क दो तिन्नि पच व हवति। उक्कोसेण जुगव पुहुत्तमेग सहस्साण ॥ २ ॥ " ति, इह च गाथाया यद्यपि ' सेसाण सव्वद्ध ' मिति भणनादाहारककाययो-

गस्याप्युपादानं प्राप्नोति तथाऽपि गाथाऽवयवस्यास्य प्रायोवृत्त्या प्रवृत्तेः सिद्धान्तानुरोधात् स्वयमपि तद्वर्जनं द्रष्टव्यमिति गाथार्थः ॥ २३९ ॥ तदेवं भवस्थितिकायस्थितिगुणविभागस्थितिलक्षणं जीवसमासविषयं त्रिविधमपि कालमभिधायोपसंहरन्नाह-

**एत्थ य जीवसमासे अणुमज्जिय सुहुमनिउणमइकुसलो । सुहुमं कालविभागं विभएज्ज सुयम्मि उवउत्तो ॥२४०॥**

अनन्तः श्रुतसमुद्रोऽपरिमितास्तदभिहिता जीवसमासविषयाः पदार्थास्तत् कियतां प्रत्येकमहं स्थितिकालं वच्मि, तस्माद् वचनव्यत्ययेन जीवसमासेष्वेतेषु कालद्वारमाश्रित्य विचारणीयत्वेन प्रक्रान्तेषु स्थूलस्य कियतोऽपि मयाऽप्यभिहितत्वात् सूक्ष्ममतिगम्यं सूक्ष्ममपरमपि सम्भविनं जीवसमासविषयं कालविभागं-स्थितिकालभेदं श्रुते उपयुक्तः तदनुसारेणैव विभजेत्,-स्वयमपि विभागेन प्रतिपादयेत्, किं कृत्वा ?-'अनुमज्ज' विमृश्य विमर्श द्वारेण तस्यैव श्रुताम्भोधेरन्तः समवगाह्य, क इत्याह-सूक्ष्मनिपुणमतिकुशलः, अतिनिविडानामपि पदार्थानामन्तः प्रविश्य तत्त्वावगमात् सूक्ष्मा, तथा सूक्ष्मसूक्ष्मतरसूक्ष्मतमपदार्थपरिच्छेददक्षत्वान्निपुणा यासौ मतिस्तया कुशलो-विज्ञः सूक्ष्मनिपुणमतिकुशलः, इदमुक्तं भवति-अन्यस्य कथितमात्रावधारणेऽपि सन्देहात् स्वमत्याऽभ्यूह्य दूरस्थितत्वाद्यथोक्तमतिरेव कश्चिच्छ्रुतानुसारेण विमृश्य जीवसमासविषयमपरमपि कालविभागं यथोचितमभिदध्यादिति गाथार्थः ॥ २४० ॥ तदेवमभिहितो जीवसमासविषयः स्थितिकालः, साम्प्रतमजीवविषयं तमभिधित्सुराह-

**तिण्णि अणाइअणंता तीयद्धा खलु अणाइया संता । साइअणंता एसा समओ पुण वट्टमाणद्धा ॥२४१॥**

धर्माधर्माकाशास्तिकायाः कालपुद्गलाश्चेति पञ्च तावदजीवद्रव्याणि, एतेषु च मध्ये द्रव्यार्थतया धर्माधर्माकाशास्तिकायलक्षणानि

॥२५०॥

त्रीण्यजीवाख्यद्रव्याण्यनाद्यनन्तानि भवन्ति, अनादिकालात्तत्सामान्यरूपस्य प्रवृत्तत्वात्, भविष्यत्काले तु कदाचिदप्यव्यवच्छेदादिति, कालोऽपि सामान्यरूपेण अनयैव युक्त्याऽनाद्यनन्त एव, विशेषरूपतया तु चिन्त्यमान स तावत् त्रिधा भवति, तद्यथा-अतीताद्धा एष्याद्धा वर्त्तमानाद्धा चेति, तत्राद्धाशब्द स्त्रीलिङ्गप्रतिरूपकोऽव्ययः कालवाची, ततश्चातीता चासौ अद्धा चातीताद्धा, अतीतकाल इत्यर्थ, सेयमतीतकालरूपाऽतीताद्धा खलुरवधारणे अनादिका सान्तैव च भवति, न विद्यते आदिर्यस्या' साऽनादिका, सहान्तेन वर्तते इति सान्ता, प्रज्ञापकप्ररूपणाकालवर्त्तिन हि समयमवधी कृत्याऽतीतकालस्यातीताद्धारूपता व्यवस्थाप्यते, ततस्तस्या अनादिकालात् प्रवृत्तत्वादनादिता वर्त्तमानसमयपर्यन्तत्वात्तु सान्तता, 'साइ अणता एस' त्ति एष्यति-वर्त्तमानसमयादूर्ध्वं प्रवर्तिष्यत इत्येष्या, सा पुन' सादिरनन्ता च भवति, वत्तमानसमयादनन्तर तत्प्रवृत्तिरिति सादित्व, पुरतस्त्वपर्यवसानत्वादनन्तत्वमिति, 'समओ पुण वट्टमाणद्ध'त्ति प्रज्ञापकप्ररूपणापक्षया इदानीं वर्तत इति वर्त्तमाना सा चासौ अद्धा च वर्त्तमानाद्धा, सा पुनरेकसमयरूपैव भवति, अतीतसमयस्यातीताद्धाऽनुप्रवेशादनागतसमयस्य त्वेष्याद्धामीलनात् पारिशेष्यत एव वर्त्तमानाद्धा एकसमयरूपैवावतिष्ठत इतिभाव इति गाथार्थः ॥ २४१ ॥ अथ पुद्गललक्षणानामजीवानां स्थितिकालमाह–

**कालो परमाणुस्स य दुपएसाईणमेव खंधाण । समओ जहण्णमियरो उस्सप्पिणिओ असंखेज्जा ॥ २४२ ॥**

परमाणोर्द्विप्रदेशादीनां च स्कन्धानां प्रत्येकं कालो भवति, कियानित्याह-जघन्यः समय इतरस्तु-उत्कृष्टोऽसङ्ख्येया उत्सर्पिण्यवसर्पिण्य', इदमुक्त भवति- एकाकी परमाणुस्तद्रूपतया जघन्यत समयमुत्कृष्टतस्त्वसङ्ख्येया उत्सर्पिण्यवसर्पिणीर्यावदवतिष्ठते, एव ॥२५१॥

द्व्यणुकस्कन्धोऽपि तद्भावेनैतावत्स्थितिमान् वक्तव्यः, तथा त्र्यणुकस्कन्धोऽपि तथा चतुरणुकस्कन्धोऽपि एवं यावदनन्ताणुकस्कन्धोऽप्येतावत्स्थितिमान् वाच्य इति गाथार्थः ॥२४२॥ तदेवं पञ्चानामप्यजीवद्रव्याणामभिहितः स्थितिकालः, तदभिधाने च जीवानामजीवानां चावसितः कालविचारः, तदवसाने च काललक्षणं पञ्चमद्वारं समाप्तमिति ॥ अथ 'संतपयपरूवणये' त्यादिगाथोपन्यस्तमेवान्तरलक्षणं पष्ठं द्वारमभिधित्सुः यदिह द्वारे वक्तव्य तस्य तावत् प्रतिज्ञां कर्त्तु अन्तरस्वरूपं चाभिधातुमाह—

**जस्स गमो जत्थ भवे जेण य भावेण विरहिओ वसइ। जाव न उवेइ भावो सो चेव तमंतरं हवइ ॥ २४३ ॥**

यस्य मनुष्यादेर्मृतस्य भवान्तरं यियासोर्यत्र नरकगतितिर्यग्गत्यादौ गमो—गमनमुत्पत्तिस्तदिह द्वारे तावद् वक्तव्यमिति शेषः, अन्तरस्वरूपं पुनरेतदवगन्तव्यं,किं तदित्याह-येन च पूर्वानुभूतेन तावद् नारकादिपर्यायेण विरहितो-वियुक्तो जन्तुरन्यत्र-मनुष्यादिपर्याये वसति, स च पूर्वानुभूतो भावो यावत्पुनरपि नोपैति-अनुभवविषयतां नागच्छति तावद्यः कश्चनाप्यन्तरालकालो भवति तत्स्वरूपमन्तरं विज्ञेयम्, यथाऽनुभूतनारकपर्यायः कश्चित्ततो निर्गत्य नारकपर्यायविरहितोऽनन्तकालं मनुष्यादिपर्यायेष्वेव वर्त्तते तदन्ते च मुक्तिमप्राप्नुवंस्तस्य नियमान्नारकपर्यायो भवत्येव, ततो नरकगतेरन्यत्र पर्यटतो यस्तस्य कालो जातस्तत्स्वरूपमन्तरमवगन्तव्यमिति, उपलक्षणं चेदं गत्युपपातविरहादिलक्षणस्याप्यन्तरस्येहाभिधास्यमानत्वादिति गाथार्थः ॥ २४३ ॥ अथान्तरकालाभिधानोपकारकत्वात् कस्य जीवस्य कस्यां गतावुत्पत्तिरित्येतदभिधित्सुराह-

**सव्वा गई नराणं सन्नितिरिक्खाण जा सहस्सारो। धम्माए भवणवंतर गच्छइ सयलिंदिय असण्णी ॥ २४४ ॥**

॥२५२॥

नराणां परलोकगमने सति सर्वा अपि गतयो भवन्ति, ते हि मृता सन्तो नारकतिर्यग्नरामरलक्षणासु संसारवर्त्तिनीषु चतसृष्वपि गतिषु तद्बहिर्भूतायां सिद्धिगतौ च गच्छन्तीत्यर्थः, तिर्यंचस्तु पंचेन्द्रियास्तावद् द्विविधा - संज्ञिनोऽसंज्ञिनश्च, तत्र संज्ञिपंचेन्द्रिया नारकतिर्यग्नरामरसम्बन्धिनीषु चतसृष्वपि गतिषूत्पद्यन्ते, केवलं देवगतौ य एषां विशेषस्तमाह-'सण्णितिरिक्खाणे'-त्यादि, संज्ञिपंचेंद्रियतिरश्चां देवगतावुत्पद्यमानानां भवनपतिव्यन्तरज्योतिष्केष्वविशेषेण सर्वत्रोत्पत्तिर्भवति, वैमानिकेषु त्वष्टमं सहस्रारदेवलोकमेव यावदुत्पद्यन्ते, न तु परेणानतदेवलोकादिषु, तथाविधयोग्यताऽभावादिति भावः, असंज्ञिपंचेन्द्रिया अपि तिर्यंचश्चतसृष्वपि नारकादिगतिषूत्पद्यन्ते, केवलं नरकदेवगत्योरुत्पद्यमानानाममीषां यो विशेषस्तमुपदर्शयति- 'घम्माए' इत्यादि, सकलानि सम्पूर्णानि पंचापीन्द्रियाणि यस्यासौ सकलेन्द्रियः पंचेंद्रियोऽसंज्ञी-सम्मूर्च्छजस्तिर्यग्नारकेषूत्पद्यमानस्तावद् घर्माभिधानायामेव प्रथमनरकपृथिव्यामुत्पद्यते, न शेषासु द्वितीयादिपृथ्वीषु, तत्राप्युत्कृष्टतोऽपि पल्योपमासंख्येयभागायुष्केष्वेव जायते, नाधिकायुष्केष्विति विशेषः, देवगतौ पुनरुत्पद्यमानो भवनपतिव्यन्तरेष्वेवोत्पद्यते, न तु ज्योतिष्कवैमानिकेषु, तत्रापि पूर्ववत् पल्योपमासंख्येयभागायुष्केष्वेव जायते, न परत इति गाथार्थः ॥ २४४ ॥ ननु संज्ञिनामसंज्ञिनां च पंचेन्द्रियतिरश्चां गतिरुक्ता, शेषास्त्वेकेन्द्रियादयस्तिर्यंचः क्वोत्पद्यन्त इत्याह--

तिरिएसु तेउवाऊ सेसतिरिक्खा य तिरियमणुएसु । तमतमया सयलपसू मणुयगई आणयाईया ॥ २४५ ॥ ॥२५३॥

तेजःकायिका वायुकायिकाश्चैकेन्द्रियतिर्यंचस्तिर्यक्ष्वेवोत्पद्यन्ते नान्यत्र, अग्निवायूनामेकैव तिर्यग्गतिरुत्पत्तिस्थानं, शेषासु पुनर्नारकम-

नुष्यदेवगतिलक्षणासु तिसृष्वपि गतिष्वमी नोत्पद्यन्त एवेत्यर्थः, 'सेसतिरिक्खाये'त्यादि,उक्तशेषास्तु तिर्यंचःपृथिव्यब्वनस्पतिलक्षणा एकेंद्रिया द्वित्रिचतुरिंद्रियलक्षणा विकलेंद्रियाश्च तिर्यक्षु मनुष्येषु चोत्पद्यन्ते,न देवनारकेष्विति भावः, आह-नन्वेवं तिरश्चां मनुष्याणां च निरूपितमुत्पत्तिस्थानं, नारकदेवास्तु क्वोत्पद्यंत इत्याह-'तमतया सयलपसु'त्ति सकलशब्देनेंद्रियाण्याश्रित्य परिपूर्णा इह विवक्षिताः, ते च पंचेन्द्रिया एव भवन्ति, पशवस्तु तिर्यंचः, ततश्च तमस्तमजाः सप्तमपृथिवीनारकास्तावत्तत उद्वृत्ताः संतः पंचेंद्रियतिर्यंच एव भवंति, न मनुष्यादिरूपा इत्यर्थः, 'मणुयगई आणयाई य' त्ति आनतं नवमदेवलोकमादौ कृत्वा ये उपरि वर्त्तते प्राणतारणाच्युतग्रैवेयकानुत्तरविमानवासिनस्ते आनतादयो देवाः केवलमनुष्यगतय एव भवंति, मनुष्येष्वेवोत्पद्यते न तिर्यगादिष्विति भाव इति गाथार्थः ॥ २४५ ॥ शेपास्तर्हि नारकदेवाः क्व जायंत इत्याह—

**पंचेन्दियतिरियनरे सुरनेरइया य सेसया जंति । अह पुढविउदयहरिए ईसाणंता सुरा जंति ॥ २४६ ॥**

उक्तशेषा भवनपतिव्यंतरज्योतिष्कलक्षणाः सौधर्मेशानसनत्कुमारमाहेन्द्रब्रह्मलोकलांतकमहाशुक्रसहस्रारदेवलोकवासिनश्च सुरा रत्नप्रभादिषष्ठपृथवीवर्तिनश्च नारकाः 'पंचिंदियतिरियनरे' पंचेंद्रियेषु तिर्यक्षु नरेषु च 'यान्ति' उत्पद्यंत इत्यर्थः, आह-नन्वमी भवनपत्यादयो देवास्तिर्यक्षूत्पद्यमानाः किमिति पंचेंद्रियेष्वेव निर्दिष्टाः, अन्यत्र एकेंद्रियेष्वपि केषांचिदुत्पादश्रवणादित्याह— 'अह पुढविउदयहरिए' इत्यादि, अथशब्दो विशेषोपदर्शनार्थः, भवनपत्यादय ईशानदेवलोकपर्यंता देवा विशेषतश्चिन्त्यमाना बादरपर्याप्तपृथिव्यप्कायिकेषु प्रत्येकपर्याप्तहरितकाये चोत्पद्यन्ते, न पुनः शेषैकेंद्रियविकलेंद्रियेष्विति भावः, सनत्कुमारादिवार्त्तिनस्तु

देवाः पंचेंद्रियतिर्यगनरेष्वेवोत्पद्यन्ते, नान्यत्रेति गाथार्थः ॥ २४६ ॥ तदेवं चतुर्गतिकानामपि जीवानां निरूपितमुत्पत्तिस्थानम् , अथ गत्युपपातोद्वर्त्तनाविरहलक्षणस्यान्तरस्याग्रे प्रतिपादयिष्यमाणत्वात् येषां जन्तूनां निरन्तरमुत्पत्तिर्निरंतरं चोद्वर्त्तना, तद्विरह एव तावन्न सम्भवति, तदेतद्दर्शयन्नाह—

चयणुववाओ एगिंदियाण अविरहियमेव अणुसमयं । हरियाणंता लोगा सेसा काया असंखेज्जा ॥२४७॥

पृथिव्यप्तेजोवायुवनस्पतिलक्षणानामेकेंद्रियाणां च्यवनमुद्वर्त्तनं मरणमिति तात्पर्यम् उपपात - उत्पत्तिर्जन्मेति हृदयं तदेतद् द्वितयमपि सर्वेषां प्रत्येकमनुसमयं प्रतिसमयमविरहितं निरंतरं भवति, पृथिव्याद्येकेंद्रियेषु प्रत्येकं प्राणिनामुत्पत्तिः प्रतिसमयं निरंतरैव सम्पद्यते, मृत्वा जन्मान्तरगमनलक्षणं च्यवनमपि तेषु प्रत्येकमसुमतां प्रतिसमयमविरहितमेव जायत इत्यर्थः, जन्तूनामुत्पत्त्युद्वर्त्तनयोः प्रतिसमयमेव भावात् एतयोरन्तरं कदाचिदपि न प्राप्यत इति भाव ,तर्हि कियन्तो जीवा प्रत्येकमेतेषु पृथिव्याद्येकेन्द्रियेषु समये समये उत्पद्यन्ते उद्वर्त्तन्ते वा इत्याह-' **हरिये** ' त्यादि, हरितेषु सामान्येन वनस्पतिलक्षणेष्वेकेन्द्रियेषु तावदनन्तलोकाकाशप्रदेशराशिप्रमाणा जीवा समये समये उत्पद्यन्ते उद्वर्त्तन्ते च, ' **सेसा काया असंखेज्ज** ' त्ति विभक्तिव्यत्ययाच्छेषेषु-पृथिव्यप्तेजोवायुलक्षणेषु चतुर्ष्वेकेन्द्रियकायेषु प्रत्येकमसंख्येया ,लोका इत्यत्रापि वर्तते, ततश्चासंख्येयलोकाकाशप्रदेशराशिप्रमाणा जीवाः समये समये उत्पद्यन्ते उद्वर्त्तन्ते चेति स्वयमेव द्रष्टव्यम्, वनस्पतिजीवा ह्यनन्तानन्तसंख्यास्तत एषूत्पद्यमाना उद्वर्त्तमानाश्च जीवा प्रतिसमयमनन्ताः प्राप्यन्ते, शेषास्तु पृथिव्यादिकाया प्रत्येकमसंख्येया असंख्येयस्वरूपा एव भवन्ति, अतस्तेषु जायमाना म्रियमाणाश्च जन्तवः प्रति-

एकेन्द्रियोत्पाद

समयमसंख्येया एव लभ्यंत इति भाव इति गाथार्थः ॥ २४७ ॥ अथ त्रसजीवाः कियन्तः प्रतिसमयमुत्पद्यन्ते विनश्यन्ति च, कियन्तं च कालं नैरन्तर्येण जायन्ते म्रियन्ते चेत्येतन्निरूपयितुमाह—

**आवलियअसंखेज्जइभागो संखेज्जरासि उववाओ । संखिज्जसमये संखेज्जयाण अट्ठेव सिद्धाणं ॥ २४८ ॥**

त्रसकायोत्पातः

इह पृथिव्यादिस्थावरजीवानामुत्पादोद्वर्त्तनाविषयो विचारस्तावदनन्तरगाथायामपि निर्दिष्ट इति सामर्थ्यादेव प्रस्तुतगाथायां द्वीन्द्रियादित्रसजन्तूनामुत्पादोद्वर्त्तने विचारयितव्ये इति प्रतिपत्तव्यम्, अतो द्वीन्द्रियादयः सूत्रेऽनुक्ता अपि गम्यन्ते, ततश्च **'असंखेज्जरासि उववाउ'** त्ति जीवानां प्रत्येकमसङ्ख्येयो राशिर्येषु तेऽसङ्ख्येयराशयो द्वित्रिचतुरिन्द्रियपञ्चेन्द्रियतिर्यक्सम्मूर्च्छजमनुष्याप्रतिष्ठाननरकावासवर्ज्यनारकाः सर्वार्थसिद्धविमानवर्ज्यदेवात्मकास्त्रसजन्तुसङ्घाताः, एते हि प्रत्येकमसङ्ख्येयजीवराशिस्वरूपास्ततश्च लुप्तसप्तमीबहुवचननिर्देशात् प्रत्येकमेतेषु सप्तसु त्रसजीवासङ्ख्येयराशिषु जीवानां प्रतिसमयमुपपातः- उत्पादो भवति, कियन्तं कालं यावदित्याह—**'आवलिय असंखेज्जइभागु'** त्ति आवलिकाया असंख्येयतमे भागे यावन्तः समयास्तावतः समयान् यावदुत्कृष्टत एतेषु सप्तस्वपि राशिष्वनवरतं जन्तवः समुत्पद्यन्ते, परतो द्वित्रिचतुरिन्द्रियाणां प्रत्येकं जघन्यतः समयमानस्योत्कृष्टतस्त्वन्तर्मुहूर्त्तप्रमाणस्यान्तरकालस्यागमे निर्दिष्टत्वात्, पञ्चेन्द्रियतिर्यगाद्यन्तरकालस्य त्वत्रापि वक्ष्यमाणत्वादिति, एवं चावलिकाऽसंख्येयभागं यावज्जघन्यत एक उत्कृष्टतस्त्वसंख्याताः प्रतिसमयमेतेषु सप्तस्वपि राशिषु प्रत्येकं जीवाः समुत्पद्यन्त इत्युपलक्षणव्याख्यानात् स्वयमपि द्रष्टव्यम्, एवमुत्कृष्टत आवलिकाऽसंख्येयभागं यावज्जघन्यत एकस्योत्कृष्टतस्त्व-

मंख्येयानां प्रतिसमयमुद्वर्त्तनाऽप्येतेषु सप्तसु राशिषु प्रत्येक द्रष्टव्या, परतस्तूत्पादवदन्तरसद्भावादिति । संख्येयेषु राशिषु तर्हि का वार्तेत्याह—' सन्निये ' त्यादि, ये तु गर्भजमनुष्या अप्रतिष्ठाननरकावासनारका सर्वार्थसिद्धविमानदेवाश्च प्रत्येक सख्येयास्तेषा गम्यमानां सतां त्रिषु राशिषु प्रत्येकमुत्कृष्टतः सङ्ख्येयानेव समयान् यावदुत्पाद उद्वर्त्तना च नैरन्तर्येण भवति, परतोऽन्तरालसद्भावादेवेति, इह च प्रत्येक त्रिष्वपि राशिषु जघन्यत एको द्वौ वा यावदुत्कृष्टत सङ्ख्येया एव जीवा उत्पद्यन्ते उद्वर्त्तन्ते च, नासङ्ख्येया इति स्वयमपि द्रष्टव्यम् , एते हि त्रयोऽपि राशय. प्रत्यक सङ्ख्यातस्वरूपा एव, सङ्ख्यातेषु चासङ्ख्येयानामुत्पादोद्वर्त्तने न सम्भवत इति भाव । 'अट्ठेव सिद्धाण' ति सिद्धानां पुनर्निरन्तरमुत्कृष्टतोऽष्टौ समयान् यावदुत्पाद , उद्वर्त्तना तु तेषां न सम्भवति, अपुनरावृत्त्येन सिद्धत्वभावादिति, अष्टौ च समयान् यावदुत्कृष्टत' सिद्धानां निरन्तरमुत्पत्तिस्तदेव भवति यदा प्रथमसमये एका द्वौ वा यावदुत्कृष्टतो द्वात्रिंशत् सिद्ध्यन्ति, एव द्वितीयसमयेऽप्येको द्वौ वा यावदुत्कृष्टतो द्वात्रिंशत् सिद्ध्यन्ति, एव तृतीयसमयेऽपि चतुर्थसमयेऽपि यावदष्टमेऽपि समये एको द्वौ वा यावदुत्कृष्टतो द्वात्रिंशदेव सिद्ध्यन्ति, तत. परमवश्यमेव समयादिकमन्तर भवति, एव निरन्तरमष्टौ समयानुत्कृष्टतो जन्तूनां सिद्धिरवाप्यते, यदि पुनर्जघन्यतस्त्रयस्त्रिंशत आरभ्योत्कृष्टतोऽष्टचत्वारिंशतं यावत् प्रतिसमय सिद्ध्यति तदा सप्तैव समयान् यावदुत्कृष्टत सिद्ध्यन्तो लभ्यन्ते, न परतः, समयाद्यन्तरसद्भावादिति, अथ जघन्यत एकोनपञ्चाशत आरभ्योत्कृष्टत षष्टिं यावत् प्रतिसमय सिद्ध्यन्ति तदोत्कर्षत. षडेव समयान् यावत् सिद्धत्वपर्यायोत्पत्तिर्निरन्तरमवाप्यते, न परत , अन्तरसद्भावादिति, यदा त्वेकषष्टेः प्रारभ्य द्वासप्ततिं यावत् प्रतिसमय निरन्तरमेव सिद्ध्यन्ति तदोत्कृष्टतः पञ्च समयान् यावन्निरन्तर सिद्धिरवाप्यते, न परत , अन्तरसद्भावादिति, त्रिसप्ततेस्त्वारभ्य चतुरशीतिं यावत् प्रतिसमयं

सिध्यतां चतुर एव समयान् यावत् निरन्तरं सिद्धिः, पंचाशीतेस्त्वारभ्य षण्णवतिं यावत् सिध्यतां त्रीनेव समयान् यावत् निरन्तरं सिद्धिः, सप्तनवतेस्त्वारभ्य त्र्युत्तरशतं यावत् सिद्ध्यतां द्वावेव समयौ सिद्धिः, यदा तु त्र्युत्तरशतादारभ्याष्टोत्तरं शतं यावदुत्कृष्टतः समयेनैव युगपत् सिद्ध्यन्ति तदा तमेवैकं समयं सिद्धिः, परतस्तु समयादिकमन्तरं सम्पद्यत इति, अन्ये तु व्याचक्षते-प्रथमसमये जघन्येनैकः सिद्ध्यति उत्कृष्टतस्तु द्वात्रिंशदिति, द्वितीयसमये तु जघन्येनैकः उत्कृष्टतस्त्वष्टचत्वारिंशदिति, एवं तृतीयसमये उत्कृष्टतः षष्टिः चतुर्थसमये तूत्कृष्टतो द्वासप्ततिः पंचमसमये चतुरशीतिः षष्ठसमये षण्णवतिः सप्तमसमये त्र्युत्तरं शतम्, एवमष्टमसमये जघन्यत एको द्वौ वा उत्कृष्टतस्त्वष्टोत्तरं शतं सिद्ध्यति, एवं जीवाः प्रतिसमयं निरन्तरमेव सिद्ध्यन्त उत्कृष्टतोऽष्टौ समयान् यावल्लभ्यन्ते, एतच्च व्याख्यानं प्रज्ञापनादिभिः सह व्यभिचरतीति फल्गु वल्गु वेति बहुश्रुता एव विदन्तीति गाथार्थः ॥२४८॥ अथ यथोक्तानामेव द्वात्रिंशदादीनामुत्कृष्टसिद्धपदानां संग्रहगाथामाह—

**बत्तीसा अडयाला सट्ठी बावत्तरी य बोद्धव्वा । चुलसीई छण्णउइ दुरहिय अट्ठुत्तरसयं च ॥ २४९ ॥**

यदा प्रतिसमयं जघन्यपदे एकादय उत्कृष्टतस्तु द्वात्रिंशत् सिद्ध्यन्ति तदा निरन्तरमष्टौ समयान् सिद्धकालः, यदा पुनस्त्रयस्त्रिंशदादयः पर्यन्तेऽष्टचत्वारिंशत् प्रतिसमयं सिद्ध्यन्ति तदा सप्त समयाः, यदा त्वेकोनपंचाशदादयोऽवसाने षष्टिस्तदा षट् समयाः, यदा त्वेकषष्ट्यादयोऽन्ते द्वासप्ततिस्तदा पंच समयाः, यदा तु त्रिसप्तत्यादयो निधने तु चतुरशीतिस्तदा चत्वारः समयाः, यदा तु पञ्चाशीत्यादयोऽवसाने षण्णवतिस्तदा त्रयः समयाः, यदा त्वादौ सप्तनवतिरन्ते पुनर्द्व्युत्तरशतं तदा द्वौ समयौ, यदा

पुनर्जघन्यादिपदे ऽयुत्तरशतादय उत्कृष्टतस्त्वेकसमयेनैव युगपदष्टोत्तरशत सिद्ध्यति तदा स एवैक' समयो जीवानां सिद्धिप्राप्तिकाल, ततोऽनन्तरमवश्य समयाद्यन्तरसद्भावादित्येतत् सर्व प्रागपि गतार्थं, शिष्यानुग्रहार्थं तु पुनरप्युक्तमिति, तदेवमष्टौ समया. सिद्धानां निरन्तर सिद्धिर्द्वात्रिंशत्पर्यंतानामेव सिद्ध्यतामष्टव्या, एतदेव चेह प्रकृतम्–'अट्ठेव सिद्धाण'मिति निर्देशादिति, या तु त्रयस्त्रिंशदाद्यष्टचत्वारिंशत्पर्यन्तादीनां सिद्ध्यतां नैरतर्येण सप्तसमयादिका सिद्धिरभिहिता सा प्रसङ्गमुखेनैवेति, अनया च गाथया द्वात्रिंशदादीन्युत्कृष्टपदानि सगृहीतानि, जघन्यानि तु स्वयमेव परिभावनीयानि, अष्टसप्तसमयादिसग्रहोऽप्यनया गाथया द्रष्टव्यस्तथथा—"अट्ठ य सत्त य छप्पच चेव चत्तारि तिन्नि दो एक । बत्तीसाइपएसु समया भणिया जहासख ॥ १ ॥" द्वितीयव्याख्याने तु सप्तसमयादिपक्षो नोक्त एव, अष्टसु च समयेषु यथासख्य यानि द्वात्रिंशदाद्यष्टपदान्युक्तानि तान्यनया गाथया सगृहीतानि, जघन्यादिपदानि त्वष्टस्वपि समयेष्वेकद्वयादीनि, तानि च सुखस्मरणीयान्येवेत्यल विस्तरेण, प्रक्षेपगाथा चेय, पूर्वटीकाकारेण साक्षादव्याख्याततत्वात्, सूत्रादर्शेषु च केष्वप्यदर्शनात्, केवल सग्रहार्थिनामुपयोगिनीति व्याख्यातेति गाथार्थ. ॥ २४९ ॥ तदेव येषु जीवेषु यावन्त कालमुत्पादोद्वर्त्तनयोरन्तर न सम्भवति तदेतदुपदर्शितम्, साम्प्रत तु नरकगत्यादिषूत्पादोद्वर्त्तनयोर्यावन्त कालमन्तर सम्भवति तदुपदर्शयन्नाह–



चउवीस मुहुत्ता सत्त दिवस पक्खो य मास दुग चउरो । छम्मासा रयणाइसु चउवीस मुहुत्त सण्णियरे ॥२५०॥ ॥२५९॥

इह नरकगतौ तिर्यग्मनुष्यगतिका जीवास्तावदनवरत सर्वदैवोत्पद्यते कदाचिदन्तरमपि भवति, कियन्त काल यावदिति

नरकेषूत्पादः मनुष्येषु च

चेदुच्यते–सामान्येन सर्वामपि नरकगतिमाश्रित्य जघन्येनैकः समय उत्कृष्टतस्तु द्वादश मुहूर्त्ताः, एतावन्तं कालमन्यत आगत्यै-कोऽपि जन्तुर्नरकगतौ नोत्पद्यते इति भावः, इदं तु सूत्रेऽनुक्तमपि स्वयमेव द्रष्टव्यम्, यत उक्तमागमे-" निरयगई णं भंते ! केवइयं कालं विरहिया उववाएणं पण्णत्ता ?, गोयमा ! जहण्णेणं एगं समयं उक्कोसेणं बारस मुहुत्त " त्ति, तदेवं सामान्येन नरकगतौ उत्पादस्यान्तरमुक्तम्, विशेषचिन्तायां तु रत्नप्रभादिकासु नरकपृथ्वीषु यदुत्पादस्यान्तरं तत् सूत्रकारः स्वयमेवाह–'चउवीसे'-त्यादि, रत्नप्रभानरकपृथिव्यामन्यत आगत्योत्पद्यमानानां जन्तूनां जघन्यतः समय उत्कृष्टतस्तु चतुर्विंशतिमुहूर्त्ता अन्तरं भवतीति गाथायां साध्यमध्याहृत्य प्रक्रमात् स्वयमपि योजनीयम्, मुहूर्त्तस्तु घटिकाद्वयप्रमाणो मन्तव्यः, एवं जघन्यमन्तरं सर्वत्र समय एव, उत्कृष्टं तु शर्कराप्रभायामुत्पादस्य सप्त दिनान्यन्तरं वालुकप्रभायां पञ्चदशदिवसलक्षणः पक्षोऽन्तरं पङ्कप्रभायां मासः धूमप्रभायां मासद्वयं तमायां षष्ठपृथिव्यां चत्वारो मासास्तमस्तमायां तु सप्तमपृथिव्यां षण्मासा उत्कृष्टमन्तरं भवति, निजनिजोक्तकालं यावदेतासु पृथ्वीष्वन्यत आगत्यैकोऽपि जीवः कदाचिन्नोत्पद्यत इति भावः, अत्र मुग्धः प्रेरकः कश्चिदाह–ननु सामान्येन नरकगतौ द्वादशमुहूर्त्तप्रमाणो विरहकाल उक्तः, तद्विशेषभूतासु च रत्नप्रभादिनरकपृथ्वीषु चतुर्विंशतिमुहूर्त्तादिकः षण्मासावसानोऽयमीभ-हितो, न तु क्वापि द्वादशमुहूर्त्तमानः, यश्च विशेषभूतासु नरकपृथ्वीषु क्वापि नास्ति स कथं तत्सामान्यरूपायां नरकगतौ द्वादश-मुहूर्त्तमानो विरहकालो भविष्यति, न हि सिकताकणविशेषेषु प्रत्येकमविद्यमानं तैलं तत्सामान्यरूपायां सर्वस्यामपि सिकतायां भवितुमर्हति, अत्रोच्यते, अयुक्तमिदमभिहितं भवता, सर्वस्यां हि नरकगतौ सप्तापि नरकपृथिव्यः पिण्डिताः प्राप्यन्ते, ततस्तासु प्रत्येकमविद्यमानोऽपि समुदायापेक्षया द्वादशमुहूर्त्तमानो विरहकालो नगरदृष्टान्तेन प्राप्यत एव, तथाहि-कस्मिंश्चिन्नगरे सप्त महा-

पाटका', तत्रैकस्मिन् पाटके जघन्यतः समयेनोत्कृष्टतस्तु चतुर्विंशतिमुहूर्त्तैरतिक्रान्तैः काऽपि योषिदवश्यमेव पुत्र प्रसूते, द्वितीयपाटके तु सप्तभिर्दिवसैः तृतीयपाटके तु पक्षेण एव यावत् सप्तमे पाटके जघन्यतः समयेनोत्कृष्टतस्तु षड्भिर्मासैरतिक्रान्तैः काऽपि योषिन्नियमेन तनय प्रसूते, एवं च सति यद्येकस्मिन् पाटके उत्कृष्टा स्थितिर्लगति तदाऽन्यस्मिन् जघन्यास्थितिकमेऽप्युत्पद्यते पुनरन्यस्मिंस्तु मध्यमायां स्थितौ जायते तनय इत्येवं तावद्यावत् समस्तपाटकापेक्षया जघन्यतः समयेनोत्कृष्टतस्तु द्वादशभिर्मुहूर्त्तैरवश्यमेव काचिद्योषित् प्रसूते बालकम्, एवमिहापि भावनीयम्, न च विशेषेष्वविद्यमानं समुदाये न भवति, तत्वादौ प्रत्येकमदृष्टस्यापि पटादेस्तत्समुदाये दर्शनादित्यत्र बहु वक्तव्यं तत्तु नोच्यते, ग्रन्थान्तरगम्यत्वात्तस्येति, तिर्यङ्मनुष्यगतिद्वयमाधिकृत्याह— 'चउवीस मुहुत्त सण्णियरे' त्ति सामान्येन तिर्यग्गतौ शेषगतिकानामुत्पद्यमानानां जीवानामुत्पादस्य जघन्यतः समय उत्कृष्टतस्तु द्वादशमुहूर्त्तप्रमाणमन्तरमवगन्तव्यम्, एव मनुष्यगतावपि, उक्तञ्च-" तिरियगई ण भंते ! केवइयं काल विरहिया उववाएणं पण्णत्ता ?, गोयमा! जहण्णेण एक्क समय उक्कोसेण बारस मुहुत्ता, एव मणुयगईवि " त्ति, विशेषचिन्तायां तु तिर्यग्गतौ सञ्ज्ञिनो गर्भजा इतरे चासञ्ज्ञिन' सम्मूर्च्छजास्तावत् पञ्चेन्द्रिया भवन्ति, मनुष्यगतावपि सञ्ज्ञिनः गर्भजा इतरे च-सञ्ज्ञिनः-असम्मूर्च्छजा मनुष्या भवन्ति, तत्र गर्भजपञ्चेन्द्रियतिर्यक्षु गर्भजमनुष्येषु चान्यत आगत्योत्पद्यमानानां जन्तूनामुत्पादस्य जघन्यत समय उत्कृष्टतस्तु द्वादश मुहूर्त्ताः प्रत्येकमन्तरमवसेयम्, सम्मूर्च्छजपञ्चेन्द्रियतिर्यक्षु जघन्यतः समय उत्कृष्टतोऽन्तर्मुहूर्त्तमन्तरम्, सम्मूर्च्छजमनुष्येषु त्वन्तरं जघन्यतः समय उत्कृष्टतस्तु चतुर्विंशतिर्मुहूर्त्ताः, एतदेव च सूत्रे साक्षादुक्तम्, शेष तु सूचितत्वादस्माभिरेव दर्शितमवगन्तव्यम्, यत्र च यावानुत्पादस्यैष विरहकाल उक्तस्तत्रोद्वर्त्तनाया अपि तावानेव विरहकालो बोद्धव्यः, सिद्धान्ते तथैव प्रति-

पादितत्वात्, केवलं विवक्षितजीवेभ्य उद्वृत्य निर्गत्यान्यत्र गमनलक्षणा उद्वर्त्तना द्रष्टव्येति गाथार्थः ॥ २५० ॥ अथ सामान्येनैव त्रसादिजीवानां प्रथमप्रतिज्ञातलक्षणमन्तरं प्रतिपादयन्नाह—

बादरसूक्ष्माणामन्तरं

**थावरकालो तसकाइयाण एगिंदियाण तसकालो। बायरसुहुमे हरिएअरे य कमसो पउंजेज्जा ॥२५१॥**

चीयते-प्रतिक्षणमुत्पद्यमानैर्जीवैः पुष्टिं नीयत इति कायः-संघातः त्रसानां कायः त्रसकायस्तेन चरन्तीति त्रसकायिका जीवास्तेषां त्रसकायं परित्यज्यान्यत्रोत्पन्नानां पुनरपि त्रसकायोत्पत्तौ जघन्यतोऽन्तर्मुहूर्त्तमुत्कृष्टतस्तु स्थावराणाम्-एकेंद्रियाणां जीवानां सम्बन्धी कालोऽन्तरं भवति, स चात्रैव पूर्वं कालद्वारे एकेन्द्रियकालाभिधानप्रस्तावेऽभिहित आवलिकाऽसंख्येयभागवर्त्तिसमयराशिप्रमाणपुद्गलपरावर्त्तरूपो मन्तव्यः, 'एगिंदियाण तसकालो' त्ति पृथिव्याद्येकेन्द्रियाणां जवानां तद्भावं परिहृत्यान्यत्रोत्पन्नानां पुनरप्येकेन्द्रियत्वप्राप्तौ जघन्यतोऽन्तर्मुहूर्त्तं उत्कृष्टतस्तु त्रसकालोऽन्तरं भवति, स चेहैव ग्रन्थे पूर्वं कालद्वारे त्रसजीवकालाभिधानप्रक्रमे निर्दिष्टः सातिरेकसागरोपमसहस्रद्वयलक्षणोऽवगन्तव्यः, तदेवं दिङ्मात्रं प्रदर्श्य शेषाणां बादरादीनामन्तरकालमतिदिशन्नाह- '**बायरसुहुमो**' त्ति यथा त्रसानां स्थावरकालः स्थावराणां तु त्रसकाल उक्तप्रकारेणोत्कृष्टमन्तरं, एवं बादराणां सूक्ष्मकालः सूक्ष्माणां तु बादरकाल उत्कृष्टमन्तरमित्याद्यपि क्रमेण प्रत्येकं योजयेत् बुद्धिमानितीह तावत् समुदायार्थः, इदमुक्तं भवति-बादरनामकर्मोदयवर्तिनां पृथिव्यादिजीवानां बादरेभ्य उद्वृत्यान्यत्रोत्पन्नानां पुनरपि बादरेषूत्पत्तौ जघन्यतोऽन्तर्मुहूर्त्तमुत्कृष्टतस्तु सूक्ष्मनामकर्मोदयवर्त्तिनः सूक्ष्मा ये जीवास्तत्सम्बन्धी कालोऽन्तरं भवति, स चात्रैव पूर्वं कालद्वारे सूक्ष्मजीवकालाभिधान-

प्रस्तावे प्रतिपादितोऽसख्येयलोकाकाशप्रदेशराशिप्रतिसमयापहारनिष्पन्नासख्येयोत्सर्पिण्यवसर्पिणीलक्षणो मन्तव्य', सूक्ष्माणामपि पृथिव्यादिजीवानां सूक्ष्मेभ्य उद्वृत्त्यान्यत्रोत्पन्नानां पुनरपि सूक्ष्मेषूत्पत्तौ जघन्यतोऽन्तर्मुहूर्त्तमुत्कृष्टतस्तु बादरजीवस्थितिकालोऽन्तरं भवति, स च बादरस्थितिकालाभिधाने प्रतिपादित. सप्ततिसागरोपमकोटीकोटिस्वरूपो विज्ञेय', ' हरिएयरे य ' त्ति हरितानि-वनस्पतिकायः इतरस्तु–पृथिव्यप्तेजोवायुत्रसकाय , ततश्च वनस्पतिकायिकानां पुनर्वनस्पतिकायिकत्वे पृथिव्यादिस्थितिकालोऽन्तर, पृथिव्यादिकायस्य तु पुनरपि पृथिव्यादिरूपताया वनस्पतिस्थितिकालोऽन्तरं भवतीति क्रमेण प्रत्येकं योजयेदिति, इदमुक्त भवति-सामान्येन वनस्पतिकायिकानां जीवानां वनस्पतिकायादुद्वृत्त्यान्यत्रोत्पन्नानां पुनरपि वनस्पतिकायभवने जघन्यतोऽन्तर्मुहूर्त्तमुत्कृष्टतस्तु पृथिव्यादिशेषजीवस्थितिकालोऽन्तर भवति, स चासख्येयलोकाकाशप्रदेशराशिप्रतिसमयापहारनिर्वृत्तासंख्येयोत्सर्पिण्यवसर्पिणीमान' प्रागुक्तो द्रष्टव्य., इतरेषां तु पृथिव्यप्तेजोवायुत्रसजीवानां पृथिव्यादिभ्य उद्वृत्त्य वनस्पतिषु भ्राम्यतां पुनरपि पृथिव्यादिषूत्पत्तौ जघन्यतोऽन्तर्मुहूर्त्तमुत्कृष्टतस्तु वनस्पतिकालोऽन्तर भवति, स चावलिकाऽसख्येयभागवर्त्तिसमयराशिप्रमाणपुद्गलपरावर्त्तस्वरूपः प्रागुक्तो मन्तव्य इति गाथार्थ ॥ २५१ ॥ किंचित्प्रकारान्तरविशेषितमिदमेवाह-

हरिएयरस्स अतर असखया होंति पोग्गलपरट्टा । अड्ढाइज्जपरट्टा पत्तेयतरुस्स उक्कोस ॥ २५२ ॥

हरितस्य-सामान्येन वनस्पतिकायस्येतर पृथिव्यप्तेजोवायुत्रसजीवराशिस्तस्य हरितेतरस्य एतेभ्य. पृथिव्यादिभ्य उद्वृत्य वनस्पतिषूत्पन्नस्य पुन. पृथिव्यादिरूपतापत्तौ जघन्यमन्तर्मुहूर्त्तमुत्कृष्ट त्वावलिकाऽसख्येयभागवर्त्तिसमयराशिप्रमाणाः पुद्गलपरावर्त्ता अन्तर

स्थावरादीनां प्रत्येकादीनां चान्तर

भवति, 'अड्ढाइज्जपरट्टा पत्तेयतरुस्स' त्ति प्रत्येकतरुः- प्रत्येकशरीरवनस्पतिकायस्तस्य उपलक्षणत्वात् सर्वेऽपि प्रत्येकशरीरिणः पृथिव्यप्तेजोवाय्वादयोऽत्र गृह्यन्ते, ततश्च सामान्येन प्रत्येकशरीरिणां जीवानां प्रत्येकराशेरुद्वर्त्य साधारणशरीरिषूत्पन्नानां पुनरपि प्रत्येकशरीरित्वभवने जघन्यतोऽन्तर्मुहूर्त्तमुत्कृष्टतस्त्वर्द्धतृतीयाः पुद्गलपरावर्त्ता अन्तरं भवति, प्रत्येकशरीरेभ्यो ह्युद्वृत्तानां साधारणशरीरेष्वेवोत्पत्तिः, तेषु चोत्कृष्टतोऽर्द्धतृतीयपुद्गलपरावर्त्तलक्षणः स्थितिकालः प्रागभिहितः, एतावन्तं च कालमिह स्थित्वोद्वृत्तानां प्रत्येकशरीरेष्वेव गमनं, प्रत्येकसाधारणराशिभ्यामन्यस्य जीवराशेरेवाभावात्, तस्मात् प्रत्येकशरीरिभ्य उद्वर्त्य पुनरपि प्रत्येकशरीरिष्वेवोत्पत्तौ युक्तमेवार्द्धतृतीयपुद्गलपरावर्त्तलक्षणमुत्कृष्टमन्तरं, अन्ये तूपलक्षणव्याख्यानं न कुर्वन्ति, किन्तु केवलप्रत्येकतरोः स्वकायादुद्वृत्यान्यत्रोत्पन्नस्य पुनरपि प्रत्येकतरुत्वभवन एव यथोक्तमन्तरं व्याख्यानयन्ति, तच्चायुक्तमिव लक्ष्यते, यतः केवलानामेव साधारणवनस्पतिकायिकानामर्द्धतृतीयपुद्गलपरावर्त्तलक्षणा कायस्थितिरभिहिता, प्रत्येकतरुभ्यश्चोद्वृत्तानां न साधारणवनस्पतिकायिका एव स्थानं येन तत्कायस्थितिरेवान्तरं स्यात्, किन्तु पृथिव्यप्तेजोवायुत्रसा अपि, एतेषां च षण्णामपि राशीनां समुदिता कायस्थितिरसंख्याता अपि पुद्गलपरावर्त्ताः सम्भाव्यन्ते, युक्तिसंगतत्वात्, यथा प्रत्येकाप्रत्येकस्वरूपाणां सामान्येन वनस्पतिकायिकानां, ततश्च यथा पृथिव्यप्तेजोवायुत्रसेभ्य उद्वर्त्य वनस्पतिषूत्पन्नानां पुनरपि पृथिव्यादिरूपतायामसंख्याताः पुद्गलपरावर्त्ताः प्रागुत्कृष्टमन्तरमभिहितम्, एवं केवलप्रत्येकतरुभ्य उद्वर्त्य साधारणवनस्पतिपृथिव्यप्तेजोवायुत्रसेषूत्पन्नानां जन्तूनां पुनरपि प्रत्येकतरुत्वभवनेऽप्युक्तं स्यात्, न चैवमभिहितं, तस्मादुपलक्षणव्याख्यानात् सर्वेऽपि प्रत्येकशरीरिणोऽत्र गृह्यन्ते, एतेभ्यश्चोद्वृत्तानां साधारणवनस्पतय एवोत्पत्तिस्थानं, ततस्तेषूत्कृष्टतोऽर्द्धतृतीयान् पुद्गलपरावर्त्तानतिवाह्य पुनः प्रत्येकशरीरिष्वेवोत्पत्तिः, अतो युक्तं

प्रत्येकादीनां बादरनिगोदादीनां चान्तरं

प्रत्येकशरीरिणामुद्वृत्तानां पुनः प्रत्येकशरीरित्वेऽर्द्धतृतीयपुद्गलपरावर्त्तलक्षणमुत्कृष्टमन्तरमिति गाथार्थ ॥ २५२ ॥ अथ बादरनिगोदादीनामन्तरकालमाह-

**बायरसुहुमनिओया हरियत्ति असंखया भवे लोगा । उयहीण सयपुहुत्तं तिरियनपुंसे असण्णी य ॥२५३॥**

बादरनिगोदजीवाना बादरेभ्य उद्वर्त्यान्यत्रोत्पन्नानां पुनरपि बादरनिगोदत्वप्राप्तौ जघन्यतोऽन्तर्मुहूर्त्तमुत्कृष्टतस्त्वसंख्येया लोका अन्तरं भवति, असंख्येयलोकाकाशप्रदेशराशिप्रतिसमयापहारनिष्पन्नासंख्येयोत्सर्पिण्यवसर्पिणीमानमुत्कृष्टमन्तरं भवतीत्यर्थ , बादरनिगोदेभ्य मुद्वृत्तानां बादरनिगोदानां सूक्ष्मनिगोदजीवा पृथिव्यप्तेजोवायुप्रत्येकवनस्पतित्रसाश्चोत्पत्तिस्थान, तेषु चोत्कर्षतोऽप्येतावानेव स्थितिकाल इतिभाव., एवं निगोदजीवानामपि सूक्ष्मनिगोदजीवेभ्य उद्वर्त्यान्यत्रोत्पन्नानां पुनरपि सूक्ष्मनिगोदत्वभवने एतदेवोत्कृष्टमन्तरं भावनीयम् , एतेषा हि स्वकायादुद्वृत्तानां बादरनिगोदा. पृथिव्यादयश्च जन्मस्थान, तेष्वपि चोत्कर्षतोऽप्येतावानेव स्थितिकाल इति परमार्थ , 'हरिय' त्ति सामान्येन वनस्पतयस्तेषामपि स्वकायान्निर्गत्यान्यत्रोत्पन्नानामिदमेवान्तर, यतस्तेषामपि तत उद्वृत्तानां पृथिव्यप्तेजोवाय्वादयो गमनस्थान, तेष्वपि चोत्कृष्टत एतावानेवावस्थानकाल इति हृदयम्, इह च यत् प्रागुक्तमप्यन्तरं पुनरुच्यते तदस्य राशित्रयस्यापि तुल्यान्तरताख्यापनार्थमित्यदोष , अन्यस्यापि राशित्रयस्य तुल्यमन्तरं दर्शयन्नाह- 'उयहीण सयपुहुत्तं' मित्यादि, 'तिरिय' त्ति तिरश्चां तावत्तिर्यग्गतेर्निर्गत्य शेषगतित्रये पर्यटतां पुनरपि तिर्यक्त्वप्राप्तौ जघन्यतोऽन्तर्मुहूर्त्तमुत्कृष्टतस्तु सातिरेकसागरोपमशतपृथक्त्वमन्तरं भवति, सातिरेकत्वं चाल्पत्वेनेहानुक्तमपि स्वयमेव द्रष्टव्य, शेष-

गतित्रये उत्कृष्टतोऽप्येतावन्तमेव कालमवस्थानादिति, 'नपुंसे'त्ति नपुंसकस्यापि तद्भावं परित्यज्य स्त्रीपुंवेदयोरुत्पन्नस्य पुनरपि नपुंसकत्वप्राप्तौ इदमेवान्तरं भावनीयं, स्त्रीपुरुषवेदयोरुत्कर्षतोऽप्येतावन्तमेव कालं स्थितिभावात्, न च वक्तव्यं पुरुषवेदे केवलेऽप्येतावानवस्थितिकालः प्रागुक्तोऽतः स्त्रीवेदकालोऽतिरिच्यत इति, यस्मादसौ स्वल्प एव, ततश्च सातिरेकसागरोपमशतपृथक्त्वलक्षणपुरुषवेदस्थितिकालोऽप्यन्तर्भवतीत्यदोषः । 'असण्णी य' त्ति न संज्ञी असंज्ञीतिव्युत्पत्तेर्गर्भजपंचेन्द्रियसंज्ञिनोऽन्यः सर्वोऽप्येकेन्द्रियादिरसंज्ञित्वेनेह विवक्षितः, तस्याप्यसंज्ञित्वं परिहृत्य गर्भजपंचेंद्रियलक्षणेषु संज्ञिषूत्पन्नस्य पुनरप्यसंज्ञित्वभवने एतदेवान्तरं, यतः संज्ञिनां प्रागेवावस्थितिकालो यथोक्तमान एवोक्त इति, यदि पुनरिहासंज्ञी सम्मूर्च्छजपंचेंद्रियलक्षणः समयपरिभाषित एव गृह्येत तदा तस्यान्यत्रोत्पद्य पुनरसंज्ञित्वभवने वनस्पत्यादिकालः सर्वोऽप्यन्तरे लभ्येत, तथा च सत्यसंख्येयाः पुद्गलपरावर्त्ता अन्तरं प्राप्नोति, न चैवमुक्तं, तस्माद्यथोक्त एवासंज्ञीह गृह्यत इति, अन्ये तु तिर्यग्नपुंसकासंज्ञिलक्षणस्यैकस्यैव राशेरन्यत्रोत्पद्य पुनस्तद्भावे उत्कृष्टतः सागरोपमशतपृथक्त्वमन्तरमिति व्याचक्षते, एतच्चानेकदोषदुष्टत्वादयुक्तमिव लक्ष्यते, ते च दोषाः सिद्धान्तपरिकर्मितमतिभिः पूर्वापरोक्तार्थवेत्तृभिश्च सुव्यक्तत्वात् स्वयमेवाभ्यूह्या इति गाथार्थः ॥ २५३ ॥ अथ देवगतौ देवानामादौ प्रतिज्ञातलक्षणमन्तरमभिधित्सुराह--

जावीसाणं अंतोमुहुत्तमपरं सणंकुसहस्सारो । नव दिण मासा वासा अणुत्तरोक्कोस उयहिदुगं ॥२५४॥

'जावीसाणं'ति भवनवास्यादीन् देवानादौ कृत्वा ईशानं-द्वितीयदेवलोकं यावद् ये देवास्तेभ्यश्च्युतस्य मत्स्यादिषूत्पन्न-

स्य देवस्य पुनरपि स्वदेवालय एवोत्पद्यमानस्यापर-जघन्यमन्तर्मुहूर्त्तमन्तरं, उत्कृष्टं तु वनस्पत्यादिषु पर्यटतस्तस्यैवावलिकासंख्येय-भागवर्त्त्यसंख्येयपुद्गलपरावर्त्तमानं तत् स्वयमेवावगन्तव्यम्, एवमुपरितनग्रैवेयकदेवान् यावत् सर्वत्रोत्कृष्टमिदमेवान्तरं द्रष्टव्यम्, जघन्यं तूच्यते-' सणकु सहसारो नवदिण ' त्ति सनत्कुमारदेवलोकादारभ्य यावत् सहस्रारदेवलोकस्तावद् ये देवास्तेभ्य: च्युतस्य देवस्य पुनरपि स्वकीयामरलोक एवोत्पद्यमानस्य नव दिनानि जघन्यमन्तरं भवति, नवदिनेभ्योऽर्वाक् तत्रासौ नोत्पद्यत इति भाव:, ' मास'त्ति नवेत्यत्रापि सम्बध्यते, ततश्चानतप्राणतारणाच्युतदेवलोकेभ्यश्च्युतो मनुष्येषूत्पन्नो देव: पुनरपि स्वस्थान एवोत्पद्यमानो जघन्यतोऽपि नवभिर्मासैरतिक्रान्तैरुत्पद्यते, नार्वागित्यर्थ:, ' वास ' त्ति नवेतीहाप्यनुवर्त्तते, अतश्च नवग्रैवेयकेभ्य: सर्वार्थसिद्ध-वर्जानुत्तरविमानचतुष्टयाच्च देवश्च्युतो मनुष्येषु जात: पुनरपि स्वस्थान एवोपजायमानो जघन्यतोऽपि नवभिर्वर्षैरतिक्रान्तैरुपजायते, नार्वागिति भाव:, नवमग्रैवेयकपर्यन्तं' प्रागसंख्येयपुद्गलपरावर्त्तात्मकोऽनन्त: काल उत्कृष्टतोऽन्तरे सिद्धान्तोक्तो दर्शित:, सर्वार्थसि-द्धवर्जानुत्तरविमानदेवानां तूत्कृष्टमन्तरं स्वयमेवाभिधित्सुराह- ' अणुत्तरुक्कोस उयहिदुग ' त्ति विजयाद्यनुत्तरविमानचतुष्टयात् च्युतो देवो मनुष्येषु परिभ्रमन् मुक्तिं चाप्राप्नुवन् उत्कृष्टत: सागरोपमद्वयात् पुनरपि विजयादिविमानेषूत्पद्यते, सर्वार्थसिद्धविमाने त्वन्तरचिन्ता नास्ति, ततश्च्युतस्य तद्भव एवावश्यमुक्तिगमनादिति भाव:, एष तावत् प्रस्तुतग्रन्थाभिप्राय:, व्याख्याप्रज्ञप्तौ तु भवनपत्यादिभ्य: सहस्रारान्तेभ्यो देवेभ्यश्च्युतस्य कस्यचिज्जीवस्येह तिर्यक्षूत्पद्यान्तर्मुहूर्त्तं जीवित्वा पुनरपि स्वकीयदेवस्थाने उत्पद्यमानस्य जघन्यतोऽन्तर्मुहूर्त्तमन्तरमुक्तं, मनुष्यस्तु य ईशानान्तदेवेषूत्पद्यते सोऽङ्गुलपृथक्त्वावगाहनाया मासपृथक्त्वमानाच्चा-युषोऽर्वाग् नोत्पद्यते, यस्तु सनत्कुमारादिष्वनुत्तरविमानपर्यन्तेषु देवेषु मनुष्यो जायते स हस्तपृथक्त्वावगाहनाया वर्षपृथक्त्वप्रमाणा-

वायुपोऽर्वाग् नोत्पद्यते, अतस्तिरश्चः समाश्रित्य सहस्रारान्तदेवेषु जघन्यतोऽन्तर्मुहूर्त्तमन्तरं तत्राभिहितमिति भावः, आनताद्यनुत्त-रविमानपर्यन्तेभ्यस्तु देवेभ्योऽत्र समायाता मनुष्या एव भवन्ति, मनुष्या एव च तेषु देवेषूत्पद्यन्ते, अत आनताद्यनुत्तरविमानान्त-देवेभ्यश्च्युतानिह वर्षपृथक्त्वं जीवित्वा पुनरपि स्वदेवस्थान एवोत्पद्यमानान् मनुष्यानेवाश्रित्य भगवत्यां जघन्यतो वर्षपृथक्त्व-मन्तरमभिहितं, तदेवं भगवतीनिर्दिष्टाभिप्रायेण सहस्रारान्तदेवेष्वन्तर्मुहूर्त्तं जघन्यमन्तरं, परतस्त्वानतादिषु सर्वत्राविशेषेण वर्षपृथक्त्वमेवान्तरं सिद्धं, प्रस्तुतग्रन्थे तु क्वाप्यन्तर्मुहूर्त्तं क्वापि नव दिनानि क्वचिन्मासपृथक्त्वं क्वचित्तु वर्षपृथक्त्वमन्तरमावेदितं, तत्त्वं न ज्ञायते, केवलिगम्यत्वात्तस्येति गाथार्थः ॥ २५४ ॥ अथ देवगतावेव देवानामुत्पादोद्वर्त्तनयोर्विरहकाललक्षणमन्तरं प्रतिपादयितुमाह—

**नवदिण वीसमुहुत्ता बारस दिण दस मुहुत्तया हुंति । अद्धं तह बावीसा पणयाल असीइ दिवससयं ॥ २५५ ॥**
**संखेज्जमासवासा सया सहस्सा य सयसहस्सा य । दुसु २ तिसु २ पंचसु अणुत्तरे पल्लऽसंखइमा ॥ २५६ ॥**

इह भवनपतिव्यन्तरज्योतिष्केषु सौधर्मेशानयोश्च तिर्यङ्मनुष्यगतिका जीवास्तावन्निरन्तरमुत्पद्यन्ते कदाचित्तु विरहोऽपि भवति, कियन्तं कालमिति चेदुच्यते, जघन्यतः समयः, उत्कृष्टतस्तु चतुर्विंशतिर्मुहूर्त्ताः, एतच्चेहानुक्तमपि सिद्धान्ते प्रतिपादितत्वात् स्वयमपि द्रष्टव्यं, यदाह—' असुरकुमारा णं भंते ! केवइयं कालं विरहिया उववाएणं पण्णत्ता ?, गोयमा ! जहण्णेणं एक्कं समयं उक्कोसेणं चउवीसं मुहुत्ता, एवं जाव थणियकुमाराणं, एवं वाणमंतराणं जोइसियाणं सोहम्मीसाणकप्पेसुवि' **'नवदिण वीसमुहुत्त'**-

ति सनत्कुमारकल्पे तिर्यङ्मनुष्यगतिकानां जीवानां जघन्यतः समय उत्कृष्टतस्तु नव दिनानि विंशतिर्मुहूर्ता उत्पादस्य विरह- काल, एवं जघन्यतः सर्वत्र समय एव, उत्कृष्टस्त्वन्तरकाल उच्यते, माहेन्द्रे कल्पे द्वादश दिनानि दश मुहूर्ता उत्कर्षेणोत्पादस्या- न्तरकाल, 'अद्धं तह बावीसं' ति ब्रह्मलोके सार्द्धानि द्वाविंशतिर्दिनानि, लान्तके पञ्चचत्वारिंशद्दिनानि महाशुक्रे अशीति दिनानि सहस्रारे तु दिनशतं, 'संखेज्जमासे' त्यादीनां 'दुसुदुसु' इत्यादिभि सह यथासङ्ख्येन सम्बन्धः, ततश्चानतप्राणतयोः संख्येया मासा वर्षादर्वागेव उत्कर्षेणोत्पादस्यान्तरं भवति, आरणाच्युतकल्पद्वये तु संख्येयानि वर्षाणि शतादर्वागेव, अधस्तनग्रैवे- यकप्रस्तटत्रये पुनः संख्येयानि वर्षशतानि, सहस्रादर्वागेव, मध्यमग्रैवेयकप्रस्तटत्रये तु संख्येयानि वर्षसहस्राणि, लक्षादर्वागेव, उपरितनग्रैवेयकप्रस्तटत्रये तु संख्येयानि वर्षलक्षाण्युत्कृष्टत उत्पादस्यान्तरं भवति, 'पचसु अणुत्तरे' इत्यादि पञ्चस्वनुत्तर- विमानेषु मनुष्यगतेरुत्पद्यमानानां जन्तूनामुत्पादस्य जघन्यतः समय उत्कृष्टतस्तु पल्योपमासंख्येयभागोऽन्तरं भवति, एवमिहानु- त्तरविमानेषु पञ्चस्वपि सामान्येनैकस्वरूपमेवान्तरमुक्तं, सिद्धान्ते तु विशेषेणेत्थमभिहितं—'विजयवेजयन्तजयन्तापराजितदेवाणं भंते ! केवइयं कालं विरहिया उववाएणं पण्णत्ता ?, गोयमा ! जहण्णेणं एक्कं समयं उक्कोसेणं असंखेज्जं कालं, सव्वट्ठसिद्धदेवा णं भंते ! पुच्छा, गोयमा ! जहण्णेणं एक्कं समयं उक्कोसेणं पलिओवमस्स असंखेज्जइभागं' ति, तत्त्वं तु केवलिनो विदन्तीति । इह यथा चोत्पादस्यान्तरकालः प्रोक्तः प्रागुक्तलक्षणाया उद्वर्तनाया अपि तत्र तावन्निर्विशेषोऽन्तरालकालो विज्ञेयः, सिद्धिगतौ तु सिद्धानामुत्पादस्य जघन्यतः समय उत्कृष्टतस्तु षण्मासा विरहकालः स्वयमेवावगन्तव्यः, यदाह—'सिद्धा णं भंते ! केवइयं कालं विरहिया सिज्झणयाए पण्णत्ता ?, गोयमा ! जहण्णेणं एक्कं समयं उक्कोसेणं छम्मासा' उद्वर्तनाविरहकालस्तु सिद्धिगतौ न

देवानामु-
त्पादोद्वर्त-
नयोरन्तरम्

वक्तव्यः, उद्वर्तनाया एवाभावादिति गाथाद्वयार्थः ॥ २५५-२५६ ॥ तदेवं दर्शितो नारकादिगत्याश्रितजन्तूनामन्तरकालः, साम्प्रतं गुणस्थानलक्षणानां जीवसमासानां तमुपदर्शयन्नाह—

**मिच्छस्स उयहिनामा बे छावट्ठी परं तु देसूणा । सम्मत्तमणुगयस्स य पुग्गलपरियट्टमद्धूणं ॥२५७॥**

मिथ्यादृष्टेः परित्यक्तमिथ्यात्वस्य पुनस्तद्भावप्राप्तौ परम्-उत्कृष्टमन्तरं भवति, कियदिति चेदुच्यते, द्वे षट्षष्टी उदधिनाम्नां-सागरोपमाणां '**परं तु**' त्ति तुशब्दश्चशब्दार्थे स च भिन्नक्रमे योज्यते, देशोना च मुहूर्त्ताद्धा इति शेषः, अन्तर्मुहूर्त्तमित्यर्थः, उक्तं च कम्मप्र [६०००] कृतिचूर्ण्याम्-" कोऽवि मिच्छत्ताओ सम्मत्तं गओ छावट्ठिसागरोवमा सम्मत्तकालो, तओ अंतोमुहुत्तं सम्मामिच्छत्तं गओ, पुणो सम्मत्तं पडिवन्नो छावट्ठिं सागरोवमाइं अणुपालेइ, तयंते य सिज्झइ मिच्छत्तं वा पडिवज्जइ, एवमुक्कोसेणं अंतोमुहुत्तब्भहियाओ दो छावट्ठीओ सागरोवमाणं मिच्छत्तस्स अंतरकालो हवइ" त्ति, पंचसंग्रहेऽपि जीवसमासद्वारे वृत्तिकृता प्रोक्तम्-"कोऽपि मिथ्यादृष्टिः सम्यक्त्वगुणं प्रतिपन्नः षट्षष्टिः सागरोपमाणि स्थितः, ततश्चासौ सम्यक्त्वगुणी सम्यग्मिथ्यात्वेऽन्तर्मुहूर्त्तं स्थित्वा भूयोऽपि सम्यक्त्वं गच्छाति, ततस्तत्र षट्षष्टिः सागरोपमाणि स्थित्वा योऽद्यापि न सिद्ध्यति सोऽवश्यं मिथ्यात्वं गच्छाति, यत उत्कर्षेणैतदन्तरं मिथ्यात्वस्येति, कार्मग्रन्थिकमतं चेदं, सैद्धान्तिकमतेन तु सम्यक्त्वान्मिश्रगमनं प्राग् निषिद्धमेवेति, अन्ये तु व्याचक्षते-देशोने-अन्तर्मुहूर्त्तोने द्वे षट्षष्टी सागरोपमाणां मिथ्यात्वस्योत्कृष्टमन्तरमिति, तदेतदयुक्तमिव लक्ष्यते, ग्रन्थान्तरैः सह व्यभिचारादिति, '**सम्मत्तमणुगये**'त्यादि सम्यक्त्वानुगतस्य-सम्यक्त्वयुक्तस्याविरतदेशविरतप्रमत्ताप्रमत्तोपशमश्रेणिगता-

एवंकरणानिवृत्तिबादरसूक्ष्मसम्परायोपशान्तमोहलक्षणस्य जीवसमूहस्य स्वकीयस्वकीयपर्यायपरित्यागे पुनस्तत्पर्यायप्राप्तौ किंचिन्न्यूनं पुद्गलपरावर्त्तार्धमुत्कृष्टमन्तरं भवति, सम्यक्त्वानुगतग्रहणेन च सर्वेऽप्यमी अविरताद्य उपशान्तमोहान्ता जीवा सगृहीता भवन्ति, सम्यक्त्वमात्रस्य सर्वत्र भावादिति सम्यक्त्वानुगतोपादानं, एते चाविरतादयः सम्यक्त्वगुणादपि परिभ्रष्टा उत्कृष्टत किंचिन्न्यूनं पुद्गलपरावर्त्तार्धं संसारसागरमवगाहन्ते, तदन्ते पुनरप्यवश्यं सम्यक्त्वादिगुणमवाप्य सिद्ध्यन्तीति, सम्यक्त्वपुञ्जस्य प्रायः सर्वत्रापि भावात् सास्वादनमिश्रा अपीह सम्यक्त्वानुगतत्वेन विवक्षिता द्रष्टव्या, तेऽपि च तद्भावपरित्यागे उत्कृष्टतोऽपार्द्धपुद्गलपरावर्त्तं यावत्संसारं परिभ्रमन्ति, तदन्ते च केचित् पुनरपि तद्भावं प्राप्य केचित्त्वप्राप्यैव विशुद्धा सम्यक्त्वादिगुणसामग्रीं लब्ध्वाऽवश्य सिद्ध्यन्तीति, क्षपकक्षीणमोहसयोग्ययोगिकेवलिनां त्वन्तरचिन्ता नास्ति, तेषां प्रतिपातस्यैवाभावात्, अत सम्यक्त्वानुगतत्वे सत्यपि तेषां नेह ग्रहणम्॥ अथ कोऽयं पुद्गलपरावर्त्तो यदर्द्धं किंचिन्न्यूनमुत्कृष्टत सास्वादनादयो भवे भ्राम्यन्तीति, उच्यते, यदा चतुर्दशरज्ज्वात्मकलोकवर्त्तिन सर्वेऽपि पुद्गला संसारसागरे पर्यटता एकजीवेनानन्तेषु भवेष्वौदारिकवैक्रियतैजसकार्मणभाषानापानमनोलक्षणपदार्थसप्तकरूपतया परिणमय्य मुक्ता भवन्ति तदाऽसौ पुद्गलपरावर्त्तः परिभाष्यते, अन्ये त्वाचार्या द्रव्यक्षेत्रकालभावभेदाच्चतुर्द्धा पुन प्रत्येकं बादरसूक्ष्मभेदतो द्विधा पुद्गलपरावर्त्तं वर्णयन्ति, तत्र द्रव्यतो बादर किल तदा भवति यदा संसारे पर्यटन्नेको जीव सर्वानपि सर्वलोकवर्त्तिन पुद्गलान् सामान्येनौदारिकवैक्रियतैजसकार्मणशरीरचतुष्टयरूपतया परिणमय्य मुञ्चति, यदा तु यथोक्तौदारिकादिशरीरचतुष्टयमध्ये प्रत्येकमेकैकशरीररूपतया सर्वानपि सर्वलोकपुद्गलान् परिणमय्य विसृजति विवक्षितशरीराच्छेषशरीरादिरूपतया तु परिणामिता अपि न गण्यन्ते तदा द्रव्यत एव सूक्ष्मपुद्गलपरावर्त्तो भवति । क्षेत्र

तस्तु नानाभवपरम्परासु निरन्तरेषु व्यवहितेषु वाऽन्यान्याकाशप्रदेशेषु म्रियमाणो यदा सर्वानपि लोकाकाशप्रदेशान् स्पृशति तदा क्षेत्रतो बादरः पुद्गलपरावर्त्तः, यदा तु येष्वाकाशप्रदेशेष्ववगाढ एकदा मृतस्तेषामेवानन्तरानाकाशप्रदेशानवगाह्यान्यदा म्रियतेऽपरस्यां तु वेलायां तेषामपि निरन्तरानन्यान् अन्यस्यां तु वारायां तन्निरन्तरस्थितानपरानेवं तावद्यावदित्थं म्रियमाणो जन्तुरनन्तानन्तेषु जन्मसु नैरन्तर्यस्थितान्नभःप्रदेशान् क्रमेण स्पृशन् सर्वानपि लोकप्रदेशान् स्पृशति याँश्चापरप्रदेशवृद्धिरहितान् पूर्वावगाढान् व्यवहितत्वान्नभःप्रदेशानवगाह्य मृतः ते न गण्यन्ते तदा क्षेत्रतः सूक्ष्मपुद्गलपरावर्त्तः। कालतो यदोत्सर्पिण्यवसर्पिणीकालचक्रसमयेषु सर्वेष्वपि क्रमेणोत्क्रमेण वाऽनन्तानन्तैर्भवैरेको जन्तुर्मृतो भवति तदा बादरः पुद्गलपरावर्त्तः, अत्र पक्षे येषु समयेष्वेकदा मृतोऽन्यदाऽपि यदि तेष्वेव म्रियते तदा ते न गण्यन्ते, यदा तु प्रथमाद्वितीयतृतीयचतुर्थपंचमादिसमयक्रममुल्लंघ्याप्यपूर्वेषु समयेषु म्रियते तदा ते व्यवहिता अपि समया गण्यन्ते, सूक्ष्मे तु कालपुद्गलपरावर्त्तेऽयं विशेषो यत् प्रथमाद्वितीयतृतीयादिसमयक्रमेणैव म्रियमाणस्य ते समया गण्यन्ते यावत् सर्वेऽपि कालचक्रसमया आदितोऽन्तं यावत् क्रमेण मरणैर्व्याप्ता भवन्ति, येषु तु प्रथमादिसमयक्रममुल्लंघ्य म्रियते ते व्यवहितसमया न गण्यन्ते एवेति। इदानीं भावतः पुद्गलपरावर्त्तो निरूप्यते, तत्र तावद् ये एकस्मिन् समये समुत्पद्यन्ते सूक्ष्माग्निकायिका जीवाः तेऽसंख्येयलोकाकाशप्रदेशराशिप्रमाणाः तेभ्यस्तु सूक्ष्माग्निकायिकाः सर्वेऽप्यसंख्येयगुणाः, कथमिति चेदुच्यते, एकः सूक्ष्माग्निकायिको जीवः समुत्पन्नोऽन्तर्मुहूर्त्तं जीवति, एतावन्मात्रायुष्कत्वात् तेषां, तस्मिँश्चान्तमुहूर्त्ते ये समयास्तेषु प्रत्येकमसंख्येयलोकाकाशप्रदेशप्रमाणाः सूक्ष्माग्निकायिकाः समुत्पद्यन्ते, इतः सिद्धमेकसमयोत्पन्नसूक्ष्माग्निकायिकेभ्यः सर्वेषां सूक्ष्माग्निकायानामसंख्येयगुणत्वं, तेभ्योऽपि सर्वसूक्ष्माग्निकायिकेभ्यस्तेषां कायस्थितिरसंख्येयगुणा, एकैक-

स्यापि सूक्ष्माग्निकायिकस्यासंख्येयोत्सर्पिण्यवसर्प्पिणीप्रमाणाया कायस्थितेः प्रतिपादितत्वादिति, तस्या अपि कायस्थिते सकाशात् संयमस्थानानि अनुभागबन्धाध्यवसायस्थानानि च प्रत्येकमसंख्येयगुणानि, कायस्थित्यामसंख्येयानां स्थितिबन्धानां भावात्, एकैकस्मिंश्च स्थितिबन्धेऽसंख्येयानामनुभागबन्धाध्यवसायस्थानानां सद्भावादिति, संयमस्थानान्यप्यनुभागबन्धाध्यवसायस्थानैस्तुल्यान्येवेति, तत्र यदा एकैकस्मिन्ननुभागबन्धाध्यवसायस्थाने क्रमेणोत्क्रमेण वा म्रियमाणो जन्तुः सर्वाण्यप्येतानि स्पृशति तदा बादरो भावपुद्गलपरावर्त्तः, अत्र पक्षे यदध्यवसायस्थानमेकदा म्रियमाणेन स्पृष्टं यद्यन्यदापि तदेव स्पृशति तदा न गण्यते, अपूर्वं तु दूरव्यवहितमपि स्पृष्टं गण्यते, यदा तु येनैव विशुद्धविशुद्धतरविशुद्धतमादिक्रमेण व्यवस्थितान्येतान्यनुभागबन्धाध्यवसायस्थानानि तेनैव क्रमेणानन्तानन्तैर्भवैर्म्रियमाणः सर्वाण्यपि स्पृशति व्यवहितानि तु स्पृष्टान्यपि न गण्यन्ते तदा सूक्ष्मो भावपुद्गलपरावर्त्तो भवतीत्यलं विस्तरेणेति गाथार्थः ॥ २५७ ॥ तदेवमुक्तं मिथ्यादृष्ट्यादिगुणानामुत्कृष्टमन्तरं, साम्प्रतं तेषामेव जघन्यं तदेवाह—

सासाणुवसमसम्मे पल्लासंखेज्जभागमवरं तु । अंतोमुहुत्तमियरे खवगस्स उ अंतरं नत्थि ॥ २५८ ॥

'सासाणुवसमसम्मे'त्ति सास्वादनश्च औपशमिकं सम्यक्त्वं यस्यासौ औपशमिकसम्यक्त्वश्च सास्वादनौपशमिकसम्यक्त्वौ एतयोर्द्वयोरपि तद्भावपरित्यागे पुनस्तत्पर्यायप्राप्तौ अपरं हि जघन्यमन्तरं पल्योपमासंख्येयभागः, य उपशमश्रेण्याः प्रतिपतन् सास्वादनो भवति यश्चोपशमश्रेण्यामौपशमिकसम्यग्दृष्टिः प्राप्यते तौ द्वावप्यल्पत्वान्नेह विवक्षितौ, किं तर्हि ?, योऽनादिमिथ्या-

दृष्टिरुद्वर्तितसम्यक्त्वमिश्रपुञ्जो वा मिथ्यादृष्टिः षड्विंशतिसत्कर्मा सन् पूर्वोपवर्णितक्रमेणौपशमिकं सम्यक्त्वमवाप्नोति यश्च तस्यामेवौपशमिकसम्यक्त्वाद्धायां पूर्वोक्तेनैव न्यायेन सास्वादनो भवति तौ द्वावपि चतुर्गतिवर्त्तित्वादिना प्रभूतत्वादिहाभिधित्सितौ, एतौ च लब्धमौपशमिकं सम्यक्त्वं सास्वादनत्वं च परित्यज्य यदि पुनरपि तदेव प्राप्नुतस्तदा जघन्यतोऽपि पल्योपमासंख्येयभागादेव, नार्वाक्, तथाहि-औपशमिकसम्यग्दृष्टिसास्वादनयोर्मिथ्यात्वं गतयोः प्रथमं तावदवश्यं सम्यक्त्वमिश्रपुञ्जौ सत्तायां भवत एव, न च तयोः सत्तायां तिष्ठतोः पुनरप्यौपशमिकसम्यक्त्वलाभसास्वादनभावौ सम्भवतः, तौ च सम्यक्त्वमिश्रपुञ्जौ मिथ्यात्वगतो जीवः प्रतिसमयमुद्वलयति, तद्दलिकं मिथ्यात्वपुञ्जे प्रतिसमयं प्रक्षिपतीत्यर्थः, एवं च क्रमेणोद्वर्त्यमानावेतौ पल्योपमासंख्येयभागेनैवोद्वर्त्येते, सर्वथैवाभावरूपतामापद्येते, नार्वाक्, कर्मप्रकृत्यादिषु तथैवाभिहितत्वादिति भावः, एवं च पल्योपमासंख्येयभागेन सम्यक्त्वमिश्रपुञ्जयोरुद्वर्त्तितयोस्तदन्ते कोऽपि जीवः पुनरप्यौपशमिकं सम्यक्त्वं सास्वादनत्वं च प्राप्नोतीति, एवमनयोः पल्योपमासंख्येयभागरूपं जघन्यमन्तरं भवति, 'अंतोमुहुत्तमियरे' त्ति इतरस्मिन्-उक्तशेषे मिथ्यादृष्ट्यविरतदेशविरतप्रमत्ताप्रमत्तोपशमश्रेणिगतापूर्वकरणानिवृत्तिबादरसूक्ष्मसम्परायोपशान्तमोहलक्षणजन्तुसंघाते निजं निजं गुणमपहाय पुनस्तमेव लभमानेऽन्तर्मुहूर्त्तं जघन्यमन्तरं विज्ञेयम्, एतच्च मिथ्यादृष्ट्यादीनां प्रायः प्रागेव भावितम्, उपशमश्रेणिगतापूर्वकरणादीनां तूपशमश्रेणेः प्रतिपत्य पुनरन्तर्मुहूर्त्तात्तामेवारोहतामिदं जघन्यमन्तरं बोद्धव्यम्, एकस्मिन् भवे वाराद्वयमुपशमश्रेणिकरणस्य सिद्धान्ते समनुज्ञातत्वादिति, किमर्थं पुनरुपशमश्रेणिगतानामेवापूर्वकरणादीनां ग्रहणमित्याह-क्षपकस्य पुनः- क्षपकश्रेणिगतस्यापूर्वकरणादेः क्षीणमोहसयोग्ययोगिकेवलिनां चान्तरं नास्ति, तद्गुणप्रतिपातस्यैवाभावादित्युक्तमेवेति गाथार्थः ॥ २५८ ॥

तदेव जघन्यमुत्कृष्ट चान्तरमुक्तं जीवसमासगुणानां, साम्प्रतं तेषामेव लोके यथासम्भव कदाचिदभावलक्षणमन्तर निरूपयितुमाह—

पल्लाऽसंखियभागं सासणमिस्सासमत्तमणुएसु । वासपुहुत्तं उवसामएसु खवगेसु छम्मासा ॥ २६९ ॥

'सासणे'त्यादि सास्वादनश्च मिश्रश्चासमाप्तमनुष्यश्च ते तथा, तत्र सास्वादनमिश्रौ प्रतीतौ, असमाप्तमनुष्यस्तु यो लब्धित करणतश्च सदैवासमाप्त'-अपर्याप्त एव मनुष्यो भवति स इह विवक्षित, स चैवविध' सम्मूर्छजमनुष्य एव भवति, गर्भजमनुष्याणा पर्याप्तानामपर्याप्ताना च भावात्, ततश्च सास्वादनमिश्रासमाप्तमनुष्येषु पल्योपमासख्येयभागरूपमन्तर भवति, इदमत्र हृदयम्-एते त्रयोऽपि राशय' सर्वस्मिन्नपि लोके कदाचित् पल्योपमासख्येयभाग यावन्न भवन्त्यपीति, मोहनीय कर्मोपशमयन्तीत्युपशमका -उपशमश्रेणिवर्त्तिन सयताः तेष्वपि वर्षपृथक्त्वप्रमाणमन्तर समवसेय, कदाचिद्वर्षपृथक्त्व यावल्लोके उपशमश्रेणि न कोऽपि प्रतिपद्यत इत्यर्थ., मोहनीय कर्म क्षपयन्तीति क्षपकाः क्षपकश्रेणिवर्त्तिनश्चारित्रिण एव, तेषु पुन षण्मासमानमन्तर विज्ञातव्य, कदाचिदुत्कृष्टत षण्मासान् यावल्लोके क्षपकश्रेणि कोऽपि न करोतीति भावः, परतस्तु करोत्येव कश्चित्तामिति, इह चोपशमकक्षपकग्रहणेनापूर्वकरणानिवृत्तिबादरसूक्ष्मसम्परायोपशान्तमोहक्षीणमोहानामुत्कृष्टमन्तरमुक्तम्, अयोगिकेवलिनां तु षण्मासमानमुत्कृष्टमन्तर स्वयमेवावसेय, मिथ्यादृष्ट्यविरतप्रमत्ताप्रमत्तसयोगिकेवलिना तु विरहकालो न सम्भवत्येव, एतेषां लोकेऽविरहित सर्वदैव भावाद्, एव च गुणस्थानलक्षणाना जीवसमासानामुक्त यथासम्भव लोके विरहकालस्वरूपमुत्कृष्टमन्तर, सम्मूर्च्छजमनुष्याणामपि गुणस्थानेषु अप्रस्तुतानामपि पल्योपमासङ्ख्येयभागलक्षणविरहकालाभिधानप्रस्तावाल्लाघवार्थमभिहितमुत्कृष्टमन्तर,

जघन्यं तु सर्वेषां समयप्रमाणमेवान्तरं, तच्चाग्रेतनगाथायां स्वयमेवाभिधास्यतीति गाथार्थः ॥ २५९ ॥ अथ गुणानां विरहकालाभिधानप्रक्रमाद्योगादिगुणानामपि यथासम्भवं विरहकालमभिधित्सुराह–

**आहारमिस्सजोगे वासपुहुत्तं विउव्विमिस्सेसु । बारस हुंति मुहुत्ता सव्वेसु जहण्णओ समओ ॥ २६० ॥**

आहारकं मिश्रं यत्रौदारिकेणासौ आहारकमिश्रो योगः, चतुर्दशपूर्वधरेण प्रयोजनोत्पत्तौ प्रारब्धमपरिपूर्णावस्थमाहारकशरीरमित्यर्थः, तस्योत्कृष्टं वर्षपृथक्त्वमन्तरं जायते, उत्कर्षतो वर्षपृथक्त्वं यावदाहारकशरीरस्य प्रारम्भकः कोऽपि लोके न प्राप्यत इति भावः, 'आहारमाइं लोए छम्मासं जा न हौंति उ कयाई'त्यादि प्रज्ञापनावचनाद् आहारकमिश्रस्य षण्मासप्रमाणमेवान्तरं प्राप्नोतीति, अत्र तु वर्षपृथक्त्वमुक्तं, तदत्र तत्त्वं सर्वविदन एव विदन्तीति, वैक्रियाणि मिश्राणि कार्मणेः सह येषु ते वैक्रियमिश्रा योगाः, नारकदेवानामुत्पत्तिसमयभावीन्यसम्पूर्णावस्थानि वैक्रियशरीराणीत्यर्थः, तेषूत्कृष्टतो द्वादश मुहूर्त्ता विरहकालः, नरकदेवगत्योर्हि उत्कृष्टतो द्वादश मुहूर्त्ता उत्पादविरहकालः प्रागुक्तः, ततः सामर्थ्यादेव वैक्रियमिश्राण्यप्येतावन्तं कालं न भवन्ति, उत्पद्यमानानामेव नारकदेवानां तत्सम्भवात्, लब्धिप्रत्ययतिर्यङ्मनुष्यवैक्रियमिश्राणां त्वविवक्षितत्वादिति, शेषाणां त्वौदारिकौदारिकमिश्रवैक्रियकार्मणलक्षणानां काययोगानां मनोवाग्योगानां चान्तरमेव नास्ति, तेषां लोकेऽविरहितं सर्वदेव भावादिति । आहारकमिश्राणां त्वन्तरे प्रोक्ते आहारकाणामपि तत् प्रोक्तमेव, आहारकमिश्रस्य सम्पूर्णस्य चान्तर्मुहूर्त्तात् परतोऽवस्थानाभावादिति । तदेवं प्राक्तनगाथायां प्रस्तुतगाथायां च निर्दिष्टं सास्वादनादीनामुत्कृष्टमन्तरं, साम्प्रतं सर्वेषामपि जघन्यं तदाह–सर्वेषु–सास्वाद-

योगानां विरहकालः

नादिपु वैक्रियमिश्रपर्यन्तेपु गुणेपु जघन्यतः समयो विरहकाल इति गाथार्थः ॥ २६० ॥ साम्प्रत छेदोपस्थापनीयादिचारित्रिणां विरहकालमाह—

तेवट्ठी चुलसीई वाससहस्साइ छेयपरिहारे । अवर परमुदहीण अट्ठारस कोडिकोडीओ ॥ २६१ ॥

छेदोपस्थापनीयसयतानां त्रिपष्टिर्वर्पसहस्राण्यपर-जघन्यमन्तर भवति,'परिहारे' त्ति परिहारविशुद्धिकसयताना-चतुरशीतिर्वर्प सहस्राण्यपर-जघन्यमन्तर सम्पद्यते,परम्-उत्कृष्ट त्वन्तरमुभयेपामपि प्रत्येकमष्टादश सागरोपमकोटीकोटय., इदमुक्त भवति अवसर्पिण्यां दुष्पमालक्षणस्य पञ्चमारकस्य पर्यन्ते भरतैरवतेपु च सर्वत्र छेदोपस्थापनीयसयतास्तावद्व्यवच्छिद्यन्ते, ततश्च तीर्थकरगणधरादिशून्ये एकविंशतिवर्पसहस्रप्रमाणे दुष्पमदुष्पमाभिधानेऽवसर्पिण्या षष्ठारके तावत्प्रमाणयुक्ते तत्रास्त्येव चोत्सर्पिण्या प्रथमारके, तावन्माने दुष्पमाभिधाने उत्सर्पिण्या एव द्वितीयारकेऽपि ते न लभ्यन्ते, किं तर्हि ?, दुष्पमसुपमालक्षणे तस्यास्तृतीयारके तीर्थकरोत्पत्तावेव ते प्राप्यन्ते, एव च प्रत्येकमेकविंशतिवर्पसहस्रमानेपु त्रिष्वरकेपु त्रिपष्टिर्वर्पसहस्राणि छेदोपस्थापनीयसयताना जघन्यो विरहकाल सम्पद्यत इति, परिहारविशुद्धिकसयतास्त्ववसर्पिण्या पञ्चमेऽरके प्रवृत्ते आदावेव व्यवच्छिद्यन्त इत्येकविंशतिवर्पसहस्रप्रमाणेनैतेनारकेण पूर्वोक्तेन चारकत्रयेण चतुरशीतिर्वर्पसहस्राण्यमीपा जघन्यमन्तर भवति, उत्कृष्टतस्तूभयेपामप्यष्टादशसागरोपमकोटीकोटिलक्षणो विरहकाल प्रोच्यते, तद्यथा—उत्सर्पिण्या सुपमदुष्पमाभिधाने चतुर्थारके प्रवृत्ते छेदोपस्थापनीया परिहारविशुद्धिकाश्च चारित्रिणो व्यवच्छिद्यन्ते, ततश्चात्रारके द्वे सागरोपमकोटीकोट्यौ सुपमाभिधाने तु पचमेऽरके तिस्र सागरोपमकोटी-

कोटयः सुषमसुषमारे तु षष्ठारके चतस्रः सागरोपमकोटीकोट्य इत्येवमुत्सर्पिण्यां नव सागरोपमकोटीकोटिप्रमाणं कालं यावत् प्रस्तुतसंयताः क्वापि न प्राप्यन्ते, अवसर्पिण्यामपि सुषमसुषमासुषमासुषमदुष्षमाभिधानेषु त्रिष्वरकेषु नवसागरोपमकोटीकोटीमानं कालमेते न लभ्यन्त इत्येवमष्टादशसागरोपमकोटीकोटयश्छेदोपस्थापनीयपरिहारविशुद्धिकानामुत्कृष्टो विरहकालः सम्पद्यते, यत्पुनरुत्सर्पिण्याश्चतुर्थारकस्यादौ अवसर्पिण्यामपि तृतीयारकस्य पर्यन्तो कियन्तमपि कालमेते प्राप्यन्ते अतिस्वल्पत्वात्तेन न्यूनता उत्कृष्टविरहकालस्येह न विवक्षिता, एवं जघन्यकालविरहपक्षेऽपि किञ्चिद्धोनाधिकत्वस्याप्यविवक्षोत्प्रेक्षणीयेति, पंचसु महाविदेहेषु पुनरमीषां प्रस्तुतसंयतानां सर्वदैवाभाव एव प्रतिपत्तव्यः, सामायिकयथाख्यातचारित्रिणां तु विरहकाल एव नास्ति, महाविदेहादिषु तेषामविरहितं सर्वदैव भावात्, सूक्ष्मसम्परायचारित्रिणां तु जघन्यतः समय उत्कृष्टतस्तु षड् मासा विरहकाल इति स्वयमेव द्रष्टव्यमिति गाथार्थः ॥ २६१ ॥ साम्प्रतं सम्यक्त्वादिगुणानां प्रतिपत्तिविरहकालमाह—

**सम्मत्तसत्तगं खलु विरयाविरईय होइ चोद्दसगं । विरईए पनरसगं विरहियकालो अहोरत्ता ॥ २६२ ॥**

इह प्रस्तुतगाथोक्तान् सम्यक्त्वादिगुणानाश्रित्य द्विविधास्तावज्जीवा भवन्ति--पूर्वप्रतिपन्नाः प्रतिपद्यमानकाश्च, तत्र सम्यक्त्वस्य पूर्वप्रतिपन्नाः कदाचिदपि न व्यवच्छिद्यन्ते, लोकेऽसंख्यातानाममीषामविरहितं सर्वदैव भावादिति, प्रतिपद्यमानकास्तु सम्यक्त्वस्य कदाचिद्भवन्ति कदाचित्तु जघन्यतः समयमुत्कृष्टतस्तु सप्तकं-सप्ताहोरात्राणि यावन्न भवन्ति, उत्कर्षतः सप्ताहोरात्राणि यावत् त्रिष्वपि लोकेषु कदाचित् सम्यक्त्वस्य प्रतिपत्ता कोऽपि न प्राप्यत इति भावः, विरताविरतेरपि-देशविरतेः पूर्वप्रतिपन्नाः सर्वदैव,

असंख्याता सर्वदैव प्राप्यन्ते, प्रतिपद्यमानकानां त्वमीषां जघन्यतः समयः उत्कृष्टतस्त्वावश्यके 'विरयाविरइए होइ बारसगं'-मिति वचनाद् द्वादश दिनानि विरहकालः प्रोक्तः, अनेन तु कुतोऽपि चतुर्दश दिनान्यसौ लिखित इति परमार्थमत्रापि न जानीमः, सर्वविरतेरपि पूर्वप्रतिपन्ना संख्याताः सर्वदैव प्राप्यन्ते, प्रतिपद्यमानकानां त्वेतेषां जघन्यतः समयः उत्कर्षतस्तु पञ्चदशाहोरात्राणि विरहकाल इति गाथार्थः ॥ २६२ ॥ तदेव जीवगतभावानां कियतामपि लेशतोऽन्तरकालमभिधाय सर्वेषां विरहकालाभिधानस्याशक्यतां प्रविभाव्यातिदिशन्नाह–

भवभावपरित्तीणं कालविभागं कमेणऽणुगमित्ता । भावेण समुवउत्तो एवं कुज्जऽन्तराणुगमं ॥ २६३ ॥

भवा–नारकादिजन्मलक्षणाः भावास्तु–औदयिकादयस्तेषां भवभावानां परावृत्तयो विवक्षितेभ्यस्तेभ्योऽन्यत्र गतिलक्षणास्तासां भवभावपरावृत्तीनां कालद्वाराद्यभिहितं कालविभागं विविक्तम्–असंकीर्णं कालस्वरूपमागमोक्तक्रमेणानुगम्य–ज्ञात्वा 'भावेन' मनःपरिणामेन समुपयुक्तः–एकाग्रो भूत्वा एव–पूर्वोक्तानुसारेण प्रागनुक्तस्यापि जीवगतभावस्य कुर्यात्, किमित्याह–अन्तरानुयोगम्–अन्तरकालव्याख्यानम्, इदमुक्तं भवति–विवक्षितभवाद्भवान्तरे गमनलक्षणा विवक्षितभावाच्च भावान्तरे संक्रमणस्वरूपा परावृत्तिर्यावता कालेन भवति तं कालविभागं ज्ञात्वा उपलक्षणत्वाल्लेश्यावेदकषायज्ञानदर्शनादिपरावृत्तीनां च कालस्वरूपमागमानुसारेणावगम्य पूर्वमनुक्तानामपि पदार्थानामुक्तानुसारेण सुबुद्धिः सिद्धान्तपरिकर्मितात्मा कश्चिदन्तरस्य विरहकालस्य व्याख्यानं विदध्यादिति गाथार्थः ॥ २६३ ॥ तदेवं चिन्तितं जीवानाश्रित्यान्तरं, साम्प्रतं तद्विपक्षभूतानामजीवानां तच्चिन्तयितुमाह–

**परमाणू दव्वाणं दुपएसाईणमेव खंधाणं । समओ अणंतकालोत्ति अंतरं नत्थि सेसाणं ॥ २६४ ॥**

'परमाणू दव्वाणं' ति एकैकविशकलितपुद्गलरूपाणां परमाणुद्रव्याणां जघन्यतः समय उत्कर्षतस्त्वसंख्येयः कालोऽन्तरमिति शेषः, इदमत्र हृदयम्-यदा एकाकी परमाणुः कश्चिदन्येन परमाणुद्व्यणुकत्र्यणुकादिना द्रव्येण सह समयमेकं संयुज्य पुनरप्येकाकिपरमाणुतां प्रतिपद्यते तदा परमाणोः पुनः परमाणुत्वभवने जघन्यतः समयोऽन्तरं भवति, यदा तु स एव परमाणुस्तेन परमाण्वादिनाऽन्यद्रव्येण सह संयुक्तोऽसंख्येयं कालं स्थित्वा पुनः परमाणुत्वमश्नुते तदोत्कृष्टतोऽसंख्येयः कालोऽन्तरं भवति, उक्तश्च-" परमाणुस्स णं भंते ! अंतरं कालओ केच्चिरं होइ ?, गोयमा ! जहण्णेणं एक्कं समयं उक्कोसेणं असंखेज्जं कालं " ति, 'दुपएसाईणमेवे' त्यादि द्वौ प्रदेशौ-परमाणुद्वयलक्षणौ यस्मिन्नसौ द्विप्रदेशः स्कन्धः स आदिर्येषां त्रिप्रदेशादीनां ते द्विप्रदेशादयस्तेषां द्विप्रदेशादीनां स्कन्धानां जघन्यतः समय उत्कृष्टतस्त्वनन्तः कालोऽन्तरं भवति, इदमुक्तं भवति-इह विवक्षितेन केनापि द्विप्रदेशादिस्कन्धेनैकेन खण्डशः स्फुटित्वा द्रव्यान्तरेण वा संयुज्य परित्यक्ते द्विप्रदेशादिभावे विश्रसापरिणामेन समयादूर्ध्वं पुनः प्राप्ते च तस्मिन्नेकस्य द्विप्रदेशादिस्कन्धस्य परित्यक्ततत्परिणामस्य पुनस्तदवाप्तौ जघन्यतः समयोऽन्तरं प्राप्यते, यदा तु स एव द्विप्रदेशादिस्कन्धः खण्डशो विभिद्य द्रव्यान्तरैः सह संयोगवियोगादिभावमनुभवन्ननन्तं कालं परिभ्रम्य पुनरपि तैरेव परमाणुभिस्तमेव विवक्षितभावमासादयति तदोत्कृष्टतोऽनन्तः कालोऽन्तरे सिद्धो भवति, अन्ये त्वध्याहारमकृत्वा परमाणुद्रव्याणामप्युत्कृष्टतोऽनन्तमेव कालमन्तरे व्याचक्षते, तच्चायुक्तमेव, परमाणोः पुनः परमाणुत्वभवने व्याख्याप्रज्ञप्त्यादिष्वागमे-

परमाण्वादिषु विरह कालः

मेष्वनेकेषु स्थानेषूत्कृष्टान्तरेऽसङ्ख्येयस्यैव कालस्य प्रतिपादितत्वादिति, 'नत्थि सेसाण' ति उक्तात् पुद्गलास्तिकायात् शेषाणां धर्माधर्माकाशास्तिकायकालस्वरूपाणामजीवानां नास्त्यन्तरकालः, स्वरूपपरित्यागपुनस्तल्लाभयोरेतेष्वसम्भवात्, न हि स कश्चित्कालोऽस्ति यत्र धर्मास्तिकायादयो निजस्वरूपमपहाय पुनः कालान्तरेण तत् प्रतिपद्यन्ते येनान्तरकालश्चिन्त्येत, अनाद्यपर्यवसितपरिणामिकभावेन तेषां सर्वदैवावस्थितत्वादिति भाव इति गाथार्थः ॥ २६४ ॥ तदेवं चिन्तितं यथासम्भवमजीवानामप्यन्तरं, तथा च सति जीवानजीवांश्चाश्रित्य समर्थिताऽन्तरकालचिन्ता, तत्समर्थने च षष्ठमन्तरद्वारं समाप्तमिति ॥ अथ 'संतपयपरूवणया दव्वपमाणं चे' त्यादिगाथोक्तद्वारक्रमायातं सप्तमं भावद्वारमभिधित्सुराह—

उवसम खइओ मीसो उदओ परिणाम सन्निवाओ य । छद्धा जीवसमासो परिणामुदओ अजीवाण ॥२६५॥

इह सूत्रस्य सूचामात्रत्वादेकदेशेन च समुदायस्य गम्यमानत्वाद् 'उवसमे' त्यादिना सिद्धान्तपठिता औपशमिकादयः षड् भावा निर्दिष्टा इति प्रतिपत्तव्यम्, तद्यथा- औपशमिकः १ क्षायिकः २ मिश्रः क्षायोपशमिकः ३ औदयिकः ४ पारिणामिकः ५ सान्निपातिकः ६, तत्रोपशमनमुपशमः- कर्मणोऽनुदयाक्षीणतावस्था भस्मपटलावच्छन्नाग्निवत् स एवौपशमिकः तेन वा निर्वृत्त औपशमिकः, क्षयः- कर्मणोऽपगमः स एव तेन वा निर्वृत्तः क्षायिकः, कर्मणो यथोक्तौ क्षयोपशमावेव ताभ्यां वा निर्वृत्तः क्षायोपशमिकः दरविध्यातभस्मच्छन्नवह्निवत्, ज्ञानावरणादिकर्मणामात्मीयात्मीयस्वरूपेण विपाकतोऽनुभवनमुदयः स एव तेन वा निर्वृत्त औदयिकः, तेन २ रूपेण वस्तूनां परिणमनं-भवनं परिणामः स एव तेन वा निर्वृत्तः पारिणामिकः, एषामेव निर्दिष्टभावानां ॥२८१॥

द्व्यादिमेलकः सन्निपातः स एव तेन वा निर्वृत्तः सान्निपातिकः, एते षडप्यागमे भावा इत्युच्यन्ते तत्र विशिष्टहेतुभिः स्वभावतो वा जीवाजीवानां तत्तद्रूपतया भवनानि भावाः भवन्ति एभिरिति वा भावाः, तदेवमेतान् षड् भावान् स्वरूपतो निरूप्य जीवसमासेषु तत्सम्भवमुपदर्शयन्नाह- ' छद्धा जीवसमासो'त्ति मिथ्यादृष्ट्यादिकश्चतुर्दशविधोऽपि प्रस्तुतो जीवसमासः प्रक्रान्तभावषट्क-सम्बन्धात् षोढा भवति, एते प्रस्तुताः षडपि भावा जीवानां प्राप्यन्त इति भावः, अजीवानां तर्हि कियन्तोऽमी लभ्यंते इत्याह- ' परिणामुदओ अजीवाणं'ति अजीवानां -शरीरधर्मास्तिकायादीनामौदयिकः पारिणामिकश्च भावो भवति, नौपशमिकादय इति भावः, तत्राजीवानामौदयिको भाव औदारिकादिशरीरेषु नामकर्मोदयादिजनितः सुरूपकुरूपतादिको भावनीयः, अन्ये तूदय एवौदयिक इति व्युत्पत्तेर्ज्ञानावरणादिकर्मलक्षणेष्वजीवेष्वौदयिकं भावमुपवर्णयन्ति, विपाकतोऽनुभवलक्षणस्योदयस्य जीवे कर्मणि च स्थितत्वादिति गाथार्थः ॥ २६५ ॥ आह- ननु य एते औपशमिकादयो भावा जीवानामुक्तास्तेषां मध्ये को भावः कस्मिन् कर्मणि भवतीत्याह--

**उदईओ उवसमिओ खइओ मीसो य मोहजा भावा । उवसमरहिया घाइसु होंति उ सेसाइं ओदइए ॥२६६॥**

औदयिकौपशमिकक्षायिकक्षायोपशमिकलक्षणाश्चत्वारो भावा मोहनीयकर्मणि जाता मोहजा भवन्ति, मिथ्यात्वादिभेदभिन्ने मोहनीये कर्मणि एते चत्वारोऽपि भावा भवन्तीत्यर्थः, यो यस्मिन् सति भवति स तस्माज्जात इत्यपि व्यपदिश्यत एव, यथा रोगादौ सति जीवादिषूत्पन्ना भ्रान्त्यादयः, ज्ञानादिगुणं हन्तुं शीलं येषां तानि घातीनि-ज्ञानावरणादिकर्माणि चत्वारि, एतेषु न

मध्ये मोहनीयस्योक्तत्वादिह शेषाणि त्रीण्येव गम्यन्ते, अतस्तेषु ज्ञानदर्शनावरणान्तरायलक्षणेषु त्रिषु घातिकर्म्मस्वौपशमिकवर्ज्या एत एवौदयिकक्षायिकक्षायोपशमिकलक्षणा समनन्तरोक्तास्त्रयो भावा भवन्ति, औपशमिकस्तु मोहनीय वर्जयित्वा शेषकर्म्मसु न गम्मतव्येन, "मोहस्सेवोवसमो" इति वचनादिति, 'होंति उ सेसाइ ओदइए' त्ति विभक्तिव्यत्ययादुक्तशेषेषु तु भवोपग्राहिषु वेदनीयायुर्नामगोत्रलक्षणेषु चतुर्षु कर्मस्वौदयिको भावो भवति, न शेषा इत्यर्थ, आह- ननु क्षायिके भावे एतान्यपि वर्त्तन्त एव, शैलेश्यवस्थादिष्वेतेषामपि क्षयसम्भवादन्यत्रोक्तत्वाच्च, यदाह "मोहस्सेवोवसमो खाओवसमो चउण्ह घाईण। खयपरिणामिय उदया अट्ठण्हवि हुति कम्माण ॥ १ ॥" ति, सत्य, किन्तु यथा ज्ञानावरणादीना क्षये विशिष्टा केवलज्ञानादिका लब्धय प्रादुर्भवन्ति, नैवमेतेषां क्षये काचिद्विशिष्टा लब्धिरुद्भवन्ती समये समाकर्ण्यते, एका तु सिद्धत्वलब्धि सत्यपि न विवक्षिता, एकत्वादेवेति, अत एतेष्वेषां क्षायिको भावोऽत्र नाभिधित्सित, औदयिकस्त्वभिहित, प्रस्तुतकर्मोदये वेदनादीना व्यक्तानामेवोपलम्भादिति, अपरस्त्वाह-ननु कर्मणा विपाकतोऽनुभवलक्षण प्रागुदय प्रतिपादित, स च जीवस्यैव सम्भवति, न कर्मणा, तेषां विपाकानुभवस्याभावात्, तत् कथमेतान्यौदयिके भावे वर्त्तन्त इति?, उच्यते, हन्त! विस्मरणशीलोऽसि यतोऽनन्तरमेवोक्त विपाकानुभवलक्षणस्योदयस्यानुभवितरि जीवेऽनुभवनीये कर्मणि च स्थितत्वादन्यतराभावेऽपि तस्याभावादिति, सत्य, न किञ्चिद्विरुद्धं, किन्त्वनेन न्यायेन कर्माण्याश्रित्यौपशमिकादयोऽपि भावा अजीवानामपि प्राप्नुवन्ति, उपशमादीनामपि तत्कर्त्तरि जीवे उपशमनीयादिके च कर्मणि स्थितत्वादिति, सत्यमेतत्, किन्तु विवक्षाप्रधानत्वात् सूत्रप्रवृत्तीनामौदयिकपारिणामिकावेव

भावौ अजीवानां विवक्षितौ, न त्वनया युक्त्या सम्भवन्तोऽप्यौपशमिकादय इत्यदोषः, अत एव च तत् केषांचिदेव मतं न सर्वेषां, कैश्चिदेकस्यैव पारिणामिकभावस्याजीवेष्वभ्युपगतत्वादिति, भवत्वेवं, तथापि प्रस्तुतगाथायां पारिणामिको भावः कर्मणां कस्मान्नोक्तो, न च परिणामस्तेषां नास्ति, " सयपरिणामिय उदया अट्ठण्हवि होंति कम्माणं " इत्यादिवचनादन्यत्राभिहितत्वात् समस्तवस्तुस्तोमव्यापकत्वेन परिणामस्य जैनैरभ्युपगतत्वाच्चेति, साधूक्तं, किन्तु कर्मणामौदयिक एवोत्कटो भावो न पारिणामिकः, तस्य न्यग्भूतत्वाद्, उत्कटस्यैव चेह विवक्षितत्वादित्यलं विस्तरेणेति गाथार्थः ॥ २६६ ॥ साम्प्रतं क्षायिकादिभावजन्यान् लब्धिविशेषान् विभागतो दर्शयन्नाह—

**केवलिय नाणदंसण खाइयसम्मं च चरणदाणाई । नव खइया लद्धीओ उवसमिए सम्म चरणं च ॥ २६७ ॥**

केवलज्ञानं केवलदर्शनं तथा 'खाइयसम्मं च'त्यादि, क्षायिकसम्यक्त्वं, क्षायिकचारित्रं तच्चान्तरायकर्मक्षयसमुद्भूता दानलब्धिः आदिशब्दाल्लाभभोगोपभोगवीर्यलब्धिपरिग्रहः, ततश्चैताः केवलज्ञानादिका नव लब्धयः क्षायिक्यः-क्षायिकभावसमुद्भूता भवन्ति, तथाहि-केवलज्ञानं केवलदर्शनं च निजनिजावरणक्षय एवोपजायते, क्षायिकसम्यक्त्वमपि दर्शनमोहसप्तकक्षये, क्षायिकचारित्रमपि चारित्रमोहक्षये, क्षायिकदानादिलब्धयस्तु पञ्चापि पञ्चविधान्तरायक्षय एवोपजायन्त इति क्षायिकत्वमेतासामिति, 'उवसमिए सम्मचरणं च' त्ति इह सम्यक्त्वचरणयोरनुक्तमप्यौपशमिकत्वविशेषणं व्याख्यानतो द्रष्टव्यं, सर्वसम्यक्त्वचारित्रयोरौपशमिकभाववृत्त्ययोगात्, ततश्चौपशमिकसम्यक्त्वमौपशमिकचारित्रं चौपशमिक भाव एव वर्त्तते, न शेषेषु, औपशमिकं हि सम्यक्त्वं

दर्शनसप्तके चारित्रं तु चारित्रमोहनीये उपशान्ते सम्भवति, अत औपशमिकभावर्वात्तत्वमनयोरिति गाथार्थः ॥२६७॥ अथ क्षायोपशमिकभावर्वात्तनो लब्धिविशेषाननुपदर्शयन्नाह—

नाणा चउ अण्णाणा तिन्नि उ दंसणतिगं च गिहिधम्मो । वेयय चउ चारित्तं दाणाइग मिस्सगा भावा ॥ २६८ ॥

'मिस्सगा भाव त्ति, एते ज्ञानादयो भावा-जीवपर्याया मिश्रं क्षायोपशमिकं भावं गच्छन्ति-कारणत्वेनाश्रयन्तीति मिश्रगा क्षायोपशमिका भवन्ति, तथाहि मतिश्रुतावधिमनःपर्यायलक्षणानि चत्वारि ज्ञानानि मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानरूपाणि च त्रीण्यज्ञानानि यथास्वमावारकस्य मतिज्ञानावरणादिकर्मणः क्षयोपशम एव भवन्ति, 'दंसणतिगं च'त्ति चक्षुरचक्षुरवधिदर्शनत्रिकं चक्षुर्दर्शनावरणादिक्षयोपशमे, गृहिधर्मो देशविरतिरूपः, सोऽप्यप्रत्याख्यानावरणकषायमोहनीयक्षयोपशमे, 'वेयय-' त्ति वेद्यन्ते विपाकानुभवेन सम्यक्त्वपुञ्जपुद्गला यत्र तद्वेदकं क्षायोपशमिकं सम्यक्त्वं, तदपि दर्शनसप्तकक्षयोपशमे, 'चउ चारित्तं' ति, सामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिकसूक्ष्मसम्परायलक्षणं चारित्रचतुष्कं तु चारित्रमोहनीयक्षयोपशमे, 'दाणाइग' त्ति दानादिकास्तु पञ्च लब्धयोऽन्तरायकर्मक्षयोपशमे भवन्ति, आह-ननु दानादिलब्धयः पूर्वं क्षायिक्यः प्रोक्ता इह तु क्षायोपशमिक्य इति कथं न विरोधः?, नैतदेवम्, अभिप्रायापरिज्ञानाद्, दानादिलब्धयो हि द्विविधा भवन्ति-अन्तरायकर्मणः क्षयसम्भविन्यः क्षयोपशमसम्भविन्यश्च, तत्र पूर्वं याः क्षायिक्योऽभिहितास्ताः क्षयसम्भविन्यः केवलिन एव भवन्ति, यास्त्विह क्षायोपशमिक्यः प्रोच्यन्ते ताः क्षयोपशमभाविन्यश्छद्मस्थानामेव अवगन्तव्या इत्येवममी सर्वेऽपि प्रस्तुता भावाः क्षायोपशमिका भवन्तीति गाथार्थः ॥ २६८ ॥ अथौदयिकभावजन्यान् पारिणामिकभाववर्त्तिनश्च जीवधर्मान् दिदर्शयिषुराह—

**गइकायवेयलेसा कसाय अन्नाण अजय अस्सण्णी । मिच्छाहारे उदया जियभवियरियत्तियसहावो ॥२६१॥**

' उदय'त्ति एते सर्वेऽपि गत्यादयो जीवपर्यायाः उदयाः—नरकगतिनामादिकर्मोदयजन्यत्वात् , कार्ये कारणोपचाराद् यथेदं मे शरीरं पौराणं कर्मेत्यादि, ततश्च सर्वेऽप्यमी गत्यादयो जीवपर्याया औदयिकभाववर्त्तिन इति तात्पर्यं, तथाहि—योऽयं नारकत्वतिर्यक्त्वमनुष्यत्वदेवत्वलक्षणो गतिपर्यायो जीवे प्रादुरस्ति स नरकगत्यादिनामकर्मोदय एव भवति, ' काय'त्ति पृथ्वीकायिकत्वाप्कायिकत्वादिपर्यायोऽपि गतिजातिशरीरप्रत्येकस्थावरादिनामोदये सम्भवति, ' वेय ' त्ति स्त्रीवेदादिवेदत्रयं स्त्रीवेदपुरुषवेदनपुंसकवेदमोहनीयकर्मोदये, लेश्यापट्कं तु येषां मते कषायनिष्यन्दो लेश्यास्तदभिप्रायेण कषायमोहनीयकर्मोदये येषां तु योगपरिणामो लेश्यास्तन्मतेन तु योगत्रिकजनककर्मोदये, अन्ये तु मन्यन्ते--यथा संसारस्थत्वमसिद्धत्वं वा समुदितकर्माष्टकोदये भवति तथा लेश्यापट्कमपि, कषायास्तु क्रोधादयः कषायमोहनीयकर्मोदये, अज्ञानमपि विपर्यस्तबोधरूपं मत्यज्ञानादिकं ज्ञानावरणमिथ्यात्वमोहनीयकर्मोदये, यत्तु पूर्वमस्यैव मत्याद्यज्ञानस्य क्षायोपशमिकत्वमुक्तं तद्वस्त्ववबोधमात्रापेक्षया, सर्वमपि हि वस्त्ववबोधमात्रं विपर्यस्तमविपर्यस्तं वा ज्ञानावरणीयकर्म्मक्षयोपशम एव भवति, यत्पुनस्तस्यैव विपर्यासलक्षणमज्ञानत्वं तज्ज्ञानावरणमिथ्यात्वमोहनीयकर्मोदय एव सम्पद्यत इत्येकस्यैवाज्ञानस्य क्षायोपशमिकत्वमौदयिकत्वं च न विरुद्ध्यत इति, एवमन्यत्रापि विरोधपरिहारः कर्त्तव्य इति, अयतत्वम्--अविरतत्वं तदप्यप्रत्याख्यानावरणकषायोदये समुपजायते, असंज्ञित्वं तु मनोऽपर्याप्तिनामकर्मोदये ज्ञानावरणाद्युदये च समुदेति, मिथ्यादृष्टित्वं तु मिथ्यात्वमोहनीयोदये, आहारकत्वं तु बुभुक्षावेदनीयाहारपर्याप्त्यादि-

कर्मोदये सम्पद्यत इत्येव यथास्वकर्मोदयजन्यत्वादमी गत्यादयो जीवपर्याया॰ सर्वेऽप्यौदयिका । आह–यद्येव तर्हि निद्रापचक-वेदनाहास्यरत्यरत्यादयोऽसिद्धत्वससारस्थत्वादयश्चापरेऽपि कर्मोदयजन्या पर्याया जीवेषु बहव सन्ति, तेऽपि कस्मादिह नोक्ता ?, 'सत्यम्' उपलक्षणमात्रत्वादमीषा सम्भविनोऽन्येऽपि द्रष्टव्या इति । पारिणामिकभावमाह–' जिये ' त्यादि, जीवत्व भव्यत्व इतरच्च–अभव्यत्व, जीवस्य स्वभावः अनादिकालात् प्रवृत्त, आत्मगत स्वरूप अनादिपारिणामिको भाव इत्यर्थ इति गाथार्थ. ॥ २६९ ॥ अत्राह–ननु दर्शिता मोहजत्वादिरूपेण केवलज्ञानादिकार्यदर्शनद्वारेण च औदयिकादय पच भावा॰, षष्ठस्तु सान्निपातिको भावो य आदौ जीवानामस्तित्वेनोक्त स कार्यादिदर्शनद्वारेण क्वापि न प्रोक्त., सत्य, किन्तु यद्यौदयिकादिभावपच-कव्यतिरिक्तोऽसौ भवेत्तदा तस्य कार्याद्यपि भिन्न दर्शेत, एतच्च नास्ति, औदयिकादिभावद्व्यादिसयोगेनैव तस्यागमे निर्दिष्ट-त्वात्, तथाहि-औदयिकादिभावपचकस्य दश द्विकसयोगा भवन्ति, दशैव च त्रिकसयोगा, पच चतु.सयोगा, एकस्तु पच-कसयोग इत्येव प्ररूपणामात्रेण षड्विंशतिभङ्गनिष्पन्न सान्निपातिको भावो भवति, परमार्थतस्त्वेतेषां मध्ये जीवेषु षडेव भङ्गा प्राप्यन्ते, शेषास्तु विंशति प्ररूपणामात्रेणैव सति, न पुन क्वापि लभ्यन्ते, तत्र दशसु द्विकसंयोगेषु मध्ये क्षायिकपारिणामिक-भावद्वयनिष्पन्नो नवमो भगक सिद्धानां सम्भवति, क्षायिकस्य सम्यक्त्वादेः पारिणामिकस्य तु जीवत्वस्य तेषु भावात्, शेषास्तु नवद्विकयोगभगका प्ररूपणामात्रम्, अन्येषां हि ससारिजीवानामौदयिकी गति क्षायोपशमिक ज्ञानादिक पारिणामिक तु जीवत्वमित्यादिभावत्रय जघन्यतोऽपि लभ्यत इति कथ तेषु द्विकयोगसम्भव? इति भाव, त्रिकसयोगेष्वपि दशसु मध्ये औदयिक-क्षायिकपारिणामिकभावत्रयनिष्पन्न पचमो भग॰ केवलिन॰ सम्भवति, तथाहि–औदयिकी मनुष्यगति क्षायिकाणि केवलज्ञाना-

दीनि पारिणामिकं तु जीवत्वमित्येते त्रयो भावास्तस्य सम्भवन्ति, औपशमिकस्त्विह नास्ति, मोहनीयाश्रयत्वेन तस्योक्तत्वात्, मोहनीयस्य च केवलिन्यसम्भवात्, तथा क्षायोपशमिकभावोऽत्रापास्य एव, क्षायोपशमिकज्ञानादेरस्यासम्भवात्, तस्मात् पारिशेष्याद्यथोक्तभावत्रयनिष्पन्न एव पंचमो भंगः केवलिनः सम्भवति, षष्ठस्त्वौदयिकक्षायोपशमिकपारिणामिकभावत्रयात्मको नारकादिगतिचतुष्टयेऽपि प्राप्यते, तथाहि—औदयिकी अन्यतरा गतिः क्षायोपशमिकं ज्ञानादिकं पारिणामिकं तु जीवत्वमित्येतद्भावत्रयं सर्वास्वपि गतिषु जीवानां लभ्यते, शेषास्त्वष्टौ त्रिकयोगाः प्ररूपणामात्रं, क्वाप्यसम्भवादिति, चतुष्कसंयोगेष्वपि पंचसु मध्ये औदयिकौपशमिकक्षायोपशमिकपारिणामिकभावचतुष्टयनिर्वर्त्तितस्तृतीयो भंगश्चतसृष्वपि गतिषु सम्भवति, तत्र भावत्रयभावना पूर्वोक्तैव, औपशमिकं तु सम्यक्त्वं प्रथमसम्यक्त्वलाभादिकाले भावनीयम्, एवमौदयिकक्षायिकक्षायोपशमिकपारिणामिकभावचतुष्टयनिष्पन्नश्चतुर्थभंगोऽपि सर्वासु गतिषु सम्भवति, तत्रापि भावत्रयभावना सैव, क्षायिकं तु सम्यक्त्वमवगन्तव्यं, शेषास्तु त्रयश्चतुःसंयोगाः प्ररूपणामात्रमसम्भवादिति, एकस्तु पंचकसंयोगो यः क्षायिकसम्यग्दृष्टिः सन्नुपशमश्रेणीं प्रतिपद्यते तस्य सम्भवति, नान्यत्र, समुदितभावपंचकस्यास्य तत्रैव भावादिति । तदेवमेको द्विसंयोगभंगको द्वौ द्वौ त्रिकचतुष्कसंयोगभंगकावेकस्तु पंचकसंयोगभंगक इत्येते षड् भंगका अत्र सम्भविनः प्रतिपादिताः, शेषास्तु विंशतिः संयोगोत्थानमात्रतयैव प्ररूपिता इति स्थितं, सम्भविषु च षट्सु भंगकेषु मध्ये एकस्त्रिकसंयोगभंगको द्वौ पुनश्चतुष्कसंयोगभंगकावित्येते त्रयोऽपि प्रत्येकं चतसृष्वपि गतिषु सम्भवन्तीति निर्णीतम्, अतो गतिचतुष्टयभेदात्ते किल द्वादश विवक्ष्यन्ते, शेषास्तु द्विकयोगत्रिकयोगपंचकयोगलक्षणास्त्रयो भंगाः सिद्धकेवल्युपशान्तमोहानामेव यथाक्रमं निश्चिता इत्येकैकस्थानवर्त्तित्वादेते त्रय एवेत्यन्यया विवक्षयाऽयं सान्निपातिको भावः स्था-

नान्तरे पन्चदशविध' प्रोक्तो द्रष्टव्य , तदुक्तम्-' अविरुद्धसन्निवाइयभेया एमेते पन्नरस ' त्ति, तदेवमौदयिकादिभावपचकसयोगसाध्यत्वात् कार्यादिदर्शनद्वारेण पृथगसाविह नोक्त इत्यल विस्तरेण, प्रकृतमुच्यते ॥ २६९ ॥ पूर्वं जीवानां षडपि भावाः सम्भवन्तीति यदुक्त तद्दर्शित, यत् पुनरुक्तम् ' परिणामुदओ अजीवाण ' ति तदुपदर्शयन्नाह—

धम्माधम्मागासा कालोत्ति य पारिणामिओ भावो। खधा देस पण्सा अणू य परिणाम उदए य ॥ २७० ॥

धर्माधर्माकाशास्तिकाया' कालश्च पारिणामिको भाव , अनादिपारिणामिके भावेऽमी वर्त्तन्ते इत्यर्थ', अनादिकालादारम्य जीवपुद्गलाना गतिस्थित्युपष्टम्भावगाहदानपरिणामेन समयावलिकादिपरिणामेन चैपा परिणतत्वादिति, तथा स्कन्धा द्व्यणुकादयोऽनन्ताणुकस्कन्धपर्यन्ता देशाः तेषामेव स्थूलावयवाः प्रदेशास्त्वेषामेव सूक्ष्मतरावयवा अणवस्त्वेकाकिपरमाणव इत्येव चतुर्विधोऽपि पुद्गलास्तिकाय' पारिणामिके औदयिके च भावे वर्त्तते, द्व्यणुकादिस्कन्धानां सादिकालात् तेन२ रूपेण परिणामात् मेर्वादिस्कन्धाना त्वनादिकालात् तेन २ स्वभावेन परिणामादिति, आह-ननु भवत्वेव सादिपारिणामिकेऽनादिपारिणामिके वा भावे पुद्गलास्तिकायस्य वृत्ति , औदयिके तु भावे कथमसौ वर्त्तते ?, कर्मणां विपाकानुभावो ह्युदय , स एव तेन वा निर्वृत्त औदयिक इति प्राग् व्याख्यात, न चैतत् सामान्येन पुद्गलास्तिकायस्य सम्भवति, सत्य, किन्तु वर्णगन्धरसादीनां तु पुद्गलास्तिकायेऽप्यस्त्युदयोऽत. स एव तेन वा निर्वृत्त औदयिक इत्यनया विवक्षयाऽस्याप्यौदयिकभाववृत्तित्व न विरुध्यते, पूर्वविवक्षा त्विह नापेक्षितैवेत्यदोष इति गाथार्थ ॥ २७० ॥ तदेव जीवाजीवाना यथासम्भव दर्शिता षडपि भावा , तथा च सति सप्तम भावद्वार समाप्तमिति। साम्प्रत ' सतपयपरूवणया दव्वपमाण चे ' त्यादिगाथाभिहितमल्पबहुत्वलक्षणमष्टम द्वारमभिधित्सुराह—

**थोवा नरा नरेहिं य असंखगुणिया हवंति नेरइया । तत्तो सुरा सुरेहि य सिद्धाणंता तओ तिरिया ॥ २७१ ॥**

शेषगतिसम्बन्धिजीवापेक्षया मनुष्यगतिवर्त्तिनो मनुष्यास्तावत् सर्वेभ्योऽपि स्तोकाः, अर्द्धतृतीयद्वीपसमुद्रमात्रवर्तित्वात्तेषां, तेभ्योऽप्यसंख्यातगुणिता नारका भवन्ति, रत्नप्रभादिसप्तपृथ्वीभावित्वादेकैकस्यां च पृथिव्यामसंख्येयानां तेषां सद्भावात्, तेभ्यो-ऽपि चासंख्येयगुणिताः सर्वेऽपि सुराः, भवनपतिव्यन्तरज्योतिष्केषु द्वादशसु देवलोकेषु नवसु ग्रैवेयकेषु पञ्चसु चानुत्तरविमानेषु तेषां सद्भावात्, महादण्डके तथैव पठितत्वाच्चेति, तेभ्योऽप्यनन्तगुणाः सिद्धाः, कालस्यानन्तत्वात् षण्मासान्ते च कस्यचिदवश्यं सिद्धिगमनात् तत्प्राप्तस्य च पुनरावृत्त्यभावात्, तेभ्योऽपि च तिर्यंचोऽनन्तगुणाः, अनन्तेनापि कालेनैकनिगोदानन्तभागवर्त्तिजी-वराशेः सिद्धत्वात्, तिर्यग्गतौ चासंख्येयनिगोदसद्भावात्, प्रतिनिगोदं च सिद्धानन्तगुणजीवराशिभावादिति गाथार्थः ॥ २७१ ॥

अथ तिर्यगादिगतिवर्त्तिनीनां स्त्रीणां तत्प्रसंगतोऽन्येषां च नारकादीनामल्पबहुत्वमाह--

**थोवा य मणुस्सीओ नरनरयतिरिक्खिओ असंखगुणा । सुरदेवी संखगुणा सिद्धा तिरिया अणंतगुणा ॥२७२॥**

पूर्वोक्तयुक्तित एव सर्वस्तोकास्तावन्मनुष्यस्त्रियः, 'नरास्तु' मनुष्यास्तेभ्यः, असंख्येयगुणा इति सर्वत्र सम्बध्यते, आह-ननु स्थानान्तरे मनुष्येभ्यो मानुष्य एव सप्तविंशतिगुणाः सप्तविंशतिरूपाधिकाः प्रोक्ताः, यदाह- "तिगुणा तिरूवअहिया तिरिया-णं इत्थिया मुणेयव्वा । सत्तावीसगुणा पुण मणुयाणं तदहिया चेव ॥१॥ बत्तीसगुणा बत्तीसरूव अहिया य तह य देवाणं । देवीओ पण्णत्ता जिणेहिं जियरागदोसेहिं ॥२॥" इह तु कथं ताभ्यो मनुष्या एवासंख्येयगुणाः?, सत्यं, किन्तु गर्भजनरापेक्षया

नार्योऽन्यत्र बह्वय प्रोक्ता, इह तु सम्मूर्च्छजमनुष्यापेक्षया ताभ्यस्तेषामसख्येयगुणत्व, सम्मूर्च्छजमनुष्याणामसख्यातत्वात् मनुष्यीणा तु सख्यातत्वादित्यदोप, नरेभ्योऽपि पूर्वोक्तयुक्तितोऽसख्येयगुणा नारका, तेभ्योऽपि तिरश्चोऽसख्येयगुणा, महादण्डके हि नारकेभ्योऽसख्येयगुणास्तिर्यक्पुरुषा पठ्यन्ते तद्योषितस्तु तेभ्यस्त्रिगुणास्त्रिरूपाधिका इति युक्त तासां नारकापेक्षयाऽसख्येयगुणत्वम्, एताभ्योऽपि सुरा –सामान्येन देवा सख्यातगुणा, महादण्डके तथैव पठितत्वात्, तेभ्योऽपि देव्य सख्येयगुणा, देवेभ्यस्तासां द्वात्रिंशद्गुणाना द्वात्रिंशद्रूपाधिकानां च पठितत्वात्, ताभ्योऽपि पूर्वाभिहितयुक्तितोऽनन्तगुणा सिद्धा, तेभ्योऽप्युक्तन्यायात्तिर्यंचोऽनन्तगुणा इति गाथार्थ ॥२७२॥ अथ नरकादिगतिष्वेव नारकादीना स्वस्थान एवाल्पबहुत्वमुपदर्शयन्नाह–

**थोवा य तमतमाए कमसो घम्मतया असखगुणा। थोवा तिरिक्खपज्जत्तऽसख तिरिया अणतगुणा ॥ २७३ ॥**

तमस्तमायां सप्तमनरकपृथिव्या नारका शेपनरकपृथ्वीनारकेभ्य: स्तोका:, तेभ्य षष्ठपृथ्वीनारकास्त्वसख्येयगुणा:, तेभ्योऽपि पचमपृथिव्यामसख्येयगुणा, एव क्रमेण तावन्नेय यावद् घर्मान्ता'–रत्नप्रभापृथ्वीपर्यन्ता नारका शर्कराप्रभानारकेभ्यस्तेऽसख्येयगुणा इति यावद्वक्तव्यमित्यर्थ । उक्त च नरकगतौ स्वस्थानेऽल्पबहुत्वमथ तिर्यग्गतौ तदाह स्तोकास्तिर्यग्गतौ तिरश्च', ताभ्यस्तु पर्याप्तका: पचेन्द्रियतिर्यंचोऽसख्येयगुणा:, पर्याप्तपचेन्द्रियनपुसकतिरश्चा तिर्यक्स्त्रीभ्योऽसख्येयगुणत्वेन महादण्डके पठितत्वादिति, आह- भवत्वेव, किन्तु पर्याप्ततिरश्चा पचेन्द्रियत्वविशेपणमत्र कुतो लभ्यते ?, सत्य, तिरश्च्यस्तावत् पचेद्रिया एव

भवन्ति, तत्प्रस्तावादेतेऽपि पंचेन्द्रिया एव लभ्यन्ते, असंख्येयगुणत्वाभिधानाच्च, अन्यथा पर्याप्तैकेन्द्रियादितिरश्चामनन्तत्वात्ति-रश्चीनां त्वसंख्येयत्वात्ताभ्यः सामान्येन पर्याप्ततिरश्चामनन्तगुणत्वमेव स्यादित्यलं विस्तरेण। पर्याप्तपंचेन्द्रियातिर्यग्भ्यस्तु सामान्ये-नैकेन्द्रियादितिर्यचोऽनन्तगुणा इति गाथार्थः ॥ २७३ ॥ अथ देवगतौ स्वस्थानेऽल्पबहुत्वमाह—

**थोवाणुत्तरवासी असंखगुणवड्ढी जाव सोहम्मो। भवणेसु वंतरेसु य संखेज्जगुणा य जोइसिया ॥२७४॥**

शेषदेवापेक्षया स्तोका एवानुत्तरविमानवासिनो देवाः, तेभ्यो ग्रैवेयकवर्त्तिनोऽसंख्येयगुणाः, एतेभ्योऽप्यच्युतेऽसंख्येयगुणाः ततोऽप्यारणे इतोऽपि प्राणते अस्मादप्यानते कल्पेऽसंख्येयगुणा देवाः, एवं क्रमेण प्रतिकल्पमसंख्येयगुणा वृद्धिस्तावन्नेया यावदी-शानकल्पनिवासिदेवेभ्यः सौधर्मेऽसंख्येयगुणा देवा इति प्रस्तुतग्रन्थाभिप्रायः, स चासंगत इव लक्ष्यते, यतो महादण्डकेऽनुत्तर-विमानवासिभ्य आनतकल्पं यावत् संख्यातगुणैव वृद्धिरुक्ता, माहेंद्रदेवलोकेभ्योऽपि सनत्कुमारदेवाः संख्येयगुणाः, ईशानदेवेभ्योऽपि सौधर्मे देवाः संख्येयगुणाः प्रोक्ता इति, सौधर्मदेवेभ्यो भवनेपु ये भवनपतिलक्षणा देवाः प्रतिवसन्ति तेऽसंख्येयगुणाः, एवमेतेभ्यो व्यन्तरेष्वप्यसंख्येयगुणत्वं वाच्यं, व्यन्तरसुरेभ्यस्तु ज्योतिष्कदेवाः संख्येयगुणाः, महादण्डके तथैव पठितत्वादिति गाथार्थः ॥ २७४ ॥ साम्प्रतं सामान्येनैकेन्द्रियत्वादिविशेषणविशिष्टानां जन्तूनामल्पबहुत्वमभिधित्सुराह—

**पंचिंदिया य थोवा विवज्जएण वियला विसेसहिया। तत्तो य अणंतगुणा अणिंदिएगिंदिया कमसो ॥ २७५ ॥**

द्वीन्द्रियादिजीवापेक्षया स्तोकास्तावत् पंचेंद्रियाः, तेभ्यस्तु विकलाः-द्वित्रिचतुरिन्द्रियलक्षणा विकलेन्द्रिया(विपर्ययेण)विशेषाभ्य-

धिका', इदमुक्तं भवति–पञ्चेन्द्रियेभ्यश्चतुरिन्द्रिया विशेषाधिकास्तेभ्योऽपि त्रीन्द्रिया विशेषाभ्यधिका एतेभ्योऽपि द्वीन्द्रिया विशेषोपेता इत्येवं विपर्ययेण पश्चानुपूर्व्या विकलेन्द्रिया विशेषाधिका , ' तत्तो य अणन्ते ' त्यादि, तेभ्योऽपि द्वीन्द्रियेभ्योऽनिन्द्रिया - सिद्धा अनन्तगुणा', सिद्धेभ्यस्त्वेकेन्द्रिया प्रागुक्तयुक्तित एवानन्तगुणा इति गाथार्थः ॥ २७५ ॥ अथ सामान्येनैव जन्तूनां कायविशेषणविशेषितानामल्पबहुत्वमाह–

थोवा य तसा तत्तो तेउ असंखा तओ विसेसहिया । कमसो भूदगवाऊ अकाय हरिया अणंतगुणा ॥ २७६ ॥

शेषतेन कायादिजीवापेक्षया स्तोकास्तावत् त्रसा - त्रसकायिका जीवा , एतेभ्योऽप्यसंख्येयगुणितास्तेज'कायिका , तेभ्योऽपि विशेषाधिका• क्रमेण भूप्रभृतय', इदमुक्तं भवति तेजःकायिकेभ्य पृथ्वीकायिका विशेषाधिकास्तेभ्योऽप्यप्कायिका एतेभ्योऽपि वायुकायिकाः, इत्येवं क्रमेणामीषां जन्तूनां विशेषाधिकत्वमिति, ' अकाये'त्यादि, वायुभ्योऽप्यकाया -अयोगिकेवलिसिद्धा' समुदिता एवानन्तगुणा , तेभ्योऽपि हरितकाया-वनस्पतिकायिका जीवा सामान्येनानन्तगुणा , महादण्डके तथैव पठितत्वादिति युक्ति सर्वत्र स्वयमेवाभ्यूहोति गाथार्थ ॥ २७६ ॥ अथ प्रस्तुतग्रन्थप्रक्रान्तानामेव गुणस्थानलक्षणानां जीवसमासानामल्पबहुत्वमाह—

उवसामगा य थोवा खवग जिणे अप्पमत्त इयरे य । कमसो संखेज्जगुणा देसविरय सासणेऽसंखा ॥ २७७ ॥
मिस्साऽसंखेज्जगुणा अविरयसम्मा तओ असंखगुणा । सिद्धा य अणंतगुणा तत्तो मिच्छा अणंतगुणा ॥२७८॥

इहोपशमकग्रहणेन मोहोपशमका उपशान्तमोहाश्च गृह्यन्ते, क्षपकोपादानेनापि क्षपकाः क्षीणमोहाश्च स्वीक्रियन्ते, उपलक्षणव्याख्यानात्, ततश्च सर्वस्तोका एव उपशमकाः, क्षपकास्त्वेतेभ्यः संख्येयगुणाः, एतेषां चोपशमकक्षपकाणामेतदल्पबहुत्वमुभयेषामप्युत्कृष्टपदसत्त्वे लभ्यमाने द्रष्टव्यम्, अन्यदा तूभयेऽप्यमी भवन्ति वा नवा, भवन्तोऽपि कदाचिदुपशमकाः स्तोकाः क्षपकास्तु बहवः, कदाचित्तु विपर्ययेणेति भजनैव द्रष्टव्या, क्षपकेभ्योऽपि जिनाः-भवस्थकेवलिनः संख्येयगुणाः, एतेभ्योऽप्यप्रमत्तगुणस्थानवर्त्तिनो यतयः संख्येयगुणाः, तेभ्यस्त्वितरे-प्रमत्तयतयः संख्येयगुणाः, तेभ्योऽपि देशविरताः तिर्यक्ष्वपि भावादसंख्येयगुणाः, सास्वादनास्तु कदाचित् सर्वथैव न भवन्ति, यदा तु भवन्ति तदा जघन्यपदे एको वा द्वौ वा यावदुत्कृष्टतो गतिचतुष्टयसम्भावित्वाद्देशविरतेभ्योऽसंख्येयगुणा भवन्ति, मिश्राः-सम्यग्मिथ्यादृष्टयो यदा भवन्ति तदोत्कृष्टतः सास्वादनेभ्यः संख्यातगुणा भवन्ति, तेभ्यस्तु अविरतसम्यग्दृष्टयः सर्वदैवासंख्येयगुणाः प्राप्यन्ते, एतेभ्योऽप्यनन्तगुणाः सिद्धाः, सिद्धेभ्योऽपि मिथ्यादृष्टयोऽनन्तगुणाः, सर्वनिगोदजीवानां मिथ्यादृष्टित्वादित्यादियुक्तिः सुगमैवेति गाथाद्वयार्थः ॥ २७७-२७८ ॥ साम्प्रतमेतेषामेव गुणस्थानजीवसमासानां गतिचतुष्टये प्रत्येकमल्पबहुत्वमभिधित्सुर्नारकदेवगत्योरेकवक्तव्यत्वाद्युगपदेवाह—

**सुरनरए सासाणा थोवा मीसा य संखगुणयारा । तत्तो अविरयसम्मा मिच्छा य भवे असंखगुणा ॥ २७९ ॥**

सुरेषु नारकेषु च प्रत्येकं सति सम्भवे उत्कृष्टपदवर्त्तिनोऽपि सास्वादनाः स्तोकाः, मिश्राः-सम्यग्मिथ्यादृष्टय उत्कृष्टपदभाविनः, संख्येयेन राशिना सास्वादनराशेर्गुणकारो येषां ते संख्येयगुणकाराः, संख्येयगुणा इत्यर्थः, तेभ्यस्तु-मिश्रेभ्योऽविरतसम्यग्दृष्टयोऽ-

सख्येयगुणा, तेभ्यो मिथ्यादृष्टयोऽसख्येयगुणा इति एतेषां मिथ्यादृष्टिसास्वादनमिश्राविरतलक्षणानां चतुर्णां जीवसमासानां देवनरकगत्योः पृथगल्पबहुत्वं द्रष्टव्यं, शेषाणां देशविरतादिजीवसमासानामत्रासम्भवादिति गाथार्थः॥ २७९ ॥ अथ तिर्यग्गतौ सम्भविनां जीवसमासानामल्पबहुत्वमाह—



**तिरिएसु देसविरया थोवा सासायणा असखगुणा । मीसा य सख अजया असख मिच्छा अणतगुणा ॥ २८० ॥**

तिर्यक्षु देशविरताः स्तोकाः, सास्वादनास्तु सति सम्भवे उत्कृष्टपदवर्तिनोऽसख्येयगुणा, मिश्रास्तेभ्यः सख्येयगुणाः, अविरतसम्यग्दृष्टयस्त्वेतेभ्योऽसख्येयगुणा, मिथ्यादृष्टयस्त्वमीभ्योऽनन्तगुणाः, शेषास्तु प्रमत्तादयो जीवसमासा इह न सम्भवन्त्येवेति गाथार्थ ॥ २८० ॥ अथ मनुष्यगतावल्पबहुत्वमाह—

**मणुया सखेज्जगुणा गुणीसु मिच्छा भवे असखगुणा । एव अप्पाबहुय दव्वपमाणेहि साहेज्जा ॥ २८१ ॥**

मनुष्यगतौ तावच्चतुर्दशापि गुणस्थानकानि सम्भवंति, अतो मिथ्यादृष्टीना पृथगुपात्तत्वाच्छेषेषु सास्वादनादिष्वयोगिपर्यन्तेषु त्रयोदशसु गुणिषु त्रयोदशगुणस्थानवर्तिषु जीवेषु विषये मनुष्याः परस्परतो यथासम्भव सख्येयगुणा सर्वत्र वक्तव्याः, मिथ्यादृष्टिवर्ज्यमनुष्यराशेरेव सख्येयत्वादिति भावः, मिथ्यादृष्टिमनुष्यास्त्वसख्येयगुणाः, इदमुक्त भवति—मनुष्यगतौ सति सम्भवे सर्वस्तोकास्तावदयोगिकेवलिनः, तेभ्यस्तु सम्भवमाश्रित्योत्कृष्टपदवर्तिन उपशमकाः सख्येयगुणाः, तेभ्योऽपि क्षपकाः सख्येयगुणाः, तेभ्योऽपि सयोगिकेवलिनः सख्येयगुणाः तेभ्योऽप्यप्रमत्तयतयः सख्येयगुणाः, प्रमत्तयतयस्तेभ्यः सख्येयगुणाः, देशविरतास्त्वेतेभ्यः

संख्येयगुणाः, तेभ्योऽपि अविरताः संख्येयगुणाः सास्वादनाः संख्येयगुणा मिश्राः संख्येयगुणाः, मिथ्यादृष्टयस्तु गर्भजान् सम्मूर्च्छजाँश्च मनुष्यानाश्रित्यैतेभ्योऽसंख्येयगुणाः, सास्वादनादीनि हि त्रयोदश गुणस्थानानि गर्भजानामेव मनुष्याणां सम्भवन्ति, ते च संख्याता एवेत्यतस्त्रयोदशसु गुणस्थानेषु यथासम्भवं पूर्वपूर्वापेक्षया उत्तरोत्तरे मनुष्याः सर्वत्र संख्यातगुणा एवोक्ताः, मिथ्यादृष्टिगुणस्थानके तु मिथ्यादृष्टयः सर्वमनुष्यानाश्रित्य मिश्रेभ्योऽसंख्यातगुणाः प्रोक्ता इति, तदेवं संक्षेपतो जीवसमासानामल्पबहुत्वं प्रतिपाद्योपसंजिघृक्षुरतिदेशमाह–'एव' मित्यादि, एवमुक्तानुसारेणान्यदप्यल्पबहुत्वं जीवानां प्राज्ञः सिद्धान्तपरिकर्मितमतिः साधयेत्, कैर्हेतुभूतैः ? - प्रागभिहितद्रव्यप्रमाणैः, पृथिव्यादिजीवद्रव्याणां पूर्वं प्रमाणद्वारे यान्यभिहितानि संख्याविशेषरूपाणि प्रमाणानि तैर्हेतुभूतैरित्यर्थः, इदमुक्तं भवति-प्रागभिहितानि जीवद्रव्यप्रमाणान्यवधार्य येभ्यो येषां यदल्पबहुत्वं सम्भवति तदागमाविरोधेन प्राज्ञः प्रतिपादयेदिति, तद्वयमेव सिद्धान्ताभिहितं विनेयजनानुग्रहाय किञ्चिदुपदर्शयामः–सर्वस्तोकास्तावन्मनोयोगिनो जीवाः, वाग्योगिनोऽसंख्यातगुणाः, अयोगिनोऽनन्तगुणाः, काययोगिनोऽनन्तगुणाः। सर्वस्तोकाः पुरुषवेदकाः स्त्रीवेदकाः संख्येयगुणाः अवेदकास्त्वनन्तगुणाः नपुंसकवेदकास्तेभ्योऽप्यनन्तगुणाः। स्तोका अकषायिणो मानोपयुक्तास्त्वनन्तगुणाः क्रोधोपयुक्ता विशेषाधिका मायोपयुक्ता विशेषाधिकाः लोभोपयुक्ता विशेषाधिकाः। स्तोकाः शुक्ललेश्याजीनाः पद्मलेश्याः संख्येयगुणाः तेजोलेश्याः संख्येयगुणाः अलेश्यास्त्वनन्तगुणाः कापोतलेश्यास्तेभ्योऽनन्तगुणाः नीललेश्या विशेषाधिकाः कृष्णलेश्या विशेषाधिकाः। स्तोकाः सम्यग्मिथ्यादृष्टयः सम्यग्दृष्टयोऽनन्तगुणा मिथ्यादृष्टयोऽनन्तगुणाः। मनःपर्यायज्ञानिनः स्तोकास्तेभ्योऽवधिज्ञानिनोऽसंख्येयगुणाः, आभिनिबोधिकज्ञानिनः श्रुतज्ञानिनश्च स्वस्थाने तुल्याः पूर्वेभ्यो विशेषाधिकाः, विभंगज्ञानिनोऽसंख्यातगुणाः केवलज्ञानिनोऽनन्त-

गुणा., मत्यज्ञानिन श्रुताज्ञानिनश्च स्वस्थाने तुल्याः पूर्वेभ्योऽनन्तगुणाः । अवधिदर्शनिनः स्तोका' चक्षुर्दर्शनिनोऽसख्येयगुणा' केवलदर्शनिनोऽनन्तगुणा. अचक्षुर्दर्शनिनोऽनन्तगुणाः । सर्वविरता स्तोकाः देशविरतास्त्वसख्येयगुणाः नोविरताविरताः पुनरनन्तगुणाः अविरतास्तेभ्योऽनन्तगुणा' । अनाकारोपयुक्ता' स्तोका साकारोपयुक्ता सख्यातगुणा , दर्शनोपयोगापेक्षया ज्ञानोपयोगकालस्य सख्येयगुणत्वादिति । अनाहारका स्तोका आहारकास्त्वसख्येयगुणा , अन्तर्मुहूर्त्तसमयराशिप्रमाणा हि सूक्ष्मनिगोदा' सर्वदैव विग्रहे वर्तन्ते, तेषु चैकविग्रहिकान्मुक्त्वा शेषा अनाहारका', अन्ये तु सूक्ष्मनिगोदजीवा. सर्वेऽप्याहारका इति पूर्वेभ्योऽसख्यातगुणाः। अपर्याप्तेभ्य पर्याप्ताः सख्येयगुणा', सामान्यजीवानाश्रित्यैतदवगन्तव्य, विशेषतस्तु बादरपर्याप्तेभ्यस्तदपर्याप्ताः एव असख्येयगुणा' । बादरेभ्योऽसख्येयगुणा सूक्ष्मा । अभव्या' स्तोका नोभव्यअभव्यरूपा' सिद्धास्त्वनन्तगुणा भव्या. पुनरनन्तगुणा । दिशोऽप्याश्रित्य स्तोका जीवाः पश्चिमाया दिशि, पूर्वस्यां विशेषाधिका दक्षिणस्यां विशेषाधिका., उत्तरस्या तु विशेषाधिका', बादरजीवानाश्रित्येदमल्पबहुत्व, सूक्ष्माणां सर्वास्वपि दिक्षु प्रायस्तुल्यत्वाद्, बादरेष्वपि वनस्पतय एव बहवोऽतस्तदनुरोधेनैवाल्पबहुत्व, ते च बादरवनस्पतयो यत्रोदक बहु तत्र बहवो भवन्ति, यत्र त्विदमल्प तत्राल्पा एव भवन्ति, उदक च बहु समुद्रेष्वेव प्राप्यते, प्राचीप्रतीच्योश्च समुद्राणा मध्येषु चन्द्रसूर्यद्वीपा सन्ति, यत्र च तेषामवस्थान तत्रोदकाभाव', तद्भावे च बादरवनस्पत्यभावः, पश्चिमायां दिशि पुनरप्यय विशेषो यदुत तस्या षट्सप्तत्यधिक योजनसहस्रमुच्चैस्त्वेन द्वादश योजनसहस्राणि विष्कम्भेण गौतमद्वीपोऽप्यधिक समस्ति, तदवष्टब्धे च प्रदेश जलाभावेन बादरवनस्पत्यभावादस्यां दिश्यल्पा जीवा , पूर्वस्यां तु दिशि गौतमद्वीपाभावाद्विशेषाधिका., दक्षिणस्या तु चन्द्रसूर्यद्वीपाभावाद्विशेषाधिका', उत्तरस्या तु दिशि संख्यातयोजनविस्तर-

द्वीपमध्ये संख्येययोजनकोटीकोट्य आयामविष्कम्भाभ्यां मानससरोवरमस्ति, ततोऽस्यां विशेषाधिका जीवाः, तदेवं सामान्येन जीवानां दिगाश्रितमल्पबहुत्वमभिहितं, विशेषतोऽप्यब्वनस्पतिद्वित्रिचतुरिन्द्रियतिरश्चामिदमेव प्रायोऽल्पबहुत्वकारणं, तेजोवायूनां तु मेरोः पश्चिमायां दिश्यधोलौकिकग्रामेषु बाहुल्यसद्भावाद् बहुत्वमन्यत्र त्वल्पत्वं इत्यादि सर्वमन्यत् समयसमुद्रादधिगन्तव्यम्, ऊर्ध्वाधस्तिर्यग्लोकाश्रयेण स्तोका जीवास्तिर्यग्लोके ऊर्ध्वलोके त्वसंख्येयगुणाः, क्षेत्रस्यासंख्येयगुणत्वादसंख्येयगुणाः, अधोलोके तु क्षेत्रविशेषाधिक्याद्विशेषाधिका इत्यलं विस्तरेण, तदर्थिना तु प्रज्ञापनातृतीयपदमन्वेषणीयमिति गाथार्थः ॥ २८१ ॥ तदेवमभिहितं जीवगतमल्पबहुत्वं, साम्प्रतमजीवगतं तदभिधित्सुराह—

**धम्माधम्मागासा तिन्निवि दव्वट्ठया भवे थोवा। तत्तो अणंतगुणिया पोग्गलदव्वा तओ समया ॥ २८२ ॥**

द्रव्यलक्षणोऽर्थो द्रव्यार्थस्तद्भावो द्रव्यार्थता तया द्रव्यार्थतया- द्रव्यत्वेन चिन्त्यमानानि धर्माधर्माकाशास्तिकायलक्षणानि वस्तूनि त्रीण्यपि प्रत्येकमेकैकद्रव्यत्वात् स्वस्थाने तुल्यान्युत्तरद्रव्यापेक्षया तु स्तोकानि भवन्ति, तेभ्यस्त्वनन्तगुणानि पुद्गलद्रव्याणि परमाणुद्व्यणुकत्र्यणुकान्यनन्ताणुकपर्यंतानि, तेभ्योऽपि निर्विभागकालांशरूपाः समयाः अनन्तगुणाः, तेषु हि पुद्गलद्रव्येषु मध्ये एकैकेन परमाण्वादिद्रव्येण अन्यान्यद्रव्यक्षेत्रकालभावसंयोगैरनन्ताः समयाः समनुभूतपूर्वाः एवमपरापरद्रव्यक्षेत्रकालभावसम्बन्धेनेनानन्ताः समयाः पुरस्तादप्यनुभविष्यन्त इति युक्तं पुद्गलद्रव्येभ्यः समयानामनन्तगुणत्वं, न च वक्तव्यमतीतसमयानां विनष्टत्वेन भविष्यतां चानुत्पन्नत्वेनावस्तुत्वात् वर्त्तमान एवैकः समयोऽवस्थितः, निरन्वयविनाशस्यैकान्तासत उत्पादस्य चान्यत्र न्यक्षेण निराकृतत्वादिति गाथार्थः ॥ २८२ ॥ अथ धर्मास्तिकायाद्यजीवानामेव प्रदेशार्थतयाऽल्पबहुत्वमाह-

दिक्षुजीवानामल्पबहुत्वं अजीवानां च

धम्माधम्मपएसा तुल्ला परमाणवो अणंतगुणा। समया तओ अणंता तह खपएसा अणंतगुणा ॥ २८३ ॥

धर्माधर्मास्तिकाययोः प्रदेशा प्रत्येकमसंख्येयत्वात् स्वस्थाने तुल्याः पुद्गलास्तिकायादिप्रदेशेभ्यस्तु स्तोका इति स्वयमेव द्रष्टव्य, तेभ्य समस्तपुद्गलास्तिकायप्रदेशरूपा परमाणवोऽनन्तगुणा, एकैकधर्माधर्माकाशास्तिकायप्रदेशावगाहेऽनन्तानां परमाणु-द्व्यणुकत्र्यणुकादिपुद्गलद्रव्यप्रदेशानामवगाढत्वादिति, पुद्गलद्रव्यप्रदेशेभ्यस्तु पूर्वोक्तयुक्तेरनन्तगुणा समयाः, तथा ख-लोकालोकगतमाकाश तस्य प्रदेशा निरंशा भागास्तेऽनन्तगुणास्तथैव समये दृष्टत्वादिति गाथार्थ ॥ २८३ ॥ अथैषामेव धर्मास्तिकायाद्यजीवप्रदेशाना जीवान मध्येऽधिकृत्याल्पबहुत्वमाह-

धम्माधम्मपएसेहिंतो जीवा तओ अणंतगुणा। पोग्गलसमया खंपि य पएसओ तेणऽणंतगुणा ॥ २८४ ॥

धर्माधर्मास्तिकायप्रदेशेभ्यस्ततोऽनन्तर प्रदेशतो द्रव्यतो वाऽनन्तगुणा जीवा, एकैकस्मिन्नपि निगोदे च धर्माधर्मास्तिकायप्रदेशेभ्यो जीवद्रव्याणामनन्तगुणत्वात्, किं पुनः समग्राणा ?, प्रतिजीवद्रव्य चासंख्येयत्वात् प्रदेशाना धर्माधर्मप्रदेशेभ्यो यदनन्तगुणत्व तत् सुबोधमेव, जीवास्तिकायप्रदेशेभ्यस्तु पुद्गलास्तिकायो द्रव्यतोऽप्यनन्तगुण', किं पुनः प्रदेशत ?, एकैकस्यापि जीवप्रदेशस्यानन्तानन्तै कर्मपुद्गलस्कन्धद्रव्यैरावेष्टितपरिवेष्टितत्वादिति, पुद्गलास्तिकायप्रदेशेभ्यस्त्वनन्तगुणा' समया इत्यनोक्तैव युक्ति, तेभ्योऽपि ख-लोकालोकाकाश प्रदेशतोऽनन्तगुणमिति गाथार्थ.॥२८४॥तदेवमभिहित जीवाजीवगतमल्पबहुत्व, तदभिधाने चावसितमल्पबहुत्वद्वारं, तथा च सति विचारिताः सत्पदप्ररूपणतादिभिरष्टभिरपि द्वारैर्जीवसमासाः, एव सति व्याख्याता 'संतपयपरूवणया दव्वपमाण चे' त्यादिगाथा, तत. समाप्त जीवसमासाख्य प्रकरणमिद, तत्कर्तुश्च प्रयासस्तदध्येतृश्रोतृजनप्रवृत्त्यैव सफलतामा-

सादयत्यतस्तदुत्साहनार्थं प्रकरणार्थोपयुक्तानां फलमाह-

**बहुभंगादिट्ठिवाए दिट्ठत्थाणं जिणोवइट्ठाणं । धारणपत्तट्ठो पुण जीवसमासत्थउवउत्तो ॥ २८५ ॥**

जीवसमासस्य-प्रस्तुतप्रकरणस्यार्थः-अभिधेयलक्षणस्तत्र तदध्ययनपरावर्त्तनश्रवणचिन्तनद्वारेणोपयुक्तो जीवसमासार्थोपयुक्तो जन्तुर्भवति, कथंभूत इत्याह- 'धारणपत्तट्ठो' त्ति धारणे-अवधारणे स्थिरतया चेतसि व्यवस्थापने प्राप्तार्थः-समर्थः, केपामित्याह-दृष्टाश्च तेऽर्थाश्च- जीवादयो दृष्टार्थास्तेषां, क्व दृष्टार्थानामित्याह-परिकर्मसूत्रादिभेदाद् 'बहुभंगो' बहुभेदो यो दृष्टिवादस्तस्मिन् बहुभंगदृष्टिवादे, सर्वस्मिन्नागम इत्यर्थः, दृष्टिवादादेवैकादशांगयाः समुद्धरणाद् दृष्टिवादग्रहणेन सर्वस्याप्यागमस्य संग्रहादिति, पुनरपि कथंभूतानाम् ?-अर्थतो जिनोपदिष्टानां सूत्रतस्तु गणधरकथितानां, इदमुक्तं भवति-जिनागमदृष्टानामशेषविशेषयुक्तानां जीवाद्यर्थानामविस्मृत्या धारणे स जीवः समर्थो भवति यो जीवसमासार्थ उपयुक्तो भवति, अतस्तदर्थिना तदुपयोग एव सर्वदैव यतितव्यमिति गाथार्थः ॥ २८५ ॥ जीवसमासार्थोपयुक्तानामन्यदपि फलमाह-

**एवं जीवाजीवे वित्थरभिहिए समासनिद्दिट्ठे । उवउत्तो जो गुणए तस्स मई जायए विउला ॥ २८६ ॥**

जीवाजीवान् विस्तरतः सिद्धान्तेऽभिहितान्-प्रतिपादितान् अत्र त्वेवं-पूर्वोक्तेन प्रकारेण '**समासतः**' संक्षेपतो निर्दिष्टान् 'उपयुक्तो' दत्तावधानो जीवः एतद् गुणयेत्-शृणुयात् अनुप्रेक्षेत च, तस्य विपुला-विस्तीर्णा मतिर्जायते, अयमर्थः-आगमे विस्तरोक्तान् अत्र तु पूर्वोक्तक्रमेण गाथासंक्षेपनिर्दिष्टान् सत्पदप्ररूपणतादिभावयुक्तान् जीवाजीवान् उपयुक्तो यः परिभावयेत्तस्यैतत् कुर्वतोऽभ्यासात् क्रमेणोत्तरोत्तरविशेषानासादयन्ती 'विपुला' विस्तीर्णा मतिर्जायत इति गाथार्थः ॥२८६॥ एवं प्रकरणे समर्थिते निगमिते च

' जीवा पोग्गल समया दव्व पएसा य पज्जवा चेव । थोवाइ अणताइ विसेसमहिया दुवेऽणता ॥ १ ॥

इति प्रक्षेपगाथा केषुचित् सूत्रादर्शेषु लिखिता दृश्यते, इय च पूर्वटीकाकृताऽव्याख्याताऽपि विनेयानुग्रहार्थं व्याख्यायते, तद्यथा–जीवादिपदानां स्तोकादिपदै. सह यथासख्येन सम्बन्धः, तत. पुद्गलाद्यपेक्षया स्तोकास्तावज्जीवा , तेभ्य पूर्वोक्तयुक्तित पुद्गला. सर्वेऽप्यनन्ता , अनन्तगुणा इत्यर्थ , समयास्तु तेभ्य. प्रागभिहितन्यायादेवानन्तगुणा , समयेभ्यस्तु सर्वद्रव्याणि विशेषाधिकानि, समया हि सर्वे प्रत्येक द्रव्यत्वेनैव सिद्धान्तेऽभिहिता , ततोऽन्यानि यानि जीवपुद्गलद्रव्याणि तान्येतदनन्ततमे भागे वर्तन्ते, यच्च धर्माधर्माकाशास्तिकायलक्षण द्रव्यत्रय तेषु सर्वेष्वपि द्रव्येषु समयलक्षणद्रव्यराशौ मीलितेषु यो द्रव्यराशिः सम्पद्यते स केवलसमयद्रव्यराशेर्विशेषाधिको भवतीति सुबोधमेव, सर्वद्रव्येभ्यस्तु तत्प्रदेशा अनन्तगुणा , एकस्यापि लोकालोकाकाशद्रव्यस्य सर्वद्रव्यानन्तगुणप्रदेशत्वादिति, प्रदेशेभ्यस्तु पर्याया अनन्तगुणा , एकैकस्यापि प्रदेशस्यानुगतव्यावृत्तानन्तपर्यायात्मकत्वादिति गाथार्थ ॥ १ ॥ तदेवमन्या अपि प्रक्षेपगाथा' सिद्धान्तानुसारेण व्याख्येया ॥

यद् वृत्ताविह वस्तु प्रायस्तत् समयसागराल्लिखितम् । मन्यूतिदोषदुष्ट तथापि शोध्य बुधै' सर्वम् ॥ १ ॥

जीवसमासस्यैता वृत्ति कृत्वा मयाऽपि यत् पुण्यम् । जीवादितत्त्वमवगम्य तेन शिवमाप्नुवन्तु जना ॥ २ ॥

श्रीप्रश्नवाहनकुलाम्बुनिधिप्रसूत , क्षोणीतलप्रथितकीर्त्तिरुदीर्णशाख. ।
विश्वप्रसाधितविकल्पितवस्तुरुच्चैश्छायाश्रितप्रचुरनिर्वृतभव्यजन्तु' ॥ ३ ॥

ज्ञानादिकुसुमनिचित' फलितः श्रीमान् मुनीन्द्रफलवृन्दैः । कल्पद्रुम इव गच्छ. श्रीहर्षपुरीयनामास्ति ॥ ४ ॥

एतस्मिन् गुणरत्नरोहणगिरिर्गाम्भीर्यपाथोनिधिस्तुंगत्वानुकृतक्ष्माधरपतिः सौम्यत्वतारापतिः ।
सम्यग्ज्ञानविशुद्धसंयमपतिः स्वाचारचर्यानिधिः, शान्तः श्रीजयसिंहसूरिरभवन्निःसङ्गचूडामणिः ॥ ५ ॥
रत्नाकरादिवैतस्माच्छिष्यरत्नं बभूव तत् । स वागीशोऽपि नो मन्ये, यद्गुणग्रहणे प्रभुः ॥ ६ ॥
श्रीवीरदेवविबुधैः सन्मन्त्राद्यतिशयप्रवरतोयैः । द्रुम इव यः संसिक्तः कस्तद्गुणकीर्त्तने शक्तः? ॥ ७ ॥ तथाहि—
आज्ञा यस्य नरेश्वरैरपि शिरस्यारोप्यते सादरं, यं दृष्ट्वापि मुदं व्रजन्ति परमां प्रायोऽतिदुष्टा अपि ।
यद्वक्त्राम्बुधिनिर्यदुज्ज्वलवचःपीयूषपानोद्यतैर्गीर्वाणैरिव दुग्धसिन्धुमथने तृप्तिर्न लेभे जनैः ॥ ६ ॥
कृत्वा येन तपः सुदुष्करतरं विस्तं प्रबोध्य प्रभोस्तीर्थं सर्वविदः प्रभावितमिदं तैस्तैः स्वकीयैर्गुणैः ।
शुक्लीकुर्वदशेषविश्वकुहरं भव्यैर्निबद्धस्पृहं, यस्याशास्वनिवारितं विचरति श्वेतांशुशुभ्रं यशः ॥ ७ ॥
यमुनाप्रवाहविमलश्रीमन्मुनिचन्द्रसूरिसम्पर्कात् । अमरसरितेव सकलं पवित्रितं येन भुवनतलम् ॥ ८ ॥
विस्फूर्जत्कलिकालदुस्तरतमःसन्तानलुप्तस्थितिः, सूर्येणेव विवेकभूधरशिरस्यासाद्य येनोदयम् ।
सम्यग्ज्ञानकरैश्चिरन्तनमुनिक्षुण्णः समुद्योतितो, मार्गः सोऽभयदेवसूरिरभवत्तेभ्यः प्रसिद्धो भुवि ॥ ९ ॥
तच्छिष्यलवप्रायैरवगीतार्थैरपि शिष्टजनतुष्ट्यै । श्रीहेमचन्द्रसूरिभिरियमनुरचिता प्रकृतवृत्तिः ॥ १० ॥
प्रत्यक्षरगणनया चात्र सर्वग्रन्थाग्रमनुष्टुभां षट् सहस्राणि षट्शताधिकानि सप्तविंशतिः श्लोकाः ॥ अङ्कतोऽपि ६६२७ ॥

## हर्षपुरीयमलधारश्रीमद्धेमचन्द्रसूरिसूत्रिता श्रीजीवसमासवृत्तिः सम्पूर्णा.